# संक्षेपशारीरकम् । — Part 2

## श्रीमत्सर्वज्ञमुनिविरचितम् ।

श्रीमन्नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया
टीकया सहितम् ।

---

वाराणसेयराजकीयसंस्कृतमहाविद्यालय न्यायशास्त्राध्यापकेन
न्यायव्याकरणाचार्य मीमांसाशिरोमण्युपाधिकेन
श्रीसूर्यनारायणशर्मशुक्लेन संशोधितम् ।

---

( द्वितीयो भागः )



THE

# SAMKSEPA SĀRĪRAKA

OF SARVAJÑĀTMA MUNI

WITH

# TATTVABODHINĪ

OF NRSIMHA ĀSRAMA Part 2



---

EDITED BY

SŪRYA NĀRĀYAṆA SUKLA,

NYĀYA VYĀKARAṆĀCHĀRYA,

Professor, Govt. Sanskrit College, Benares.



अस्यैव तत्त्वविनिवेदनशक्तिभाजः
संसारमूलविनिवृत्तिफलप्रसूतौ।
सामर्थ्यमस्ति पटुभिः परिबृंहितत्वा-
द्वेदान्तभूमिगतपञ्चविधार्थवादैः॥ २५९॥

अस्यैवेति। तत्त्वविनिवेदनशक्तिभाजः ब्रह्मात्मैक्यलक्षणतत्त्वप्रतिपादनसामर्थ्ययुक्तस्य अस्यैव तत्त्वमादिवाक्यस्यैव संसारमूलविनिवृत्तिफलप्रसूतौ ज्ञानद्वाराऽविद्यानिवृत्त्याख्यफलोत्पत्तौ सामर्थ्यमस्ति न निषेधवाक्यस्यात्र पूर्वोक्तहेतुमभिप्रेत्य वाक्यविशेषणमुक्तं तत्त्वेत्यादिना। अपूर्वं हेतुमाह—पटुभिरित्यादिना। वेदान्तादवगतवक्ष्यमाणसृष्ट्यादिपञ्चविधार्थवादैस्तत्त्वप्रतिपादनसमर्थैरूपबृंहितत्वादुपोद्बलितत्वादित्यर्थः॥ २५९॥

के तेऽर्थवादाः कथं वा ते तत्त्वमादिवाक्यस्यैव सहकारिणः इत्याकाङ्क्षायामाह—

सृष्टिस्थितिप्रलयसंयमनप्रवेश-
व्यापारजातकथनच्छलतः प्रवृत्तैः।
सानुग्रहादवगतिः खलु तत्त्वमादे-
र्वाक्यात्परस्य घटते न ततोऽपरस्मात्॥ २६०॥

सृष्टीति। सृष्टिश्च स्थितिश्च प्रलयश्च संयमनं च प्रवेशश्च ते तथा त एव व्यापारास्तेषां जातं समूहः तस्य कथनमभिधानं तदैक्यतत्त्वप्रतिपादनं छलं व्याजो द्वारं तस्मादित्यर्थः। प्रवृत्तेरिति हेतौ पञ्चमी वेदान्तानामिति शेषः। उक्तरूपव्यापारजातकथनच्छलतो वेदान्तानां प्रवृत्तेः सानुग्रहात्तत्त्वमादेर्वाक्यात्खलु परस्य ब्रह्मणोऽवगतिरिति सम्बन्धः। संयमनशब्देन नियमनं प्रशासनमभिधीयते

अनुग्रह-उपकारः। खलु शब्दोऽवधारणे तद्व्यावर्त्यमाह-न तत इति। तत्त्वमादेरपरस्माद्वाक्यान्न फलवद्ब्रह्मावगतिर्भवतीत्यर्थः। अयम्भावः—यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तत्सृष्ट्वा तदेवानुप्रविशत्। एतस्य वाक्षरस्य प्रशासने गार्गीत्येवमादिवेदान्ता जीवपरैक्यबोधानुकूलत्वेनैव सृष्ट्याद्यर्थान्वदन्ति न तु स्वप्रधानतया तत्र प्रयोजनाभावादर्थवादश्च प्रधानवाक्यशेष एवार्थावादयुक्तमेव च विधिवाक्यमिति मीमांसास्थितिः। तत्र सृष्ट्यादिवाक्यानि निषेधवाक्येनैकवाक्यत्वमापद्य स्वार्थं समर्पयन्ति किं वा तत्त्वमादिवाक्येनेति विषये। वयं तु पश्यामः। तत्त्वमादिवाक्येन सहैवेति तस्यैव ब्रह्मात्मैक्यबोधकस्य एतत्प्रयुक्तोपकाराद्वैतसंभावनायुक्ततयैतदपेक्षत्वादपेक्षाप्रयुक्तत्वाच्चान्वयस्य निषेधवाक्यस्य च निषेधमात्रप्रतिपादकतया तदनुकूलसृष्ट्याद्याकाङ्क्षारहितत्त्वान्न हि सृष्ट्यादिवाक्यमद्वितीयत्वमात्रप्रतिपत्त्युपयुक्तार्थमिव निषेधापेक्षितमेवार्थं बोधयति तथात्वे प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायापातात्। ननु प्रतियोगिप्रसक्तिं विना निषेधायोगात्तदर्थमेव तद्बोधयतीति चेन्न अद्वितीयब्रह्मप्रतिपत्त्यर्थप्रपञ्चसम्बन्धमादायापि तन्निषेधोपपत्तेः। मृदादिदृष्टान्तेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनवैयर्थ्यप्रसङ्गादनेन जीवेनेति परस्य जीवाभेदोपपादनवैयर्थ्यापाताद्रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति श्रुत्या सृष्टेरद्वितीयब्रह्मप्रतिपत्त्यर्थत्वेन विनियुक्तत्वाच्च। सृष्ट्यर्थवादमात्रस्य निषेधशेषत्वेपि प्रलयाद्यर्थवादस्य तच्छेषत्वाभावाच्चेति निषेधवाक्यस्य न कश्चिदपि तत्कृतोपकारः। अद्वितीयब्रह्मप्रतिपादकवाक्ये तु स्वार्थोपपत्तिबुद्धिजनकतयाऽर्थवादवाक्यकृतोपकारो महानित्यस्त्येव तदपेक्षया तदेकवाक्यत्वमित्यर्थवादयुक्तत्वादिदमेव प्रधानवाक्यमिति ॥ २६० ॥

सूत्रकारस्याप्येतदेव सम्मतमित्याह—

**सूत्रं तत्तु समन्वयादिति विधिव्यापारनिष्ठं वचो**
**मोक्षायेति निवेदनाय कृतवान्वेदान्तवेदी मुनिः।**
**न्यायेनाऽऽकलयन्नशेषवचनव्यापारमूरीकृत-**
**स्वातन्त्र्यः सकलेऽपि वेदशिरसि स्वैरं चरन्नीश्वरः॥२६१॥**

सूत्रमिति। वेदान्तवेदी वेदार्थविन्मुनिर्विधिरूपेण प्रवर्त्तमानं तत्त्वमादिवचनमेव मोक्षसाधनज्ञानजननाय पर्याप्तमिति निवेदनायास्मान् ज्ञापयितुं तत्तु समन्वयादिति सूत्रं कृतवानित्यर्थः। सूत्रकारस्य वेदार्थवित्त्वे हेतुः - मुनिरिति। मननसम्पन्न इत्यर्थः। न केवलं मननसम्पत्तिः किन्तु तद्धेतुश्रवणसम्पत्तिरपीत्याह न्यायेनेति। न्यायस्तु वर्णितः। अविशेषवचनव्यापारं—विधिनिषेधात्मकवचनव्यापारम्। ननु सूत्रप्रणयनात् प्राक्कथं तस्य श्रवणादिसम्पत्तिरिति चेन्न—प्रमाणप्रमेयविषयन्यायानामनादिसिद्धत्वात्तस्य च परमेश्वरावतारात्मकस्य स्वतः सर्वज्ञतया स्वत एव न्यायाकलनसम्भवादित्यभिप्रेत्याह— ईश्वर इति। अत एवोरीकृतस्वातन्त्र्यः स्वतन्त्रस्तत एव वेदार्थनिर्णयन्यायेऽप्यस्य स्वेच्छासंचारः—परिज्ञानमित्यर्थः। न च सूत्रकारस्य परमेश्वरावतारत्वे प्रमाणाभावः। द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिरिति स्मृतेः। सूत्रकारो हि तत्तु समन्वयादिति समन्वयप्रतिपाद्यत्वं ब्रह्मणो दर्शयति। समन्वयत्वं च तत्त्वमादिवाक्यस्यैव एकार्थवृत्तित्वान्निषेधवाक्यस्य तु न समन्वयत्वमस्ति। तत्स्थपदानां भिन्नार्थत्वात्। अत्र कश्चिज्जल्पति अबाधितान्वयः समन्वयः न तु समानाधिकरणान्वय इति तदसत्समिति विशेषणस्य वैयर्थ्यापत्तेः। सर्वस्यापि वेदान्तान्वयस्याबाधितत्वात्तस्मात्समानाधिकरणवाक्यप्रतिपाद्यत्वं ब्रह्मणो वदन् सूत्रकारस्तत्त्वमादिवाक्यप्रतिपाद्यमेव ब्रह्मेति मेन इति गम्यत इति भावः॥ २६१॥

किं च सूत्रकारेण तत्त्वंपदार्थशोधनप्रस्तावे 'प्रकृतैतावत्त्वं हि

प्रतिषेधति ततो ब्रवीति च भूय' इत्यादिना मुखत एव नेति नेति वाक्यस्य तत्पदार्थशोधकत्वसूचनान्नात्र विवदितव्यमित्याह—

**वाक्यार्थान्वयि तत्पदार्थकथने नेतीति वाक्यं पुनः**
**साक्षात्सूचयति स्म सूत्रकृदतस्तत्तत्परं निश्चितम् ।**
**एवं हस्ततलार्पितामलकवत्तात्पर्यसंवेदने**
**सत्यन्यादृगुदीरयन्ति यदि तत्क्षन्तुं कथं शक्नुमः ॥२६२॥**

वाक्यार्थेति । वाक्यार्थान्वयितत्पदार्थकथने तत्त्वमादिवाक्यप्रतिपाद्याखण्डब्रह्मप्रतिपत्त्युपयुक्ततत्पदलक्ष्यार्थकथने साक्षादभिधावृत्त्या यत एवं सूचयति ततस्तन्निषेधवाक्यं तत्परं शोधिततत्पदार्थपरं न वाक्यार्थपरमिति निश्चितमिति सम्बन्धः । तस्य सूत्रस्य पदार्थशोधनप्रायपाठात्तद्वाक्यस्य च निषेधमात्रे व्यापारदर्शनात्सूत्रकारेण च 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति तत्त्वमादिवाक्यैरीश्वर आत्मेत्येव ज्ञातव्यो वक्तव्यश्चेति स्ववचनेनात्मज्ञानसाधनत्वे तत्त्वमादिवाक्यस्य संसूचनान्निषेधवाक्यं पदार्थपरं तत्त्वमादिवाक्यमेव वाक्यार्थपरमिति सूत्रकारस्याप्यभिप्राय इति ततः कथं निषेधवाक्यमेव प्रधानमितिवचनं प्रमाणं स्यादित्याह—एवमिति । तात्पर्यसंवेदने सति सूत्रकारस्येति शेषः ॥ २६२ ॥

ननु निषेधवाक्यस्य तत्त्वमादिवाक्यशेषत्वे कस्तत्कृतोपकारः, ननूक्तपदार्थशोधनमिति चेन्न—तस्य सत्यज्ञानादिवाक्यैरेव तत्स्वरूपसिद्धयर्थमवश्यापेक्षितैः सिद्धत्वादित्याशङ्क्याह—

**सत्यं ज्ञानमनन्तमित्यभिहिते सम्भावना नीयते**
**नास्थूलादिवचः समुद्भवधिया द्वैतोपमर्दं विना ।**
**तेनावान्तरवाक्यलक्ष्यविषयां बुद्धिं दृढीकुर्वता**
**सर्वद्वैतनिषेधकेन वचसा वाक्यार्थधीर्जन्यते ॥२६३॥**

सत्यं ज्ञानमिति । सत्यज्ञानादिवाक्यैः सत्यज्ञानानन्दानन्तात्मकं ब्रह्मेति प्रतिपादिते तस्य त्रिविधपरिच्छेदाभावोपलक्षितस्वरूपवाक्यार्थस्याभिधानमस्थूलादिवचसा स्पष्टं निखिलपरिच्छेदोपमर्दं विना दृश्यत्वादिन्यायसहायेन तेन सर्वस्य प्रपञ्चस्य तात्त्विकत्वनिषेधं विना सम्भावना नानीयते—अयमवान्तरवाक्यार्थ इत्थमेवेति निश्चयो न जायत इत्यर्थः । असम्भावनेति वा छेदः । अत्रैतस्यभिधानस्यासम्भावना न नीयते न दूरीक्रियत इत्यर्थः । ततः किमिति तत्राह तेनेति । येन स्थूलादिवाक्यं विनाऽवान्तरवाक्यार्थसम्भावना नास्ति तेनावान्तरवाक्यलक्ष्यविषयां सत्यज्ञानानन्दानन्तात्मकं ब्रह्मेति बुद्धिं स्पष्टं प्रपञ्चनिषेधेन निश्चलां कुर्वता सर्वद्वैतनिषेधकेन वचसा सहितेन सत्यादिवचसा महावाक्यार्थस्वरूपभूतसत्यादिवाक्यार्थबुद्धिर्जायत इत्यर्थः । निषेधवचनार्थावगमात्पूर्वं हि भेदप्रपञ्चदर्शनेनासम्भावनादिना कलुषीक्रियमाणैव सत्यादिवाक्याद्बुद्धिरुपजायते । तस्यां च कलुषीकृतायां तदुपजीविमहावाक्यमपि न स्वार्थे दृढमवबोधयितुमर्हति । पदार्थनिश्चयं विना वाक्यार्थनिश्चयानुपपत्तेः यदा पुनरस्थूलादिवाक्यसमुपजातधिषणया विस्पष्टं द्वैतनिषेधो भवति । तदा सत्यादिलक्ष्यार्थबुद्धिस्तदेकाकारा भवति । ततश्च महावाक्यबुद्धिरपि सुस्था भवति । तथा च सत्यादिवाक्यैस्तत्त्वंपदार्थशोधनेपि तदर्थदृढीकरणार्थत्वान्निषेधवाक्यस्य न वैयर्थ्यमिति भावः ॥ २६३ ॥

तत्त्वमादिवाक्यस्यैव निःशेषानर्थविरोधिब्रह्मात्मैक्यबोधकत्वात्तत्त्वमादिवाक्येनैव शोधितपदार्थद्वयवादाय वाक्यार्थमवगच्छेतिप्रकृतविचारफलमाह—

**अस्थूलादिवचोनिरस्तनिखिलद्वैतप्रपञ्चं परं**

**जाग्रत्स्वप्नसुषुप्तिवर्जितमिदं प्रत्यक्स्वरूपं तथा ।**

**एकीकृत्य परस्परेण पदयोरर्थद्वयं तत्त्वतः**
**प्रत्यक् चाद्वयमद्वयं च तदिति प्रेक्षस्व निःसंशयम् ।२६४।**

अस्थूलादीति । अस्थूलादीत्यनेन तत्पदलक्ष्यं दर्शयति — जाग्रदित्यादिना । त्वं पदलक्ष्यं यथा तत्पदलक्ष्यं परं निष्प्रपञ्चं तथा त्वंपदलक्ष्यमपि जाग्रदाद्यवस्थात्रयशून्यं तवद्भासि साक्षिचैतन्यं प्रत्यक्स्वरूपमित्यर्थः । पदयोस्तत्त्वंपदयोरर्थद्वयं परस्परेणान्योन्यमेकीकृत्य निःसंशयं प्रेक्षस्वेति सम्बन्धः । एकीकरणप्रकारमेवाह— प्रत्यगित्यादिना । प्रत्यगेवाद्वयमद्वयमेव प्रत्यगित्यर्थः ॥ २६४ ॥

ननु लोके लक्ष्यपदार्थौ द्विविधो दृष्टः । परोक्षोऽपरोक्षश्च तद्वत्र तत्वंपदाभ्यां कतरल्लक्ष्यमित्याकाङ्क्षायां यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर इत्यादिश्रुतिप्रतिपन्नात्मनः परोक्षत्वानुपपत्तेः— अपरोक्षद्वयानुभव एव लक्ष्य इत्याह—

**अद्वैतं परिशोधितं भगवतो विष्णोः परं यत्पदं**
**तच्छब्देन समर्पितं परिगृहीतादेयमात्मप्रभम् ।**
**यच्चोपाधिविवर्जितं तव निजं साक्षात्स्वरूपं तयो-**
**रेकत्वं परिवर्जितव्यवधिकं प्रत्यक्षमीक्षस्व भोः ॥ २६५ ॥**

अद्वैतमिति । अथवा— निःसंशयं प्रेक्षस्वेत्युक्तं तत्र पुनरपि शिष्यो विरुद्धधर्ममादाय संशयाविष्टो माभूदिति कृपयोक्तमेवार्थं शब्दान्तरेणाह अद्वैतमिति । परिहृतानादेयं परिहृतः परिवर्जितः पारोक्ष्याद्यनादेयो हेयांशो यस्मिन्पदे तदित्यर्थः । उपाधिविवर्जितमुपाधिनाऽवस्थानादिना रहितमपरोक्षचैतन्यस्वरूपं पारोक्ष्यादिपरित्यागादेव परिवर्जितव्यवधिकम् । अथवा व्यवधिर्भेदः—किञ्चिद्भेदेनापि शून्यमित्यर्थः । अनेन चैतन्याकारेण सत्ताकारेण वा भिन्नयोरप्यभेद इति पक्षो निरस्तः । प्रत्यक्षमपरोक्षं यथा भवति तथेत्यर्थः ॥ २६५ ॥

नन्वीक्षस्वेत्युक्त्या मम ब्रह्मात्मभावः प्रत्यक्षयोग्य इत्युक्तं तदनुपपन्नं तद्विपरीतरूपस्यैव प्रत्यक्षतोऽनुभवाद्वादिभिस्तथैवाङ्गीकाराच्च आत्मनो रूपादिहीनस्य चक्षुराद्ययोग्यत्वाच्चेत्याशङ्कय सत्यं दुःखादिकमपरोक्षमनुभूयते, तेन चेदं तव रूपं त्वत्स्वरूपत्वमनुभवमात्रं तत्साक्षीत्युक्तं वाद्यङ्गीकारस्तु निर्मूल एव । नचेक्षस्वेत्यनेन चक्षुषा-तदीक्षणं विवक्षितम् । किन्त्वपरोक्षत्वमात्रम् । न चापरोक्षज्ञानं चक्षुषैवेति नियमः । शब्दादपि तदुत्पत्तेरुपपादितत्वादित्यभिप्रेत्याह—

अनृतजडविभक्तदुःखतुच्छा
सहनवपुः परमं पदं मुरारेः ।
परिहृतसकलप्रपञ्चमात्मा
तव तदवेहि तमो निरस्य वाक्यात् ॥ २६६ ॥

अनृतजडेति । अनृतसद्विलक्षणं जडं ज्ञानत्वानधिकरणं विभक्तं परस्परं भिन्नं कार्यमिति यावत् । दुःखं कर्तृत्वसुखित्वदुःखित्वादियुक्तं तुच्छं शून्यमभावप्रतियोगि वा एतेषामसहनमेतद्विरुद्धं वपुः स्वस्वरूपं यस्य पदस्य तत्तथा तमोऽसम्भावनादिकं तवात्मानृतजडादिविरुद्धं निरस्तनिखिलजगत्कारणत्वादिप्रपञ्चं मुरारेः परमं पदमिति तदात्मनोऽखण्डस्वरूपमुक्तार्थेऽसम्भावनादिकं निरस्य तत्त्वमादिवाक्यादवेहीत्यर्थः ॥ २६६ ॥

इदानीमुक्तार्थस्यातिसूक्ष्मतयाऽश्रद्धालुचेतःसमारोहानर्हत्वाच्छ्रद्धाया विद्याङ्गत्वस्य श्रुतिसिद्धत्वाच्च, त्वयाप्युक्तार्थे श्रद्धैव कर्त्तव्या । तथा सति विद्यापरिपाकः स्वयमेव भविष्यतीत्यभिप्रेत्याह—

श्रद्धत्स्व सौम्येति हि शास्ति शास्त्रं
श्रद्धाधनत्वश्रुतिरस्ति चान्या ।

श्रद्धा तु यस्येत्यरं च वाक्य-

मधीयते संशयकुत्सनाय ॥ २६७ ॥

श्रद्धत्स्वेति । हि यस्माच्छास्त्रं श्रुति श्रद्धत्स्व सौम्येति श्रद्धां विद्याङ्गत्वेन विधत्ते । तस्माच्छ्रद्धावित्तो भूत्वेति संशयकुत्सनाय निराकरणयान्या काचिच्छ्रद्धाधनत्वश्रुतिरप्यस्ति । यस्माच्च संशयनिवृत्तये 'श्रद्धा तु यस्येति' यस्य स्याच्छ्रद्धा न विचिकित्सास्तीति किञ्चिद्वाक्यमभिधीयते तस्माच्छ्रद्धाछ्रया विद्याङ्गत्वात्सा त्वयावश्यमुपासनीया तथा सत्यश्रद्धा मूलसंशयः स्वयमेव गमिष्यतीति भावः ॥ २६७ ॥

ननु कोऽयं प्रद्वेषो भगवत्याः श्रुतेः संशये यन्मूलनाय श्रद्धां विधत्त इत्याशङ्क्य स्वप्रदेयसकलपुरुषार्थविघातकत्वात्तत्र प्रद्वेष इत्याह—

अज्ञो विनश्यति पुमानतिमूढभावा-

दश्रद्धयोपहतबुद्धिरतोऽपि कष्टः ।

कष्टाच्च कष्टतर एव तु संशयात्मा

दुःखी सदेति भगवानपि वासुदेवः ॥ २६८ ॥

अज्ञ इति । स्वस्वरूपमविद्वानिह जगति अज्ञः पुमान् विनश्यति— संसारात्संसारं प्राप्नोति । न तु कदाचिन्मोक्ष्यत इत्यर्थः । अज्ञोपि कथंचिच्छ्रद्धालुश्चेन्महत्सेवया तत्त्वं प्रतिपत्स्यते । अश्रद्धालुस्तु विवेकयोग्योप्यश्रद्धया विवेकाभावान्न तथेत्याह—मूढभावादिति । हेयोपादेयदृढतरविवेकहीनत्वात् । अथवा अज्ञस्यैव विनाशे हेतुः— मूढभावादिति । उक्तविवेकचतुरोपि कर्मश्रद्धयात्राश्रद्धालुरतोपि कष्टस्तदपेक्षया बहुलं संसारान्धकूपे पततीत्यर्थः । अज्ञाश्रद्दधानयोस्तत्त्वप्रतीत्यभावेन मोक्षाभावेपि कर्मानुष्ठानसंभवात्तत्कृतस्वर्गादिः पुरुषार्थो भवति । संदिहानस्तु ब्रह्मविन्मानितया कर्मापि परित्यजति । ब्रह्म च न निर्वि-

चिकित्सं वेत्ति अतोयमुभयविधपुरुषार्थाभ्रष्टः केवलमनर्थभागेव भवतीत्याह—कष्टाश्चेति। कष्टादश्चज्ञोऽपि कष्टतरः अतिशयेन कष्टः अर्थसिद्धमस्याज्ञात्कष्टतमत्वं स क इत्यत्राह—संशयात्मेति। संशय आत्मविषय आत्मन्यन्तःकरणे यस्य स तथा स्वस्वरूपं श्रुत्याचार्यप्रसादप्राप्तमपि संदिहानः संसारात्संसारान्तरमेव प्राप्नोतीत्यर्थः। अस्मिन्नर्थे भगवत्सम्मतिमाह—दुःखी सदेत्यादिना। वासुदेवः परमात्मा आहेति शेषः। 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति। नायं लोकोऽस्ति न परो न सुखं संशयात्मन' इति भगवद्वचनमप्येतदेव दर्शयतीत्यर्थः। अतोऽश्रद्धानिराकरणपूर्वकं संशयं निरस्यास्मदुक्तार्थश्रद्धामेव कुर्वित्यर्थः॥ २६८॥

ननु कथमत्र श्रद्धा विधीयते सा ह्यभिलाषाकालिकेच्छाविशेषो गुर्वादिवाक्यप्रामाण्यबुद्धिनिबन्धनः न तु प्रामाण्यबुद्धिरेवेच्छा च फले तत्साधने वा भवति, न च वाक्यार्थज्ञानं स्वतः फलं फलसाधनत्वेपि तस्यान्यस्य यागादेः सत्त्वात्कथमत्रैव सा भवेत्, न च तस्य फलस्यानित्यत्वेन तत्र सा न स्यादिति वाच्यम्—मुक्तेरपि साध्यतयाऽनित्यत्वादिति चेन्न—प्रागभाववतो हि साध्यत्वम् न च मुक्तिप्रागभावोऽस्ति। तस्या जीवपराभेदरूपत्वात्तस्य च सदातनत्वादित्याह—

रूपं तावकमुज्झितद्वयमभूदद्वैतमेवाञ्जसा
तच्चाद्वैतमपास्य मोहजनितं पारोक्ष्यमात्मा ह्यभूत्।
एवं वेदशिरःपदान्वयवशादेकत्वमेकान्ततः
सिद्धं प्रत्यगनन्तयोरिति तव श्रेयः समाप्तिं गतम्॥२६९॥

रूपमिति। उज्झितद्वयं निरस्तप्रपञ्चं शोधितं त्वत्स्वरूपमद्वैतं ब्रह्मैवाञ्जसा सम्यगभूत् तच्चाद्वैतं परोक्षमिव प्रतीयमानमपि मोहजनित-

पारोक्ष्यं विहायात्मा ह्यभूदात्मैवाभूदित्यर्थः। अतो मुक्तेरेवानाद्यनन्तानन्दरूपायाः परमपुरुषार्थरूपत्वात्तत्रैव श्रद्धा युक्तेत्याह—एवं वेदेति। उक्तप्रकारेण वेदान्तवाक्यात्प्रत्यगात्मपरमात्मनोरत्यन्तमेकत्वं सिद्धमवगतमितिकृत्वा तव श्रेयः समाप्तिं गतं परमपुरुषार्थस्त्वया प्राप्तो भवति। ब्रह्मविद्यैकलभ्यं ब्रह्मात्मैक्यं हि श्रेयसां परा काष्ठा 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः 'आत्मलाभान्न परं विद्यते' इति श्रुतिस्मृतिभ्यां तथैवावगमात्ततोऽत्र श्रद्धोचिता नान्यत्रेति भावः॥ २६९॥

एवं तत्त्वमादिवाक्यमेव फलवदर्थप्रमितिजनकतया प्रधानं पदद्वयलक्षणयाऽखण्डार्थप्रमितिजनकमित्युक्तं तत्र वाक्यस्याखण्डार्थत्वे लौकिकान्युदाहरणानि बहून्युक्तानि। उपपत्तयश्च वर्णिताः। इदानीं पुनरप्यखण्डवाक्यार्थस्यातिसूक्ष्मदृग्वेद्यतया तत्र मन्दानां वैशेषिकादिकुतर्कवासनावासितचित्तानां चाविश्वासो माभूदिति कृपया वाद्युपगमेनापि वाक्यस्याखण्डार्थत्वं दर्शयितुमादौ प्राभाकरमतेन वाक्यस्याखण्डार्थत्वमाह—

शब्दो गकार इति लौकिकमस्ति वाक्यं
विस्पष्टमस्ति च पदद्वयमत्र वाक्ये।
प्राभाकरे च समये न गकारमात्रा-
दन्यत्पदद्वयनिगद्यमभीष्टमस्मिन्॥ २७०॥

शब्द इति। ततः किं तत्राह-प्रभाकरे इत्यादि निगद्यं वाच्यम्। अस्मिन् 'शब्दो गकार' इति वाक्ये॥ २७०॥

नन्वस्मिन् प्रयोगे शब्दपदाच्छब्दत्ववैशिष्ट्यस्य गकारपदाद्गत्ववैशिष्ट्यस्य च प्रतिपाद्यमानत्वात्कथमखण्डार्थता तत्राह—

शब्दत्वजातिवचनो न हि शब्दशब्दः
श्रोत्रोपलम्भनतया तु निबन्धनेन।
वर्णान्ब्रवीति न हि जातिरिहाभ्युपेता
साक्षाद्गकारमयमाह गकारशब्दः॥ २७१॥

शब्दत्वेति। शब्द इति शब्दः शब्दशब्दः शब्दत्वजातिवचनो न शब्दत्वजातिं न वदति तर्हि पर्यायतापत्तिरित्याशङ्क्य प्रवृत्तिनिमित्तभेदमाह—श्रोत्रेति। श्रोत्रमुपलम्भनमुपलब्धिसाधनं यस्य तस्य भावास्तत्ता तया श्रोत्रग्राह्यत्वेनेत्यर्थः। शब्दशब्दः श्रोत्रग्राह्यत्वाख्यनिबन्धनेन प्रवृत्तिनिमित्तेन वर्णान्ब्रवीति। अयं च धर्मस्तटस्थ एव प्रवृत्तिनिमित्तं गशब्दस्य च स्वरूपमात्रं प्रवृत्तिनिमित्तमतो न पर्यायत्वं नाप्यखण्डार्थत्वक्षतिरिति भावः। उपाधितो लाघवाज्जातिरेव प्रवृत्तिनिमित्तं भवत्विति तत्राह—न हीति। इह गकारादिशब्देषु प्राभाकरैर्हि शब्दत्वजातिर्नाभ्युपेता। तत्र प्रमाणाभावादनुगतव्यवहारस्य श्रोत्रग्राह्यत्वादितटस्थैकोपाधिक्रोडीकृतगकारादिशब्दमादायापि सम्भवादित्यर्थः। ननु माभूच्छब्दत्वजातिः गत्वादिजातिवैशिष्ट्यं तु ततः प्रतीयादित्याशङ्क्य गकारव्यक्तेरेकत्वान्न तत्र जातिरुपाधिर्वास्तीत्याह—साक्षादिति। अव्यवधानेन न सामान्यव्यवधानेनेत्यर्थः॥२७१॥

अतः प्राभाकररीत्याऽखण्डवाक्यार्थः सिद्ध इत्याह—

तस्मादखण्डविषये वचने विवादं
प्राभाकराः परिहरन्तु न चेदशक्यम्।
निर्वोढुमेतदिह वाक्यमितोऽन्यथा चेद्-
स्यार्थकल्पनमभीप्सितमिष्टहानिः॥ २७२॥

तस्मादखण्डविषय इति। यतस्तन्मतेपि शब्दो गकार इत्येतदखण्डार्थनिष्ठं तस्मात्तेनाखण्डार्थतानङ्गीकारे बाधकमाह—न चेदिति। यद्यखण्डार्थविषयं विवादं न प्राभाकराः परित्यजेयुः। तर्हि तन्मते एतत् 'शब्दो गकार' इति वाक्यं निबोद्धुमुपपादयितुमशक्यम्। ननु किमित्यशक्यम्, जातिद्वयवैशिष्ट्यबोधमाश्रित्याखण्डार्थत्वं विनापि वाक्यार्थस्योपपादयितुं शक्यत्वात्तर्हि वृश्चिकभयात्पलायमानस्यापसिद्धान्ताख्याशीविषमुखनिपात इत्याह—इतोऽन्यथेति। अस्य प्रकृतवाक्यस्य इतोऽस्मादुक्तगकारव्यक्तिमात्रादन्यथा प्रकारान्तरेण जातिसंसर्गरूपेणार्थकल्पनमभीप्सितं चेद्भवतामिष्टहानिरभ्युपगतहानिरित्यर्थः॥ २७२॥

वैशेषिकरीत्यापि वाक्यस्याखण्डार्थत्वमाह—

**सम्बन्धः समवाय इत्यपि पदे वैशेषिकोच्चारिते**
**नाखण्डव्यक्तिरिक्तवस्तु वदितुं शक्तेऽनवस्थाभयात्।**
**पञ्चानां समवायितेति वचनव्याघातभीतेरपि**
**सम्बन्धान्तरमस्य नाभिमनुते वैशेषिकः कातरः॥ २७३॥**

सम्बन्ध इति। सम्बध्यत इति सम्बन्धः सम्बन्धविशिष्ट इति यावत्। 'सम्बन्धः समवाय' इत्येते पदेऽखण्डव्यतिरिक्तं वस्तु वदितुं शक्ते न भवतः। कुतो न शक्ते तत्राह—अनवस्थाभयादिति। समवायस्यापि सम्बन्धान्तरवैशिष्ट्याङ्गीकारेऽनवस्थाभयजातेन वैशेषिकेण सम्बन्ध इति पदस्य समवायस्वरूपमात्रपरत्वस्याङ्गीकारादित्यर्थः। शक्तेऽनवस्थाभयादित्यत्र सन्धिः संज्ञापूर्वकविधेः प्रकृतिभावस्यानित्यत्वाद् द्रष्टव्यः। न केवलं सम्बन्धान्तरस्वीकारे ऽनवस्था किन्त्वपसिद्धान्तोपीत्याह-पञ्चानामिति। अवयवावयविगुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशेषनित्यद्रव्याणामेव समवायः सम्बन्धः न समवायाभावयोरिति

स्ववचनमपि पराहतं स्यादिति कातरश्च यतो वैशेषिकोऽस्य समवायस्य समवायान्तरं न स्वीकरोति, नापि सम्बन्धान्तरं तदभावादित्यर्थः । अत्र यद्यपर्यायत्वनिर्वाहाय सम्बन्धपदेन प्रतीयमानविशिष्टप्रत्ययविषयत्वरूपोपाधिकः कश्चिद्धर्मः प्रवृत्तिनिमित्तमित्यङ्गीकुरुषे काममङ्गीकुरुष्व । न चैतावता वाक्यमखण्डार्थं न भवति । तस्य शब्दार्थान्तर्भावाभावात् । न चैवमुपस्थितिवैलक्षण्याभावे शब्दान्वयो न स्यादिति वाच्यम् । विषयभेदभावेपि सम्बन्धत्वसमवाय्यत्वाकारेण प्रतीतिवैलक्षण्यस्य सत्त्वादिति भावः ॥ २७३ ॥

सकलन्यायवित्पाणिनिनाप्यखण्डार्थस्य स्वीकृतत्वादत्र सर्वैरपि विवादस्त्याज्य इति येनायं स्मरतीत्यत्रोक्तमेवार्थं स्मारयति—

प्रातिपदिकान्यनतिरिक्तविषयाणि
प्राह भगवान्प्रथमशब्दिताविभक्त्या ।
पाणिनिरतः सकलतर्कसमयज्ञो
वष्टि वचसोऽनतिरिक्तविषयत्वम् ॥ २७४ ॥

प्रातिपदिकानीति । यतोऽयं पाणिनिः प्रातिपदिकानि वृक्षादिशब्दप्रकृतिभूतानि पदान्यव्यतिरिक्तान्यनतिरिक्तविषयाण्यभिन्नार्थान्याह ततः सकलतर्कसमयज्ञोऽयं वचसोऽनतिरिक्तविषयत्वमेकप्रातिपदिकार्थत्वं वष्टि वाञ्छतीति सम्बन्धः । केन सह प्रातिपदिकानामनतिरिक्तविषयत्वं तत्राह—प्रथमशब्दिताविभक्त्येति । प्रथमाविभक्त्येत्यर्थः ॥२७४॥

एवं तावद्वादिप्रसिद्ध्याऽखण्डार्थत्वं वाक्यस्योपवर्ण्य पुनरपि सर्वसमयसाधारणलोकप्रयोगेऽपि तद्दर्शयति—

इयं घटव्यक्तिरितीदृशेषु च
प्रसिद्धमेवैकरसार्थगोचरम् ।

पदद्वयं लोकवचःसु तेन च

प्रशस्यते नात्र विवादसंग्रहः ॥ २७५ ॥

इयमिति । यद्यपीयमिति पदमेतद्देशकालवैशिष्ट्यमाह घटपदमपि घटघटत्वादिवैशिष्ट्यं तथापि यत्र घटादिव्यक्तिमात्रविजिज्ञापयिषया स्वानुभवसिद्धां घटव्यक्तिमङ्गुल्या निर्दिश्येयं घटव्यक्तिरिति प्रयोगः तत्रैव विवक्षानुरोधेन वाक्यमखण्डार्थमिति द्रष्टव्यमतस्तत्त्वमादिवाक्यस्याखण्डार्थत्वे न केनापि विवदितव्यमित्युपसंहरति— तेनेति । अखण्डार्थत्वस्य लोकवादिप्रसिद्धत्वं तच्छब्दार्थः । चशब्दोऽवधारणे । तेनेदं प्रशस्यत इति । अत्र नैव वादिनां विवादो विप्रतिपत्तिरित्यर्थः ॥ २७५ ॥

यदुक्तं सिद्धे ब्रह्मणि प्रवर्त्तमानं वेदान्तप्रमाणं मानान्तरसहकृतमेव प्रवर्त्तेत सिद्धवस्तुबोधकरूपस्यैवंरूपत्वाद् ब्रह्मणि च न मानान्तरमिति तत्र कथं वेदान्ताः प्रमाणं भवेत्तत्सत्त्वे च वेदान्तानां सापेक्षत्वापात इति तदनुपपन्नं प्रमाणान्तरस्य स्वार्थप्रमित्तावनपेक्षत्वात्तदङ्गीकारेपि प्रकृते न कश्चिद्दोषः मानान्तरगोचरतायोग्यसिद्धवस्तुविषयकवचनस्यैव प्रमाणान्तरापेक्षत्वात् ब्रह्मणश्च मानान्तरायोग्यत्वादतो न तद्बोधकवचनस्य प्रमाणान्तरसापेक्षत्वमिति स्थिते ननु सिद्धत्वेन ब्रह्मणोपि मानान्तरयोग्यत्वं किं न स्यादित्याशङ्क्याह—

न च प्रमाणान्तरयोग्यतायां

प्रयोजकं स्यात्परिनिष्ठितत्वम् ।

यतः प्रमाणान्तरयोग्यतायां

प्रयोजकं रूपरसादिमत्त्वम् ॥ २७६ ॥

नचेति । च शब्दः शङ्कानिवृत्त्यर्थः । परिनिष्ठितत्वं सिद्धत्वं किं

तर्हि तत्र प्रयोजकं तत्राह—यत इति। आत्मनः प्रमाणान्तरयोग्यत्वं वदन्प्रष्टव्यः किमनुमादिप्रमाणयोग्यत्वमुत प्रत्यक्षयोग्यत्वम्। आद्येपि सामान्यतोदृष्टानुमानयोग्यत्वमुत विशेषानुमानयोग्यत्वमपि। नाद्यः। तस्य ब्रह्मणि प्रवृत्तावपि तत्प्रमाणस्य सापेक्षतानापत्तेः। तावता तत्त्वे वा सामान्यतोदृष्टानुमानस्य पराभिमतकार्येऽपि सुलभतया तद्बोधकविधिवाक्यस्यापि सापेक्षत्वप्रसङ्गात्। न द्वितीयः। तस्य प्रत्यक्षागोचरे वक्तुमशक्यत्वाद्विशेषेण श्रुतिसिद्धात्मना कस्यचिद्व्याप्त्यभावाच्च। शब्दमुपजीव्य प्रवर्त्तमानस्य तस्य कार्येऽपि वक्तुं शक्यत्वाच्च। द्वितीयेपि किं मानसप्रत्यक्षगोचरतायोग्यत्वमुत चक्षुरादियोग्यत्वम्। नाद्यः। मनसः स्वातन्त्र्येण प्रत्यक्षकरणत्वाभावात्तत आत्मनो बहिरिन्द्रियप्रत्यक्षयोग्यत्वं वक्तव्यम्। तत्र च रूपादिमत्त्वमेव प्रयोजकमित्याह—रूपरसादिमत्त्वमिति। आदिपदेन स्पर्शवत्त्वं गृह्यते। अनुष्णद्रव्यचाक्षुषत्वं प्रति रसोपि व्यापक इति तदिहोपात्तमिति द्रष्टव्यम्। तथा च निर्गुण आत्मा न प्रत्यक्षमानान्तरयोग्य इत्यर्थः॥ २७६॥

तथा च मानान्तरयोग्यताप्रयोजकरूपादिरहिते आत्मनि वेदान्ता न प्रमाणसाहित्यासाहित्याभ्यां प्रमाणं भवन्ति, किन्तु तन्निरपेक्षाः सन्तः प्रमाणं भवन्तीत्येतत्फलितमाह—

ततोऽस्तु रूपादिविहीनरूपे
प्रमान्तरागोचरचित्स्वरूपे।
वचः प्रमाणान्तरनिस्पृहं सत्
प्रमाणमत्राऽऽत्मनि निर्विवादम्॥ २७७॥

तत इति। यतः प्रमाणान्तरयोग्यतायां रूपादिमत्त्वं प्रयोजकं ततो रूपस्पर्शविहीनेऽत एव प्रमाणान्तरागोचरे चैतन्यात्मकेऽत्रात्मनि तत्त्वमादिसमन्वयः प्रमाणान्तरानपेक्षं सन्निर्विवादं प्रमाणमस्त्वित्यर्थः॥ २७७॥

किं च प्रयोजनाभावादपि न मानान्तरयोग्यत्वमननुभूयमानमपि कल्प्यमित्याह—

लोकप्रसिद्धपदगोचरतानिमित्त-
मन्यप्रमाणविषयत्वमिह प्रसिद्धम् ।
लोकप्रसिद्धपदगोचरता न चास्मि-
न्ब्रह्मात्मनीति च तदत्र निवारणीयम् ॥२७८॥

लोकेति । इह जगति शब्दव्यतिरिक्तमानान्तरगोचरत्वं लोकप्रसिद्धपदगोचरतानिमित्तं लोके बृद्धव्यवहारे प्रसिद्धं व्युत्पन्नं यत्पदं तद्गोचरतायां निमित्तमिति प्रसिद्धं व्यवहाराधीनव्युत्पत्तये हि मानान्तरमपेक्ष्यते । अन्यथा व्यवहाराभावेन तद्योगान्न व्युत्पत्तिमन्त्रे यूपादिशब्दार्थे मानान्तराभावादित्यर्थः । अस्तु तर्हि स्वतन्त्रसिद्धत्वात्प्रकृतेपि लोकप्रसिद्धपदगोचरता तत्राह—लोकेति । चशब्दोऽवधारणेऽस्मिन्नखण्डे ब्रह्मात्मनि लोकप्रसिद्धपदगोचरता नैवास्ति व्यवहारागोचरत्वेन तस्मिन् बृद्धव्यवहारास्यदव्युत्पत्त्यनुपपत्तेरिति कृत्वात्रात्मनि तन्मानान्तरगोचरत्वं निवारणीयमित्यर्थः । अथवा द्रव्याद्रव्यसाधारणे सिद्धमात्रस्य मानान्तरयोग्यतायां लोकप्रसिद्धपदगोचरत्वं प्रयोजकमात्मनि च तदभावान्न तस्य तद्योग्यत्वमित्याह—लोकेति । लोके प्रसिद्धा पदगोचरता निमित्तं प्रयोजकं यस्य तत्तथा । ननु सत्यादिपदान्यपि लोके गगनादौ व्युत्पन्नानि तद्गोचरश्चात्मा ततस्तस्यापि तत्स्यादिति चेत्तत्राह—लोकेति । अद्वयस्यात्मनः सत्यादिपदलक्ष्यत्वान्न वाच्यत्वमित्यर्थः । सत्यादिपदानां व्युत्पत्तिश्च ब्रह्म स्वयंप्रभमित्यत्र साक्षिमात्रसिद्धे गगनादाविति वक्ष्यति । साक्षि च न लौकिकप्रमाणमिति भावः ॥ २७८ ॥

एवं सति कार्यवाक्यस्य मानान्तरसापेक्षत्वं प्राप्तमिति तत्पक्षे दूषणमाह—

लोकप्रयुक्तपदगोचरताऽस्ति कार्ये
तेनास्तु कार्यपरवाक्यमशेषतस्ते।
मानान्तरेषु परतन्त्रतया प्रमाणं
स्वार्थे न दूषणमिदं श्रुतिमस्तकेषु ॥ २७९ ॥

लोकप्रयुक्तेति। प्रयुक्तं-व्युत्पन्नं, कार्ये—नियोगे, लिङ्पदं हि लोके धात्वर्थकार्य एवावापोद्वापाभ्यां व्युत्पन्नं सत् पश्चादलौकिककार्य एव पर्यवस्यतीति तेऽभिमतमिति येन कार्ये लोकप्रसिद्धपदगोचरत्वं तत्र प्राभाकरस्य मते विद्यते तेनाशेषतः सर्वं कार्यपरं वाक्यं मानान्तरेषु परतन्त्रतया मानान्तरापेक्षतयैव स्वार्थे कार्ये प्रमाणमस्तु नेदं दूषणं वेदान्तेष्विति सम्बन्धः। अत्र यद्यपि मानान्तरयोग्यत्व इदं प्रयोजकं तेन न स्वीक्रियते, तथापि सिद्धत्वेन ब्रह्मणि तदापादनेऽनेन कार्येपि तदापाद्यत इति द्रष्टव्यम् ॥ २७९ ॥

यच्चोक्तं क्रियापदाभावे पदानामन्वय एव न सम्भवति प्रचुरप्रकाशः सवितेत्यादावप्यध्याहारसम्भवादिति तत्राह—

न च क्रियाकारितसंहतीनि
पदानि लोके नियमेन वक्तुम्।
समीहते पक्कमतिः पदानां
क्रियां विनाप्यन्वयदर्शनेन ॥ २८० ॥

न चेति। क्रियाकारकसंहतीनि क्रियाकारकवाचकभावेनान्वितानि पक्कमतिर्विवेकी लोके वेदे च पदानि नियमेन क्रियाकारकसंहतीनि वक्तुं न समीहते। कुतः। पदानां क्रियां विनापि प्रचुरप्रकाशः सवितेत्यादावन्वयदर्शनादित्यर्थः।नच तत्राप्यध्याहारः क्रियत

इति वाच्यम् । प्रयोजनाभावादनुपस्थितकल्पने कल्पनागौरवाच्च । पूवमर्थप्रतीतिं विनाध्याहारस्यैवानुपपत्तेः । ननु जातापि प्रतीतिः क्रियां विना न पर्यवस्यतीति चेन्न—तत्तद्वस्तुस्वरूपजिज्ञासोः क्रियां विनापि प्रतीतिपर्यवसानादिति भावः ॥ २८० ॥

किञ्च सम्बन्धमात्रपर्यवसितानि भूयांसि वाक्यानि दृश्यन्त इत्याह —

**महीभुजोऽयं पुरुषो मनस्वी**
**वनस्पतेस्तत्फलमित्यपीह ।**
**क्रियां विनाप्यन्वयवन्ति**
**लोके पदानि दृष्टानि बहूनि वक्तुः ॥ २८१ ॥**

महीभुज इति । राज्ञः पुरुषः तस्य फलं वषट्कर्त्तुः प्रथमभक्ष इत्यादिलौकिकवैदिकपदानि क्रियां विनाप्यन्वयवन्ति दृश्यन्ते । न चात्राप्यध्याहारः, वाक्यस्य सम्बन्धमात्रनिष्ठत्वादित्यर्थः ॥ २८१ ॥

अस्तु वान्वये क्रियापदापेक्षा तथापि काचिन्न क्षतिः वेदान्तेपि तत्सत्त्वादित्याह—

**क्रियापदं वेदशिरःस्वपीष्यते**
**विवक्षितार्थानुगुणं तु तन्मतम् ।**
**विवक्षितार्थप्रतिपत्तिघाति तु**
**क्रियापदं स्वीकृतमप्यनर्थकम् ॥ २८२ ॥**

क्रियापदमिति । तर्हि ब्रह्मणः स्वप्रधानत्वप्रच्युतिः क्रियाप्रधानत्वाद्वाक्यस्य तत्राह—विवक्षितार्थेति । विवक्षितस्तात्पर्येण प्रतिपाद्यो यो वेदा-

न्तानामखण्डैकरसरूपोऽर्थस्तदनुगुणं तद्बोधनानुकूलं तत्क्रियापदं मतमिष्टमित्यर्थः । तुशब्दो यागादिक्रियापदादस्याभिहितं विशेषं दर्शयति । अतो वाक्यस्य क्रियापदयुक्तत्वेपि ब्रह्मस्वरूपमात्रबोधकत्वान्न ब्रह्मणः प्राधान्यभङ्ग इति भावः । ननु द्रष्टव्यादिक्रिया वेदान्तेषु श्रूयते सा च नाखण्डार्थतानुगुणा ब्रह्म च तद्विषयतया तच्छेषमिति कथं वाक्यस्य ब्रह्मप्राधान्यं स्यात्तत्राह—विवादितार्थेति । अखण्डवाक्यार्थप्रतीतिविरोधि यद्द्रष्टव्यादिक्रियापदं तत्स्वीकृतं वेदान्तेषु पठितमपि निरर्थकं ज्ञानस्याविधेयतया तस्य क्रियापरत्वानुपपत्तेरुक्तत्वादित्यर्थः ॥ २८२ ॥

ननु किं तर्हि तत्क्रियापदं यत्स्वयं क्रियापरमपि ब्रह्मणः प्राधान्यं परिपालयति तत्राह—

**अस्त्यस्म्यसीति च पदं प्रचुरं क्रियाया**
**वेदान्तवाक्यगतमादरतः पठन्ति ।**
**तन्मात्रतः सकलवेदशिरःपदानां**
**संघातसिद्धिरिति वेदशिरोनिषण्णाः ॥ २८३ ॥**

अस्त्यस्मीति । क्रियायाः आत्मस्वरूपसत्तारूपधात्वर्थक्रियाया, आदरतस्तात्पर्येण, पठन्ति अधीयते । ततः किमित्यत आह—तन्मात्रत इति । अस्त्यादिक्रियापदेनैवेत्यर्थः । वेदशिरोनिषण्णा इति । वेदान्तनिष्णाता आहुरिति शेषः । अस्ति ब्रह्मेति चेद्वेद अहं ब्रह्मास्मि तत्त्वमसीत्यादिषु क्रियापदं श्रूयते । न चात्रास्त्यर्थः स्वरूपातिरिक्तो भवति आत्मस्वरूपसत्ताया एवास्त्यादिपदेनाभिधानादतः क्रियापदाङ्गीकारेपि स्वरूपमात्रसत्तानिष्ठतया वेदान्तस्य नाखण्डार्थत्वक्षतिरिति भावः ॥ २८३ ॥

ननु यदि सत्तैव वाक्यार्थ इत्युच्यते, प्राप्तं तर्हि वेदान्तानां

मानान्तरयोग्यवस्तुबोधकतया सापेक्षत्वं प्रमाणविषयत्वयोग्यताया एव सत्तात्वादिति प्राभाकरशङ्कामनुवदति—

यत्तु प्रमाणमनुभूतिरिति प्रमाण-
सामान्यलक्षणमनूद्य पुनर्वदन्ति ।
सत्ताप्रमाणघटनां प्रति योग्यताऽतो
नास्त्यर्थनिष्ठवचनेष्वनपेक्षतेति ॥ २८४ ॥

यत्त्विति । प्राभाकरा अनुभूतिः प्रमाणमिति प्रमाणसामान्यमनूद्योक्त्वा पुनरपीति वदन्तीति सम्बन्धः । इति पदपरामृष्टमाह - सत्ताप्रमाणेति । प्रमाणविषयत्वयोग्यता सत्तेति वदन्तीत्यर्थः । ततः किं तत्राह— अत इति । अतः प्रमाणविषयत्वयोग्यतैव सत्ता ततोऽस्त्यर्थनिष्ठ ववनेषु ब्रह्मस्वरूपसत्तामात्रपरतत्त्वमादिवचनेष्वनपेक्षता नास्तीत्यर्थः । नचात्र तदभिमतप्रमाणसामान्यलक्षणानुवादो निष्प्रयोजनः स्वप्रकाशतया प्रमाणाविषयसंविदेव प्रमाणमित्युक्त्वा प्रमाणविषयत्वयोग्यता सत्तेति वदन् किमयं महानुभावोऽनुभवसत्तां न पश्यतीति किं वा प्रमाणस्यासत्त्वमेवाभिमनुत इति तदुपहासार्थत्वात् ॥ २८४ ॥

दूषयति—

तद्दुर्घटं न खलु संविदियं स्वयोग्या
न ह्यात्मनि स्थितिमुपैष्यति योग्यताऽस्याः ।
वस्त्वन्तरोपनिहितस्वपदत्वहेतो-
र्न ह्यात्मरूपदहने दहनस्य शक्तिः ॥ २८५ ॥

तद्दुर्घटमिति । तत्त्वदुक्तं सत्तालक्षणं दुर्घटं दुःसम्पादमव्याप्तेरित्यर्थः । ननु कुत्राव्याप्तिः, संविद्येव । तथा हि किं संवित्स्वविषयत्व-

योग्या प्रमाणान्तरविषयत्वयोग्या वा । आद्यो न सम्भवतीत्याह— न खल्विति । इयं संवित्स्वयोग्या स्वविषयत्वयोग्या न खलु तत्र हेतुः— नह्यात्मनि स्थितिमुपैष्यतीति । अस्याः संविदः स्वविषयत्वयोग्यता स्वात्मनि-स्थितिं वर्त्तनं हि यतो नोपैष्यति न प्राप्स्यति तत इत्यर्थः । किं स्वविषयत्वं नाम स्वकर्मत्वं किं वा स्वनिरूपकत्वम् अथ वा स्वाकारत्वम् । नाद्यः । परसमवेतक्रियाफलशालित्वलक्षणकर्मत्वस्य स्वस्मिन्ननुपपत्तेः । न द्वितीयतृतीयौ । स्वस्य स्वनिरूपकत्वाभावात् । स्वाकारत्वाभावाच्च । किं च यो यद्विषयः स ततो भिन्न एवेति व्याप्तेर्न स्वस्य स्वषियत्वमित्याह— वस्त्वन्तरोपनिहितेति— । वस्त्वन्तरे संविदोन्यस्मिन् घटादावुपनिहितं निक्षिप्तं स्वपदत्वं स्वविषयत्वं यस्यास्तस्या भावस्तत्त्वं तस्माद्धेतोर्नियमादित्यर्थः । नेयं व्याप्तिर-प्रयोजिका स्वस्य स्वविषताया लोके अप्रसिद्धत्वादित्याह— नह्यात्मरूपेति । रूपं स्वरूपं दहनं दाहः । न द्वितीयः । स्वयंप्रकाशस्य माना-न्तरायोग्यत्वादित्यर्थः ॥ २८५ ॥

ननु माभूत्संविदः स्वविषयत्वं प्रमाणान्तरविषयत्वं वा तावता प्रकृते किं दूषणं न त्वव्याप्तिः संविदतिरिक्तसत्ताया एव तल्लक्षण-त्वादित्याशङ्क्य तर्हि भवन्मते तदतिरिक्तसत्ताभावात्संविदः शून्य-त्वापत्तिः, स्वयं प्रकाशसंवित्सत्ताया लक्षणान्तरसत्त्वे वा तदेव ब्रह्मसत्ताया लक्षणमिति न तन्मानस्य सापेक्षत्वमित्यभिप्रेत्याह—

संवित्प्रमाणघटनां प्रति योग्यतां चे-
न्नेयं बिभर्ति न सती भवितुं समर्था ।
तद्योग्यतैव यदि मातृघटादिसत्ता
तस्याप्यसत्त्वमिति शून्यमुपाजिहीथाः ॥ २८६ ॥

संविदिति । विषयत्वेन प्रमाणसम्बन्धः प्रमाणघटनापदेनोच्यते ।

इयं संवत्प्रमाणघटनायोग्यतां चेत्स्वस्य न बिभर्ति तर्हि सती भवितुं न समर्थेति सम्बन्धः । भवतु संविन्मात्रस्यासत्त्वं भवन्मतं तु न सिद्ध्यत्येवेत्याशङ्क्य तर्हि तत्रैव सिद्धान्तमूलोच्छेदेन शून्यतापत्तिरित्याह—तथागतैवेति । मातृमानमेयात्मकप्रपञ्चस्य यदि संविदधीनप्रकाशत्वयोग्यतैव सत्ता तदा संविदोऽसत्त्वेन तेषामपि तद्धटना सत्ता न स्यादिति घटादेरपि शून्यत्वमुपाजिहीथाः उपागच्छः अङ्गीकृतवानसीत्यर्थः । न ह्यसत्प्रयुक्तं पदार्थानां सत्त्वं सम्भवतीति भावः ॥ २८६ ॥

किञ्च किं शब्दातिरिक्तप्रमाणविषयत्वयोग्यत्वं सत्त्वं किं वा प्रमाणमात्रविषयत्वयोग्यत्वम् । नाद्यः । त्वदभिमतकार्यस्यासत्त्वप्रसङ्गात् । न द्वितीयः । कार्यविषयप्रमाणस्यापि मानान्तरसापेक्षत्वापातात्तस्यापि शब्दप्रमाणगम्यस्य सत्त्वाश्रयत्वात्तस्य सत्त्वेपि मानान्तरायोग्यत्वेन तत्प्रमाणस्य सापेक्षत्वाभावे वा प्रकृतेपि समानमिति नैतत्सत्तालक्षणं किञ्चित्करोऽतो भावव्यावृत्तस्वरूपमेव सत्त्वमिति न तन्मात्रनिष्ठवेदान्तानामपि सापेक्षत्वापत्तिरित्यभिप्रेत्योपसंहरति—

**वस्तुस्वभाव इति सत्त्वमतो गृहाण**
**तच्च द्विधेति वितथावितथत्वभेदात् ।**
**सत्त्वं द्विरूपमितरेतरसंकरेण**
**सच्छब्दवाच्यमिति च व्यवहारकाले ॥ २८७ ॥**

वस्तुस्वभावइति । यतो न मानान्तरयोग्यत्वं सत्त्वं ततः पदार्थानामभावव्यावृत्तवस्तुस्वभाव एव सत्त्वमिति गृहाणेति सम्बन्धः । ननु स्वरूपस्यैव सत्त्वे वेदान्तेषु सत्पदेनापि तदेव बोध्येतेति सत्पदे भागलक्षणा वर्णितानुपपन्ना स्यात्तत्राह—तच्चेति । तद्वस्तुस्वभावलक्षणं सत्त्वं द्विधेति त्व गृहाणेति सम्बन्धः । द्वैविध्यमेवाह—वितथेति ।

सत्यानृतविभागेनेत्यर्थः । तर्हि सत्पदस्यानेकार्थताप्राप्तिस्तत्राह—सत्त्वं द्विरूपमिति । इतरेतरसंक्रमेणेतरेतराध्यासेनैकत्वमापन्नमेतत् द्विरूपं द्विविधं सत्त्वव्यवहारकाले सच्छब्दवाच्यमिति च गृहाणेत्यर्थः ।२८७।

तर्हि पदोपस्थापितस्यैव वाक्यर्थान्वयित्वाद्वाक्यार्थसत्त्वमपि द्विरूपं स्यादित्याशङ्क्य पूर्वोक्तं स्मारयति—

उत्सृज्य तत्र वितथांशमथेतरस्मि-
न्संवित्स्वरूपपरमार्थसति स्वरूपे ।
बुद्धिं कुरु प्रणिदधत्प्रणयेन भूम्नि
ब्रह्माहमस्मि परमार्थसदित्यजस्रम् ॥ २८८ ॥

उत्सृज्येति । तत्र सत्पदार्थे इतरपदार्थमेवाह—संवित्स्वरूपपरमार्थसतीति। सत्त्वपदार्थेऽसत्यांशं परित्यज्य संवित्स्वरूपपरमार्थसति भूम्नि स्वरूपे निरस्तनिखिलोपाधिस्वाभाविकसद्रूपे विषये प्रणिदधदवहितमनाः सन् प्रणयेन भक्तिश्रद्धाभ्यां बुद्धिं कुर्वित्यर्थः । बुद्धेराकारमभिनीय दर्शयति परमार्थसद्ब्रह्माहमस्मीति ॥ २८८ ॥

यच्चोक्तं ब्रह्मणो मानान्तरगोचरत्वे तत्र प्रवृत्तवेदान्तानामनुवादकत्वं तदगोचरत्वे च तत्र न वेदान्तानां व्युत्पत्तिरिति तदसत् ब्रह्मणो वाक्यार्थत्वात्—ननु पदवाच्यब्रह्मण्यपि न मानान्तरं दृश्यते इति चेत्तत्राह—

ब्रह्मस्वयंप्रभमतः शबलेषु तस्य
मानान्तरानधिगतेष्वपि शब्दशक्तिः ।
रूपेषु वृद्धजनसंव्यवहारहेतोः
शक्या ग्रहीतुमुदितेन पथाऽनभिज्ञैः ॥ २८९ ॥

ब्रह्मेति। यतो ब्रह्म केवलं स्वयंप्रभं ततस्तस्य स्वप्रकाशसत्याद्यात्मकस्य ब्रह्मणो मानान्तरानधिगतेष्वपि ब्रह्मस्वरूपसाक्षिणा प्रकाशमानेषु सत्यादिशबलेषु पुरुषेष्वर्थेष्वनभिज्ञैरविवेकिभिराकाशादौ सत्यतेत्यादिनोदितेन यथा शब्दशक्तिः गृहीतुं शक्येति सम्बन्धः तत्रैव व्युत्पत्तौ हेतुमाह—वृद्धजनेति। तदेकविषयवृद्धव्यवहाराद्धेतोरित्यर्थः। ननु प्रमाणं विना घटादयः केवलं साक्षिणा न ज्ञाततया प्रकाशन्ते, न चाज्ञाततयोपस्थितेर्व्युत्पत्तिः संभवति। तत्र व्यवहारायोगात्, नापि घटादेः प्रमाणव्यापारैकविषयत्वे तच्छबलं केवलसाक्षिवेद्यमिति संभवतीति चेत्सत्यम्—तथापि सर्वत्र ज्ञातस्यैव प्रमाणविषयत्वादज्ञानस्य चात्ममात्रविषयत्वेन घटादावभावान्न तस्य प्रमाणव्यापारविषयत्वमत एव तच्छबलस्यापि न प्रमाणव्यापारविषयत्वं किन्तु तत्तत्प्रमाणजन्यवृत्त्यभिव्यक्ततत्तदुपहितचैतन्यात्मसाक्षिणैव घटादिकं स्पष्टं प्रतीयते। ततश्च तत्र व्यवहारसंभवाद्व्युत्पत्तिः संभवतीति अस्मद्दर्शनानुरोधेनैवेदमुक्तमिति द्रष्टव्यम्।२८६।

नन्वस्तु सत्यादिपदानामेवं व्युत्पत्तिः आत्मादिपदस्य चाहंकारादौ व्युत्पत्तिः, प्रमाणं विनैव तस्य साक्षिणा स्पष्टं प्रतीयमानत्वाद्ब्रह्माद्वितीयादिपदानां त्वद्वितीये कथं व्युत्पत्तिः, न हि तदद्वितीयं मानान्तरेण ज्ञातुं शक्यते, न वा साक्षिणाहमिव स्पष्टं तत्त्वेन प्रतीयत इत्याशङ्क्य तद्व्युत्पत्तिप्रकारं दर्शयति—

**लोकप्रसिद्धार्थपदान्तराणां**

**समीपसंकीर्त्तनतोऽपि शक्तिः।**

**ब्रह्मादिशब्दस्य सुखावसेया**

**यथा हि यूपादिगिरस्तथैव ॥ २९० ॥**

लोकप्रसिद्धेति। यतो वा इमानि भूतानि जायन्ते। येन जातानि

जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति श्रौत प्रयोगे प्रसिद्धपदसमभिव्याहाराद्ब्रह्मादिपदस्य शक्तिरवसेयेत्यर्थः । अपिः संभावनायाम् । अथवा व्युत्पत्तिर्ह्युपस्थितिमात्रमपेक्षते । उपस्थितिश्च कार्यलिङ्गेनापि कारणस्याद्वितीयस्य संभवतीत्यपिशब्दः सूचयति। प्रसिद्धार्थपदसमभिव्याहारेण वेदे पदशक्तिग्रहे दृष्टान्तमाह—यथा हीति यथा यूपपदस्य यूपं तक्षति यूपमष्टाश्रीकरोतीत्यादिवाक्ये तक्षत्यादिपदसमभिव्याहारेण तक्षणसंस्काराष्टाश्रादिविशेषे खदिरादिप्रकृतिके काष्ठविशेषे शक्तिर्गृह्यते' तथाहवनीयादिपदस्याग्नीनादधीताहवनीये जुहोतीत्यादि जुहोत्यादिसमभिव्याहारेण होमाधारः कुण्डविशेषविशिष्टः संस्कृतोऽग्निरर्थ इति तद्वदित्यर्थः ॥ २९० ॥

इदानीं ब्रह्मादिपदानां व्युत्पत्तिं विनाऽस्थूलादिवाक्यैर्निषेधमुखेनैव ब्रह्मसिद्धिरिति परैः परिभव इति न्यायेन कार्यवेदार्थवादिनं प्रत्याह—

> विनाऽपि शक्तिग्रहणं पदानां
> परात्मनोर्वाचकभावभाजाम् ।
> भवेत्परब्रह्मणि वेदवाक्यात्-
> प्रतीतिरन्यप्रतिषेधनेन ॥ २९१ ॥

विनापीति । वाचकभावभाजां वाचकत्वशक्तियुजां वेदवाक्यान्नेति नेतीत्यादिवाक्यात् ॥ २९१ ॥

ननु तत्रापि शक्तिग्रहणं विना कथं शाब्दप्रतीतिस्तत्राह—

> नञः प्रपञ्चप्रतिपादकस्य च
> प्रतीत्य शक्तिं व्यवहारतः स्थितः

पदस्य शक्नोति परं समीक्षितुं
श्रुतेः प्रपञ्चप्रतिषेधमार्गतः ॥ ५६२ ॥

नञ इति । प्रपञ्चप्रतिपादकस्य स्थौल्यादिप्रपञ्चविषयपदस्येति सम्बन्धः । व्यवहारतः स्थितः व्यवहारे स्थितः सन्नित्यर्थः । ततश्चाद्वितीयादिपदस्यैव व्युत्पत्तिर्माभूदित्युच्यते न स्थूलादिपदस्यापि तस्य लोके स्थौल्यादिवाचकत्वेन नञ्पदस्य च स्वसंसृष्टाभाववाचकत्वेन सिद्धत्वाददो तन्निषेधमुखेन वेदान्ताद्ब्रह्मप्रतिपत्तिः संभवतीत्यर्थः॥२६२॥

यच्चोक्तं ब्रह्मणः प्रवृत्तिनिवृत्तिविहीनतया तत्र वेदान्ताप्रमाण्यमिति तत्र किं प्रवृत्तिनिवृत्त्योः साक्षात्प्रामाण्यप्रयोजकत्वं किं वा फलद्वारा ? आद्ये प्रवृत्तिनिवृत्तिविहीना वेदान्ताः स्वतन्त्रं प्रमाणमेव न भवन्तीत्युच्यते किंवा प्रमाणमप्यद्वितीये ब्रह्मणि न प्रमाणमित्युभयथापि नेत्याह—

ब्रह्मास्मीतिवचोनिविष्टपदयोर्मानं भवेदन्वयः
साक्षादद्वयवस्तु तस्य च भवेन्मेयं ततस्तद्गतेः ।
यद्यत्र प्रमितिं करोति भवति प्रामाण्यमत्रास्य च
स्पष्टं दृष्टमिदं हि युक्तिघटितं रूपे यथा चाक्षुषः ॥ २६३ ॥

ब्रह्मास्मीति । अहं ब्रह्मेति वाक्यस्थाहंब्रह्मेतिपदयोर्यः समन्वयः साक्षात्स्वातन्त्र्येण मानं भवेत्तच्च प्रमाणमद्वितीये ब्रह्मणीत्याह—अद्वयवस्तु तस्य च भवेन्मेयमिति । तस्य समन्वयस्य वेदान्तानामज्ञातार्थप्रमितिहेतुत्वेऽद्वितीयब्रह्मणः तन्मेयत्वे च हेतुमाह—ततस्तद्गतेरिति । ततः पदद्वयसमन्वयात् तस्याद्वितीयब्राह्मणो गतेरवगतेरित्यर्थः । न ह्यप्रमाणात् प्रमेयविषयप्रमितिर्जायत इत्यर्थः । तथा च प्रवृत्तिनिवृत्तिविहीना अपि वेदान्ताः प्रमितिजनकत्वात्प्रमाणं प्रमितेश्चाद्वितीयब्रह्म

विषयत्वात्तत्रैव प्रमाणमित्यर्थः । ननूत्पद्यतां प्रमितिः तथापि न तन्मात्रेण तत्र वेदान्तप्रमाण्यं प्रवृत्तिनिवृत्तिजनकप्रमितिजनकस्यैव ज्योतिष्टोमादिवाक्यस्य प्रामाण्यदर्शनादिति चेन्न लाघवात्प्रमितिजनकत्वस्यैव प्रामाण्यप्रयोजकत्वादन्यथोपपत्तिवाक्यस्याप्रामाण्यप्रसङ्गादित्यभिप्रेत्याह—यदीति । यदि वेदान्तोऽत्र ब्रह्मात्मनि स्पष्टं निसंदिग्धं प्रमितिं करोति तर्ह्यस्य वेदान्तस्यात्रात्मनि स्पष्टं निसन्दिग्धं प्रामाण्यं भवति न केवलं वेदान्तानामेव प्रमाजनकत्वेन प्रामाण्यं किन्त्वन्यत्रापि दृष्टमित्याह—दृष्टमिति । कुत्र दृष्टमित्यत आह—रूपे यथा चक्षुष इति । न केवलं दर्शनमात्रमुपपन्नं चेत्याह—युक्तिघटितामिति । अन्यथोपेक्षाज्ञानजनकचक्षुरादेरप्रामाण्यप्रसङ्ग इत्यर्थः । अथवा यदीति । यद्यत्र विषये निश्चयात्मिकां प्रमितिमुत्पादयति तत्प्रमाकरणं तत्र प्रमाणं यथा रूपे चक्षुरुपपन्नं चैतदिदं च प्रमाकरणत्वमस्य समन्वयस्यात्रात्मनि विद्यते वेदान्तस्यात्मविषयप्रमितिकरणत्वं स्पष्टं दृष्टमतश्चक्षुरिव रूपे प्रवृत्त्याद्यननुकूलप्रमितिजनकोपि ब्रह्मणि प्रमाणमित्यर्थः । अनेन श्लोकेनापौरुषेयत्वेन स्वार्थं स्वतः प्राप्तप्रमाणभावानां वेदान्तानामनुवादकतालक्षणमप्रमाण्यमबोधकत्वलक्षणं संशयात्मकत्वलक्षणं च निरस्तमितिद्रष्टव्यम् ॥ २६३ ॥

किञ्चानधिगताबाधितार्थगन्तृत्वं प्रमाणमात्रलक्षणं वेदस्य च विशेषेण तद्वक्तव्यं तस्य तत्र तात्पर्यलिङ्गत्वान्न तत्प्रवृत्तिनिवृत्तिं विना हीयते अतस्तादृशं प्रामाण्यमत्राप्यस्तीत्याह—

मानान्तरानधिगतं परिनिष्ठितं य-<br>
द्वेदः समर्पयति चेतसि तत्परः सन् ।<br>
तत्तथ्यमेव भवतीति समाश्रयस्व<br>
श्रेयस्करो विधिगिरोऽवगतो यथैव ॥ २६४ ॥

मानान्तरेति। मानान्तरायोग्यमित्यर्थः। परिनिष्ठितमपीत्यर्थः। चेतसि समर्पयति—बोधयतीत्यर्थः। तद्वेदसमर्पितं सिद्धमपि वस्तु तथ्यमबाधितमेव परिनिष्ठितमपि यदज्ञातं वस्तु वेदो बोधयति तत्तथ्यमेव। मानान्तरविरोधाभावादित्यर्थः। मानान्तरायोग्यस्य वेदतात्पर्यविषयस्य यथार्थत्वे दृष्टान्तमाह—श्रेयस्कर इति। स्वर्गादिसाधननियोगः इत्यर्थः। अनेन च श्लोकेनानुवादकतालक्षणं बाधितार्थत्वलक्षणं च अप्रामाण्यं निरस्तमिति द्रष्टव्यम् ॥ २६४ ॥

नन्वद्वयवस्तुनो मेयत्वं तत्र च समन्वयस्य प्रामाण्यमित्युक्तंतच्च अनुपपन्नम् 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' 'विधिना त्वेकवाक्यत्वात्' इत्यादिना सूत्रेण वेदप्रमेयस्य कार्यत्वेन चोदनात्वेन च वेदप्रामाण्यस्य नियमितत्वादित्याशङ्क्याह—

निष्पन्नमेव यदि वा पुरुषप्रयत्न-

निष्पाद्यमस्तु तदनङ्गमिह प्रमेये।

एवं विधिर्भवतु शब्दसमन्वयो वा

प्रामाण्यकारणमिदं न वदन्ति सन्तः ॥ २६५ ॥

निष्पन्नमिति। यदि वा यद्वा वेदप्रतिपाद्यं सिद्धं साध्यं वा भवतु तत् सिद्धत्वादिकमिह वेदप्रमेयत्वेऽनङ्गमप्रयोजकमित्यर्थः। वेदतात्पर्यविषयो हि वेदार्थः। न च तात्पर्ये सिद्धत्वमसिद्धत्वं वा प्रयोजकमुपक्रमादिष्वन्यतमत्वाभावादेतस्यैवं प्रमाणस्यापि विधित्वं समन्वयत्वं वाऽकिञ्चित्करं किं त्वनधिगताबाधितासंदिग्धार्थावबोधकत्वमेवेत्यर्थः। जैमिनिसूत्रं चान्यविषयं क्रियाप्रकरणेऽवगतानां सिद्धानां तथैवोपपन्नत्वादित्यर्थः ॥ २६५ ॥

तद्भेदकल्पना न न्याय्या । तत्र यदि ब्रह्मैव सर्ववेदार्थ इति कल्प्येत । तदा यागादिसकलव्यवहारोच्छेदात्कर्मकाण्डानर्थक्यप्रसङ्गः । कार्यपरत्वे तु नैव वेदान्तभागस्य कर्त्रात्मस्तावकतया कार्यशेषत्वेनार्थवत्त्वोपपत्तेः । ततः सर्वस्यापि वेदस्य कार्यं तच्छेषो वार्थः न तु स्वप्रधानं ब्रह्मेत्याशङ्क्य भवेदेवं यदि प्रमाणस्यैकार्थ्यमात्रविषयत्वनियमोऽस्ति । स एव नास्ति । तथा सति कर्मभागानामपि परस्परमभिन्नार्थतयाऽप्रामाण्यप्रसङ्गादित्यभिप्रेत्य सदृष्टान्तमाह—

नीलैकगोचरतया नियतं न चक्षु-
र्नाप्यस्य पीतविषये नियमोऽस्ति शक्तेः ।
तद्वन्न वेदचसामपि शक्तियोगः
कार्यादिवस्तुषु कथंचन पक्षपाती ॥ २९६ ॥

नीलैकेति । अस्य चक्षुषः यथा चक्षुषो नीलपीतज्ञानयोरन्यतरस्मिन्नेव न शक्तिर्नियता तत् कस्य हेतोरुभयज्ञानयोरपि तदन्वयव्यतिरेकानुविधानादेवं वेदस्यापि कार्यतच्छेषावेवार्थ इति न नियन्तुं शक्यते । ब्रह्मणोपि ततोऽवगतेरित्यर्थः ॥ २९६ ॥

किञ्च जैमिन्याचार्योपि 'अर्थे अनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादि'त्यत्रार्थस्य मानान्तरानुपलब्धत्वं प्रमाणस्यानपेक्षत्वं च प्रमाणत्वप्रमेयत्वप्रयोजकतया सूचयन् सिद्धेपि शब्दसमन्वयप्रामाण्यमङ्गीचकार । प्रामाण्यहेतोस्तदभिमतस्यात्रापि सत्त्वात् । परन्तु धर्मविचारानुपयुक्तत्वादन्यथासिद्धत्वाच्च न विचारयामासेत्यभिप्रेत्याह—

यद्बादरायणमतं परिगृह्य पूर्वं

प्रामाण्यमुक्तमिदमस्य समन्वयस्य
वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति ॥ २६७ ॥

यद्बादरायणेति । अनधिगतेऽर्थे वेदप्रामाण्येऽपौरुषेयत्वादिति वादरायणसंमतं हेतुं परिगृह्यानधिगते धर्मे चोदनायाः प्रवर्त्तकवाक्यस्य यत्प्रामाण्यं जैमिनिनोक्तमिदमनपेक्षत्वमस्य वेदान्तस्य वस्तुस्वरूपकथनेप्यविशिष्टमित्यर्थः यथा कार्यबोधकत्वे त्वदभिमते वेदान्तानामनपेक्षत्वमेवमस्मदभिमतसिद्धवस्तुबोधनेपीत्यपिशब्देन द्योत्यते ॥ २६७ ॥

ननु शबरस्वामिना 'दृष्टो हि तस्यार्थः कर्मावबोधनं नामे'ति वदता कार्य एव वेदप्रामाण्यं जैमिनेरपि संमतमिति सूचितम् । तत्कथं जैमिनेरित्थमभिप्रायो वर्ण्यत इत्याशङ्क्य तद्वचनं चोदनात्मकवेदभागमात्रविषयमेवास्मदुक्ताभिप्राय एव तद्व्याख्यातृहृदयंगमो भवति। तद्व्याख्यातारो हि 'अज्ञातवस्तु मेयं स्याद्धेतुस्तत्प्रमितेः प्रमे'ति प्रमाणप्रमेयसामान्यलक्षणमाचक्षाणा अज्ञातस्य ब्रह्मणस्तद्बोधकवेदान्तानां च प्रमेयत्वप्रमाणत्वे अभिमन्यन्ते अन्यथा तदुक्तलक्षणस्यातिव्याप्तिप्रसङ्गादतो नूनं तन्मूलभाष्यतन्मूलसूत्रकृतामप्ययमेवाभिप्राय इत्यभिप्रेत्याह—

मानान्तरानधिगतं त्ववगम्यमानं
मेयं भवेदिति हि मेयविदो वदन्ति ।
मानान्तरानधिगते विषयेऽवबोधं
कुर्वत्प्रमाणमिति मानविदां प्रसिद्धिः ॥ २६८ ॥

मानान्तरेति । तिष्ठतु नाम जैमिनिशबरभट्टानां संवादः नहि

वेदान्तस्य प्रामाण्यं सर्वज्ञवादण्यणाभिमतमपह्नोतुं शक्यते । न च कार्यस्यापि कार्यत्वेन प्रमेयत्वं तथात्वेऽन्तरावाक्यप्रमितोपांशुयाजकार्यस्यैकस्य विष्ण्वादिवाक्यतात्पर्यप्रमेयत्वप्रसङ्गात् किन्त्वज्ञातत्वेन एवं चोदनाया अपि न चोदनात्वेन कार्ये प्रमाण्यं किन्त्वज्ञातज्ञापकत्वेन अन्यथा ऽन्तरावाक्यावगतेऽपि कार्यविष्ण्वादिवाक्यस्य तात्पर्यप्रसङ्गात्ततश्च सिद्धान्तविप्लवप्रसङ्गः । न चाज्ञातकार्यस्य वेदप्रमेयत्वमज्ञातकार्यप्रमितिजनकचोदनात्वेन च प्रमाणस्य प्रामाण्यमित्येवास्माकमप्यङ्गीकार इति वाच्यम् । कार्यपदवैयर्थ्यात् ॥ २६८ ॥

नन्वज्ञातब्रह्मणः प्रमेयत्वं तत्प्रमितिजनकवेदान्तानां च प्रामाण्यं तेन निवर्त्यत इति चेदहो कार्यनिपुणमतेः कार्याकार्यमूढता यत्स्वाभिमतकार्यैकप्रमेयत्वादिकं न जानाति । अज्ञातवस्तु ब्रह्म तद्विषयप्रमितिं वेदान्ता जनयन्ति । ब्रह्म च न प्रमेयं वेदान्तश्च न प्रमाणमिति स्ववचनव्याहतिं च न पश्यति । अतः कार्यस्याप्यज्ञातत्वेन प्रमेयत्वं चोदनाया अप्यज्ञातविषयप्रमितिजनकत्वेन प्रामाण्यमिति वक्तव्यम् । तच्च ब्रह्मणि वेदान्तानां तुल्यमिति काण्डद्वयमपि तुल्ययोगक्षेममेवेत्यभिप्रेत्याह—

> एवं सतीह यदि वेदशिरो न मानं
> श्रेयस्करे विधिगिरोऽपि न मानता स्यात् ।
> श्रेयस्करे विधिगिरो यदि मानता स्या-
> द्वस्तुस्वरूपकथनेऽपि समन्वयस्य ॥ २६९ ॥

एवं सतीति । अज्ञातवस्तुत्वतद्विषयप्रमितिजनकत्वयोरेव प्रमेयत्वप्रमाणत्वप्रयोजकत्वे सतीत्यर्थः ॥ २६९ ॥

मित्युक्तम् । इदानीमाम्नायस्य क्रियार्थत्वादित्यादौ किमर्थशब्दः अभिधेयपर उत प्रयोजनपरः । नाद्यः । यूपादिशब्दानामभिधेयाभावप्रसङ्गात् । न द्वितीयः । प्रकृतेपि प्रयोजनस्य सर्वोत्कृष्टस्य सत्त्वादिति वक्तुं प्रयोजनद्वारा प्रवृत्तिनिवृत्त्योः प्रामाण्यप्रयोजकत्वमिति द्वितीयं पक्षमाशङ्कते —

वस्तुस्वरूपकथने ननु नास्ति पुंसः

किञ्चित्फलं विधिवचःसु पुनःप्रवृत्तिः ।

संभाव्यते फलमतःकिल वस्तुनिष्ठं

वाक्यं विधिस्तुतिपरं त्विति जैमिनीयाः ॥ ३०० ॥

वस्तुस्वरूपेति । नन्विति चोद्ये आदौ योजनीयं प्रवृत्तिनिवृत्त्यविषयवस्तुस्वरूपकनेन पुंसोऽध्येतुः प्रयोजनं नास्तीत्यर्थः । विधिवचने तु नैवमित्याह—विधिवचःस्विति । विधिवचःसु पुनर्यतः प्रवृत्तिरस्ति । ततः फलं सभाव्यते । फलवदर्थपरत्वं हि वेदस्य वक्तव्यं फलञ्च प्रवृत्तिनिवृत्तिसाध्यं विध्यधीनं भवति न समन्वयमात्राधीनमिति यतोऽतो वस्तुनिष्ठं वाक्यं विधिस्तुतिपरं विधिशेषकर्त्रात्मस्तुतिपरं किलेति सम्बन्धः ॥ ३०० ॥

एतद् दूषयति—

स्यादेतदेवमनवद्यपुमर्थसिद्धि-

र्वेदान्तवेद्यविषयावगतौ न चेत्स्यात् ।

स्वाराज्यमत्र कवलीकृतभोगभूमि

स्यादेतदिति । वेदान्तवेद्यब्रह्मावगतावनवद्यपुरुषार्थसिद्धिर्नित्य-निरतिशयपुरुषार्थप्राप्तिर्न स्याच्चेदेवमुक्तप्रकारेणैतद्विधिशेषत्वं स्यादपि । नचैवं कुतः यतो ब्रह्मसाक्षात्कारेण परमपुरुषार्थप्राप्तिः । 'ब्रह्मविदाप्नोति परम्' 'आनन्दो ब्रह्मेति व्यजानात्' 'अनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' 'यो वै भूमा तत्सुखमि'ति प्राप्तव्यस्य ब्रह्मणः परमानन्दत्वावेदनपूर्वकं श्रूयते इत्याह—स्वाराज्यमिति । सुखमित्यर्थः । अत्र ब्रह्मसाक्षात्कारे वेदान्तेष्विति वा श्रूयते हीति शेषः । किञ्च वैपरीत्यमेव शेषशेषिभावस्य न्याय्यं परिपूर्णप्रयोजनलाभस्यात्रैव सत्त्वान्न हि सर्वस्य वेदस्य परमपुरुषार्थपरत्वे संभवत्यतितुच्छस्वर्गादिमात्रनिष्ठत्वमुपपद्यते । न हि महाराज्ये प्राप्ते कश्चिद्विषयजसुखाभिलाषी भिक्षावृत्तिमनुसरतीत्यभिप्रेत्याह—कवलीकृतेति । कवलीकृता ग्रस्तान्तर्गभिता भोगभूमिः स्वर्गादिर्येन स्वाराज्येन तत्तथा 'तस्येयं पृथ्वी सर्वा वित्तस्य पूर्णा स्यात्स एको मानुष आनन्द इत्यारभ्य स एको ब्रह्मण आनन्द' इत्यन्तेन सर्वस्यापि भोगभूमेरत्रैवान्तर्भावः श्रूयत इति—सर्वमत्रैवान्तर्भूतमित्यर्थः। तत एव सम्पूर्णं निरतिशयं न केवलमेतादृशं श्रूयते किन्त्वनुभूयते च तथा विद्वद्भिरित्याह—दृष्टमिति । अनेन दृष्टफलत्वादप्येतस्य न विधिशेषत्वं फलवत्संनिधावफलं तदङ्गमिति फलशून्यस्यैवान्यशेषत्वात् प्रत्युत तस्यैव तच्छेषत्वं दृष्टफले संभवति । सर्वथाप्यदृष्टफलपरत्वकल्पनानुपपत्तेरिति दर्शितम् ॥ ३०१ ॥

ननु बहुवित्तव्ययायाससाध्यैरश्वमेधपर्यन्तैर्यज्ञैरिन्द्रादिप्राप्तिरेव प्रार्थ्यते। श्रुतिरप्येतासां देवतानामेको भवतीति देवताप्राप्तिमेव फलत्वेन दर्शयतीति तद्विलक्षणमोक्षः कथं पुरुषार्थ इतिचेत्किमेतावता मोक्षोपि पुरुषार्थतया देवताप्राप्तिरेवेत्युच्यते किं वा देवताप्राप्तिविलक्षणतया अपुरुषार्थ इति । नाद्यः । सा हि कर्मणामपरविद्यायाश्च फलं न निर्गुणब्रह्मविद्यायाः 'ब्रह्म वेद ब्रह्मैव भवती'ति परविद्यायाः

यस्यापि विप्लुषि कृतार्थतया निषण्णाः
शक्रादयो जलचरा इव सागरस्य ।
प्रत्यक्स्वभावकमपास्तसमस्तदुःखं
तद्वैष्णवं सुखमवाप्तवतः किमन्यत् ॥ ३०२ ॥

यस्यापीति । सागरस्य विप्लुषि लेशे मीना इव शक्रादयो देवता यस्य सुखस्य विप्लुषि कृतार्थतया निषण्णा उपविष्टास्तद्वैष्णवं परमात्मस्वरूपभूतं सुखं विद्ययाऽवाप्तवतः किमन्यत्प्रापणीयमित्यर्थः । सुखस्य वैष्णवमित्यनेन परमात्मस्वरूपतया प्राप्तव्यस्यापि क्रियापूर्विकैव प्राप्तिरुचिता न ज्ञानमात्रादितिशङ्कांनिराकरोति—प्रत्यक्स्वभावकमिति । ततश्चाज्ञानादेव व्यवधानप्रतीतिरिति, ज्ञानादेव तत्प्राप्यत इत्यर्थः। तथा च एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीतिदेवतानां स्वरूपानन्दलेशवत्तयैव कृतार्थत्वेंऽशापेक्षयांशिन आधिक्यस्य लोकेप्यवगतत्वात् किमु वक्तव्यं ब्रह्मानन्दमात्मतया प्राप्तवतः कार्तार्थ्यमित्यर्थः। न केवलं परविद्याया अनतिशयानन्दावाप्तिरेव भवति किन्तु निखिलानर्थनिवृत्तिरपि । न चेयं कर्मणा भवति तस्य तद्धेतुत्वादतो विद्याफलं मोक्ष उत्कृष्ट इत्याह— अपास्तसमस्तदुःखमिति ॥ ३०२ ॥

ननु प्रत्यक्स्वरूपस्य परमानन्दरूपत्वे किमिति तथा सर्वैर्नानुभूयते प्रतीयत एव किन्तु प्रतीयमानेप्यप्रतीतत्वारोपात्तथा न व्यवह्रियत इत्याह—

अज्ञानमात्मविषयं भवहेतुभूतं
प्रच्छादकं च परमात्मसुखस्य तूर्णम् ।
त्रय्यन्तवाक्यजनितात्ममतिर्विपाक-

अज्ञानमिति । अत एव तस्य स्वरूपत्वेपि वाक्यजन्यज्ञानमर्थवदित्याह—तूर्णमित्यादिना । विपाकं विषयप्रतिष्ठितत्वं यदि शब्दो निश्चयार्थे हन्त्येवेत्यर्थः । अतः उभयविधपुरुषार्थस्यापि विद्यया सिद्धत्वान्न विदुषः किञ्चिदर्थनीयमित्याह—तत्र किमर्थनीयमिति । आत्मसाक्षात्कारे सति न किञ्चिदप्यर्थनीयमित्यर्थ ॥ ३०३ ॥

नन्वेवमपि मोक्षसुखस्य पुरुषार्थत्वमनुपपन्नं प्रवृत्तिनिवृत्तिसाध्ययोरप्राप्तस्वर्गाद्यपरिहृतनरकादिप्राप्तिपरिहारयोरेव पुरुषार्थत्वाल्लोकेऽपि साध्ययोरिव तयोस्तत्त्वदर्शनादित्याशङ्क्य स्वतः प्राप्तपरिहृतयोर्भ्रान्तिमात्रेणाप्राप्तापरिहृततया प्रतीयमानयोर्ज्ञानाद्भ्रान्तिनिवृत्तिमात्राधीनप्राप्तिपरिहारयोरपि तयोः पुरुषार्थत्वं लोके दृष्टं ततो मोक्षस्यापि पुरुषार्थत्वमुपपन्नमित्यभिप्रेत्य सदृष्टान्तं श्लोकद्वयेनाह—

**करमुष्टिनिविष्टमुत्तमं कनकं प्रस्मरणादलब्धवत्**
**प्रतिभाति तदाप्तवाक्यतः प्रतिपत्त्या लभते यथा जनः ३०४**

**परमात्मपदं पराकृतद्वितयं प्राप्तमपि स्वभावतः**
**अनवाप्तवदेव लिप्सते लभते चैवमयं प्रमाणतः ॥ ३०५॥**

करमुष्टीत्यादि । करमुष्टिनिविष्टमाकुञ्चिताङ्गुलिकरतललग्नमनेन स्वतः प्राप्तत्वं स्वर्णस्योक्तम् । एतच्च परिहृतस्थाणुचोरस्याप्युपलक्षणम् प्रनष्टं स्मरणं प्रस्मरणं तस्मादलब्धवदनवाप्तवदपरिहृतमिव चेत्यपि द्रष्टव्यम् । तत्कनकं चोरं च लभते आप्नोति परिहरति चेत्यर्थः । लिप्सते प्राप्तुमभिवाञ्छतीत्यर्थः । प्रमाणतस्तत्त्वमादिवाक्यजन्यात्मसाक्षात्कारादित्यर्थः । यथा हि कनकं मुष्टौ निधाय गच्छन्नन्धकारश्यामलितदृष्टिः समीपवर्तिनं स्थाणुं चोरं मन्यमान आह हा हतोऽस्मि

च नष्टमित्यनुशोचन् केनचित् कृपालुना मा भैषीर्मा शोचः न चोरोऽयं स्थाणुरेव मुष्टिं च विमुच्य कनकं पश्येत्युक्तस्तद्वाक्यजन्यज्ञानेन प्राप्तमपि कनकं प्राप्नुवन्निव परिहृतमेव चोरं परिहरन्निव कृतार्थोऽहमिति मन्यते, एवमयमधिकारी गुरूपदिष्टतत्वमस्यादिवाक्यात्प्राप्तमेव परमात्मानं प्राप्नुवन्निव परिहृतमेव संसारं परिहरन्निव कृतार्थो भवति। तथा च प्रवृत्तिनिवृत्त्यभावेपि मोक्षस्य पुरुषार्थत्वान्न दोष इत्यर्थः ॥ ३०४ ॥ ३०५ ॥

एवं वेदान्तानां प्रयोजनपर्यन्ततायै न प्रवृत्त्याद्यपेक्षेत्युक्तम्। इदानीं विधिफलनिरूपणेनापि वेदान्तेषु पुनः प्रवृत्त्याद्यपेक्षेत्याह—

**न स्वाध्यायवदाप्यता न च पुनस्त्रेताग्निवज्जन्यता**
**न व्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया।**
**पाठाधानजलोक्षणाभिषवणैः कूटस्थरूपं हि त-**
**द्ब्रह्मापास्तविकारजन्ममरणं निश्रेयसं साधनैः ॥ ३०६ ॥**

न स्वाध्यायवदिति। विधेर्हि फलं चतुर्विधं भवति उत्पत्त्याप्तिविकृतिसंस्कारभेदात्। तत्रोत्पाद्यत्वमग्नेः, अवाप्यत्वं स्वध्यायस्य, विकार्यत्वं सोमस्य, संस्कार्यत्वं व्रीहेः। स्वाध्यायाद्याप्त्यादौ क्रमेण साधनमाह—पाठेत्यादिना। तत्रास्य ब्रह्मस्वरूपमोक्षस्याध्ययनेन स्वाध्यायवद्वेदस्येव नाप्यता न प्राप्यता, आधानेन त्रेताग्निवदाहनीयाद्यग्नेरिव जन्यता च न, प्रोक्षणेन व्रीहियवोलूखलादेरिवास्य संस्कृतियुजा संस्कार्यत्वमपि न, अभिषवणेन सोमवत्सोमलतावद्विक्रियाविकार्यत्वमपि न। यथाहि स्वाध्यायोऽध्येतव्य इतिविधिः कर्मकारकप्रधानत्वात्तन्निष्ठं किञ्चिदतिशयं बोधयति। कर्मकारकं च स्वाध्याय इति तदवाप्तिस्तस्य फलमवाप्तेः स्वाधीनोच्चारणक्षमत्वेन पाठजन्यत्वाद्यथा वाग्नीनादधी-

गतातिशयविशिष्टाग्न्युत्पत्तिरेव फलं यथा वा व्रीहीन् प्रोक्षतीतिकर्मकारकप्रधानप्रोक्षणविधेः प्रोक्षणक्रियायाः व्रीहिगतसंस्कार एव फलं यद्वच्च सोममभिषुणोतीत्यत्र सोमाभिषवणविधेरभिषवणेन सोमगत रूपान्तरापत्तिः फलं भवति। एवमस्य ब्रह्मण आप्यत्वादिकं न संभवतीत्यर्थः। चतुर्विधान्यतमक्रियाफलमात्मनि न संभवतीत्यत्र हेतुमाह—कूटस्थरूपमित्यादिना। कूटस्थरूपमित्यनाधेयातिशयस्वभावमतो न ब्रह्मणः संस्काराख्यं क्रियाफलमित्यर्थः। यद्यप्यविद्यानिवृत्त्याख्यमलापकर्षलक्षणसंस्कारो ब्रह्मण्यपि सभवति। तथापि सा ज्ञानैकसाध्येति न क्रियाफलमित्यर्थः। ब्रह्मेतिपदेनानवच्छिन्नमहत्त्ववाचिना तस्यावाप्यत्वं निरस्तम्। अपास्तविकारजन्ममरणमित्यनेनोत्पाद्यत्वविकार्यत्वे निरस्ते। हि शब्दो हेतौ। यस्मात्कूटस्थरूपं ब्रह्मापास्तविकारजन्ममरणं च तन्निश्रेयसं तस्मात्साधनैः पाठाध्यानजलोक्षणाभिषवणैः स्वाध्यायवन्नाप्यते इत्यादिना सम्बन्धः। एतदुक्तं भवति क्रियासाध्यत्वे मोक्षस्य तस्योत्पाद्याद्यन्यतमत्वेन भवितव्यं क्रियाफलस्य तथात्वनियमात् न च मोक्षे कूटस्थाद्यात्मस्वरूपे तदस्ति अतो न क्रिया साध्यो मोक्ष इति न कथमपि प्रवृत्त्यपेक्षेति ॥ ३०६ ॥

ननु आत्मस्वरूपतया मोक्षस्योत्पाद्यविकार्यसंस्कार्यत्वाभावेप्याप्यत्वं वक्तव्यं ब्रह्माप्येति श्रुतेरित्याशङ्क्याह—

> ब्रह्मैव सन्निति वचः प्रथमश्रुतत्वा-
>
> दप्येतिशब्दमुपसंहरणस्थमुच्चैः।
>
> प्रत्यावयत्स्वविषयादुचिताद्बलीयो
>
> ब्रह्मात्मनोरनतिरेकमसाध्यमाह ॥ ३०७ ॥

प्रथममादौ श्रुतत्वाद्बलीय उपसंहरणस्थमन्ते पठितमप्येतिशब्दमु-च्चितात्स्वविषयान्मुख्यार्थात् उच्चैः स्पष्टं प्रच्यावयदुत्सारयद्ब्रह्मा-त्मनोरसाध्यं स्वाभाविकमेवानतिरेकमभेदमाहेत्यर्थः। यद्यपि ब्रह्मा-प्येतीति तद्भावस्याप्यत्वं श्रूयते। तथापि तस्मिन्नेव वाक्ये प्रथमं ब्रह्मैव सन्निति स्वाभाविकं ब्रह्मस्वरूपमिति श्रूयते प्रथमावगतानु-रोधेन चरमावगतं नेयमिति हि न्यायः ततः प्रथमं बुद्धिस्थेन बली-यसा ब्रह्मैव सन्नितिपदेन तद्विपरीतोऽप्येति शब्दः स्वार्थात्प्रच्याव्यौप चारिक्यामाप्तौ व्यवस्थाप्यत इति भावः ॥ ३०७ ॥

नन्वाख्यातपदानां नामपदापेक्षया प्रधानत्वं वक्तव्यम्। तस्यैव भव्यार्थोपस्थापकत्वान्नामपदं च भूतार्थोपस्थापकत्वेनाप्रधानमेवा-ऽप्येति शब्दश्चाख्यातपदं ब्रह्मैव सन्निति च सुबन्तमतोऽनयोर्बला-बलभावो विपरीत एव। न च प्रथमाधीततयास्य प्राबल्यमिति वाच्यम्। तस्य मीमांसायां तत्र तत्र चरमश्रुतेनापि बलवता बाधस्य व्युत्पादि-तत्वात्तत्र च चरमश्रुतस्याख्यातत्वेन भव्यवाचकत्वात्प्राबल्यमित्या-शङ्क्य किमेतस्य भव्यार्थवाचकत्वं तिङन्तत्वेन निश्चीयते उत प्रकारा-न्तरेणेति विकल्प्य यथा भव्यस्य तिङन्तवाच्यत्वं न नियतमेवं तिङन्तस्यापि न भव्यवाचकत्वनियम इति वक्तुमादौ भव्यस्य तिङ-न्तवाच्यत्वनियमं निराकरोति —

आग्नेय इत्याद्यपि तद्धितान्त-
मष्टाकपालादि समन्वितं सत्।
आख्यातशब्दस्य धुरं बिभर्ति
भव्यार्थसंवित्तिनिबन्धत्वात् ॥ ३०८ ॥

आग्नेय इति। आग्नेयाग्नीषोमीयेत्यादि तद्धितान्तं यत्पदं तदष्टा-

कार्यं बिभर्त्ति धत्ते कुतः भव्यार्थसंवित्तिनिबन्धनत्वात्—कृतिसाध्यप्रतीति जनकत्वादित्यर्थः। एतदुक्तं भवति आग्नेयोऽष्टाकपालोग्नीषोमीयमेकादश-कपालमित्यादावग्निर्दैवताऽस्याग्निषौमौ देवताऽस्य अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यादिव्युत्पत्त्याग्नीषोमादिदेवतापुरोडाशादि द्रव्ययोः सम्बन्धस्य च तद्धितप्रत्ययेनावगमाद् द्रव्यदेवतयोर्यागस्व-रूपत्वात्तत्सम्बन्धस्य यागाविनाभूतत्वेन यागस्य तेनाक्षिप्तत्वात्स्व-रूपयागस्य भव्यस्यानेनैवावगतत्वादाग्नेयोऽष्टाकपाल इत्येतदेव याग-विधायकत्वादर्थत आख्यातपदं भव्यार्थप्रतीतिजनकत्वस्यैव तल्लक्षण-त्वादतो न भव्यमाख्यातैकवाच्यमित्यर्थः॥ ३०८।

भवतु भव्यस्याख्यातैकवाच्यत्वानियमः आख्यातस्य तु भव्यै-कवाचकत्वे को दोषस्तत्राह—

आख्यातमेव सदिदं भवतीतिनाम-

भव्येतरार्थमतिजन्मनिबन्धत्वात्।

अप्येतिशब्दमपि तद्वदिमं प्रतीमो

भव्येतरार्थगतबुद्धिनिबन्धत्वात्॥ ३०९॥

आख्यातमेवेति। अथवा नन्वेकस्मिन्वाक्ये एकमेवाख्यातपदं वक्तव्य-मन्यथाख्यातभेदेन वाक्यभेदापातात् अत्र च भवतीतिस्पष्टमेवाख्यात पदं श्रूयते। तत्कथमाग्नेयादिपदमप्याख्यातं स्यादित्याशङ्क्य भवति पदस्योक्ताख्यातलक्षणविधुरत्वान्नाम लक्षणयुक्तत्वाच्चाख्याताभासत्व-मित्यर्थतो नामैव तत्पदमित्याह—आख्यातमेवेति। इदं भवतीति पदं शब्दतः आख्यातं सदपि नामपदमेव तत्र हेतुः—भव्येतरार्थमितिजन्मनिबन्धत्वात्। असाध्यार्थबोधकत्वादित्यर्थः। यद्यपि भवतीतिपद शब्दतरित-ङन्तं तथापि भवनस्याभावार्थतया भव्यव्यापारतया वा पुरुष-

त्वस्यैव नामत्वादित्यर्थः। अतोऽप्येतिशब्दस्य न तिङन्तत्वेन भव्यार्थ बोधकत्वं कल्पयितुं शक्यत इति न तत्प्रथमावगतं बाधत इति भावः। या या प्राप्तिः सा सर्वा क्रियापूर्विकेति नियमस्य ग्रामादिप्राप्तौ दर्शनाद्-ब्रह्मावाप्तेरपि क्रियापूर्वकत्वं वक्तव्यमित्यप्येतिपदस्य भव्यार्थत्वेन प्राधान्यमित्याशङ्क्याह—अप्येतिशब्दमपीति। तद्वद्भवतीतिपदवदर्थतोनामेति प्रतीम इत्यर्थः। ननु तत्र बाधकवशान्नामत्वं न चात्र बाधकं प्रत्युत साधकमस्तीत्युक्तं तत्राह—भव्येतरार्थगतेति। तद्विषयेत्यर्थः। अयम्भावः न चात्र बाधकाभावः। तथाहि न तावच्छाखामृगस्येव विदुषः प्राप्तदेशमपहाय देशान्तरप्राप्तिः सम्भवति। प्राप्यप्रापकयोरुभयोरपि सर्वगतत्वात्। ननु जीवस्य विभुत्वेपि कर्मफलभोगार्थं देशान्तरप्राप्तिवत्परमात्मप्राप्तिः किं न स्यात्। न च तत्र देशान्तरस्य परिच्छिन्नतया पूर्वमप्राप्तत्वेन भवति तत्र क्रियापूर्विका प्राप्तिर्न तथात्र सम्भवति प्राप्यस्य परस्य सर्वगतत्वादिति वाच्यम्—परस्य विभुत्वेपि तस्य विकृताविकृतोभयदेशतया विकृतदेशपरिहारेणाविकृतदेशप्राप्तेः क्रियापूर्वत्वसम्भवादिति चेन्न। सम्भवति हि कर्मफलभोगार्थं देशान्तरगमनं तत्र गमनोपाधिभूतस्य मुख्यामुख्यप्राणस्य सत्त्वादत्र च न तथोपाधिरस्ति। तस्य तप्तायः सिक्तजलवद्ब्रह्मज्ञानेन ब्रह्मणि निलीनत्वात्तथा च श्रुतिः "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त" इति नापि परस्य विकृताविकृतदेशद्वयं प्रामाणिकं तस्य सर्वत्र सर्वदा अविकृतत्वात्। यस्तु प्राप्तेः क्रियापूर्वकत्वनियम उक्तः स तथैव। इयन्तु न प्राप्तिविभागसमानाश्रयत्वायोग्यत्वाच्चाप्तिशब्दाभिधेयत्वमात्रेण तस्याः क्रियापूर्वकत्वं कण्ठगतचामीकारादिप्राप्तिशब्दाभिधेये व्यभिचारात्। ननु क्रियापूर्वं प्राप्त्यभावेपि ज्ञानेन ज्ञाततया प्राप्यत्वं किं न स्यादिति चेन्न—स्वयंप्रकाशज्ञानात्मकतया तस्य तद्रूपेणापि नित्याप्तत्वात्तस्मान्न कथमप्यप्येति शब्दस्य भव्यार्थतया प्राधान्यमिति प्रथमावगतं ब्रह्मेति पदमेव प्रधानमिति भावः॥ ३०६॥

फलितमाह—

ब्रह्मैव सन्निति गिरं प्रति शेषितार्थै
नाप्येतिगीरियमलं कथितोपपत्तेः।
आख्यातमेव खलु नाम पदस्य शेषि
नाऽऽख्यातमेतदनृतत्वनिवेदकत्वात् ॥ ३१० ॥

ब्रह्मैव सन्निति। अथवा नन्वेतस्याख्यातत्वाभावेऽप्येकपदश्रुतित्वादितरस्य पदसमुदायात्मकवाक्यत्वात्तयोर्विरोधे श्रुतेर्बलीयस्त्वादप्येतिपदं मुख्यार्थमित्याशङ्क्यानर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेन एवं सति वाक्यस्य गत्यभावाच्छ्रुत्यर्थस्य च दुर्निरूपत्वाच्च तत्र वाक्यमेव प्रबलमित्याह—ब्रह्मैव सन्निति। एवं च सत्याख्यातप्राधान्यमपि न मया परित्यक्तम्। अत्रास्याख्यातत्वमेव न सम्भवतीत्याह—आख्यातमेवेति। तथा च ब्रह्मेतिपदस्य भव्यार्थशेषबोधकत्वं नास्तीति भावः ॥ ३१० ॥

ततोऽपि किमित्याकाङ्क्षायामाह—

ब्रह्मैव सन्निति ततः प्रथमश्रुतं स-
दप्येति शब्दमपसारयति स्ववाच्यात्।
अस्याङ्गभावविरहादमुना सहातो
ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः ॥ ३११ ॥

ब्रह्मैव सन्निति। पदमितिशेषः। अप्येतिशब्दस्याख्यातत्वाभावस्ततः शब्दार्थः। ततोऽमुनाप्येतिशब्देन अस्य ब्रह्मैव सन्नितिपदस्याङ्गभावविरहादप्येतिपदं प्रति शेषत्वाभावाद् ब्रह्मैव सन्नितिपदं प्रथमं श्रुतं सदप्येतिशब्दं स्ववाच्यादपसारयतीति सम्बन्धः। ततोपि

किमित्यत आह—अतो ब्रह्मात्मनोरिति । अप्येतिशब्दस्यामुख्यार्थत्वमतः शब्दार्थः, धीराः न्यायकुशलाः ब्रह्मवादिनो ब्रह्मात्मनोरनतिरेकमभेदमुशन्ति वाञ्छन्तीत्यर्थः ॥ ३११ ॥

एवमाख्यातप्राधान्येपि नाप्येतिपदस्य प्राधान्यं तस्याख्यातत्वाभावादित्युक्तम्। इदानीं प्रतीत्यनुरोधेनास्त्विदमाख्यातपदं तथापि नात्र तद् ब्रह्मवद्यत्र हि भूतं भव्यार्थं स्यात्तत्रैव भव्यवाचकाख्यातस्य प्राधान्यमत्र तु न भूतं भव्यार्थं ब्रह्मणः स्वप्रधानस्यैव वाक्यप्रमेयत्वात् । किन्तु भव्यमेव वेदानुवचनादि भूतब्रह्माभिव्यक्तिशेषतया भूतशेषमतो विवक्षितब्रह्मात्मप्रतिपादकतया नामैवाख्यातपदाद्बलवदिति भूतभव्यन्यायोऽत्र विपरीत एवेति सप्रमाणमाह—

**भव्याय भूतमिति किं च विधिप्रधाने**
**काण्डे नयोऽयमिह तद्विपरीतमाहुः ।**
**भूताय भव्यमिति भूतपरं हि सर्वं**
**वेदावसानमिति सूत्रकृदाचचक्षे ॥ ३१२ ॥**

भव्याय भूतमिति । विधिप्रधाने काण्डे कर्मकाण्डे इह ब्रह्मकाण्डेवैपरीत्यमेवाह—भूताय भव्यमिति । तत्र प्रमाणमाह—भूतपरं हीति । हि यस्मात्सूत्रकृत्सर्वं वेदावसानं—वेदान्तः भूतपरं स्वप्रधानब्रह्मपरमित्याचचक्षे । तस्मादित्यर्थः । सूत्रकारो हि—तत्तु समन्वयादित्यादि सूत्रसन्दर्भेण सर्वेषां वेदान्तानां ब्रह्मण्येव समन्वय इति दर्शयति—सर्वापेक्षेत्यादिना च यज्ञादीनामात्मप्रतिपत्तिद्वारा नित्यसिद्धमोक्षोपयोगं च । अतोऽत्र विपरीत एव न्यायो युक्त इत्यर्थः ॥ ३१२ ॥

विपरीतन्यायप्रदर्शनफलमाह—

**ब्रह्मैव सन्निति ततोऽपि बलिष्ठमेत-**
**दप्येति शब्दमवसानगतं व्यपेक्ष्य ।**

तस्मादमुष्य परिपीडकमेतदेव
ब्रह्मैव सन्निातिपदं गुणकल्पनायै ॥ ३१३ ॥

ब्रह्मैव सन्निति । ततोऽपीति । ततो भूतस्य भव्यशेषत्वादपिशब्दात्पूर्वोक्तन्यायादपीत्यर्थः। ब्रह्मैव सन्नितिपदस्य प्राबल्यनिरूपणफलमाह—तस्मादिति । प्रबलत्वादित्यर्थः । अमुष्येतिपदस्य परिपीडकं स्वार्थात् प्रच्यावकं गुणकल्पनायै उपचारकल्पनायै तस्माद्ब्रह्मैव सन्नितितत्पदममुष्य गुणकल्पनायै परिपीडकमिति सम्बन्धः । तथा च मोक्षस्य नित्यसिद्धात्मस्वरूपतया न क्रियापूर्विका प्राप्तिरिति भावः ॥ ३१३ ॥

ननु क्रियासाध्यत्वाभावेपि मोक्षस्य ज्ञानसाध्यत्वं वक्तव्यमन्यथा ज्ञानवैयर्थ्यप्रसङ्गादित्याशङ्क्य यथा तस्य कूटस्थात्मस्वरूपस्योत्पत्त्यादीनामभावान्न क्रियासाध्यत्वमेवं ज्ञानसाध्यतापि नास्तीत्याह-

निःश्रेयसं न खलु साध्यमतः क्रियाभि-
र्ज्ञानेन वा द्वयसमुच्चयवर्त्मना वा ।
उत्पत्तिराप्तिविकृती च न संस्कृतिश्च
यस्मान्न संभवति वर्णितवर्त्मनेह ॥ ३१४ ॥

निःश्रेयसमिति । प्रत्येकं क्रियाज्ञानसाध्यत्वाभाववत्समुच्चिताभ्यामपि ताभ्यां न साध्यत इत्याह—द्वयसमुच्चितवर्त्मनेति । एतच्चोपरिष्टात्प्रपञ्चयिष्यति । नच ज्ञानं व्यर्थमविद्यानिवृत्त्यार्थवत्त्वादित्यर्थः । इहात्मस्वरूपमीक्षे-इह वर्णितवर्त्मना यस्मादुत्पत्तिर्न संभवति । आप्तिविकृती च न सम्भवतः। संस्कृतिश्च न सम्भवति । तस्माद्यथा-क्रियाभिर्निश्रेयसं न साध्यते तथा ज्ञानेन वा समुच्चयवर्त्मना वा न साध्यते खल्वित्यर्थः ॥ ३१४ ॥

मोक्षस्यासाध्यत्वसमर्थनफलमुपसंहरति—

तस्मात् प्रवृत्तिविनिवृत्तिविवर्जितत्वं
ब्रह्मात्मवस्तुविषयावगतेर्न दोषः ।
सर्वप्रवर्त्तकनिवर्तकमूलदाहा-
त्स्वाराज्यहेतुरिति भूषणमेव तन्नः ॥३१५ ॥

तस्मादिति । यस्मान्न प्रवृत्तिसाध्यो मोक्षः । तस्माद्ब्रह्मात्मवस्तु-विषयावगत्यनन्तरं प्रवृत्तिनिवृत्तिविधुरत्वमात्मनो न दोषायेत्यर्थकं न केवलं प्रवृत्त्यादिराहित्ये ज्ञानस्य दोषाभावमात्रं किन्तु तद्गुण एव अन्यथावगत्यनन्तरमपि प्रवृत्त्याद्यपेक्षायां तद्धेतुरागद्वेषयोस्तद्धेत्व-विद्यायाश्चावश्यकत्वेन वैयर्थ्यप्रसङ्गादित्यभिप्रेत्याह—सर्वप्रवर्त्तकेति । सर्वेषां विवेकनामविवेकिनां च यौ प्रवर्त्तकनिवर्त्तकौ रागद्वेषौ तयो-र्मूलमज्ञानं सर्वस्यालौकिकवैदिकप्रवृत्तिनिवृत्त्योर्यत्कारणं तन्मूलमिति वा । ननु माभूत् प्रामाण्यमूलप्रयोजनार्थं प्रवृत्तिः वेदान्तानां शास्त्रत्व-निर्वाहाय प्रवृत्त्यादिपरत्वं वक्तव्यम् तदुक्तं "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत" इति चेन्न हितशासित्वं शास्त्रत्वं न प्रवृत्तिपरत्वं निवृत्तिपरत्वं वा तयोः प्रत्येकमव्याप्तेः । उभयपरत्वं चासंभवीत्यर्थः ॥ ३१५ ॥

यदुक्तमज्ञातवस्त्ववगाहिनो मानस्यात्मनि प्रवृत्तिर्न संभवति तस्मिन्नज्ञानासंम्भवादिति तत्र किं मानाभावादात्मनि तन्न संभवती-त्युच्यते किं वा स्वयंप्रकाशे तस्मिन्विरुद्धत्वादित्याद्येपि किमज्ञान-स्यात्मविषयत्वे प्रमाणाभावः किं वा तदाश्रयत्व इति विकल्प्याद्य-पक्षद्वयं दूषयति—

अज्ञाततापि घटतेऽत्र दृशोनुभूते-
र्जानामि नाहमिति दृश्यपि दृश्यते हि ।

अज्ञातताऽनुभवनं न च वास्तवं त-
दज्ञाततोद्वहति कल्पिततां हि तस्याः ॥ ३१६ ॥

अज्ञाततापीति । अज्ञातता ज्ञानं दृश इति कर्मणि षष्ठी । अत्रात्मनि दृग्विषयमज्ञानं घटत इत्यर्थः । तत्रानुभवः प्रमाणमित्याह— अनुभूतेरिति । अनुभवमभिनीय दर्शयति दृशोनुभूतेर्जानामि नाहमित्यादिना मामहं न जानामीति प्रत्यगात्माश्रयतद्विषयाज्ञानं दृश्यत इत्यर्थः। तर्हि किं प्रमाणसिद्धत्वादज्ञानं वास्तवमेव नेत्याह— नचेति । तदज्ञानानुभवनं वास्तवं न विषययाथार्थ्यापादकं प्रमाणमित्यर्थः । हि यस्मात्साक्षिणो भ्रान्त्यभ्रान्तिसाधारणतया ज्ञानानुभवनं न प्रमाणं तस्मादज्ञानं स्वस्य कल्पितत्वमेव वहतीत्याह—अज्ञाततेति । तस्या इति कर्मणि षष्ठी दृश इत्यर्थः ॥ ३१६ ॥

नन्वहं न जानामीति ज्ञानाभाव एवानुभूयते न तदतिरिक्तं किञ्चिद्भावरूपं सर्वत्रापि नञर्थानुभवस्याभावविषयत्वात् न च ज्ञनाभावविशिष्टतयैवात्मनो ज्ञातत्वमिति वाच्यम्, तस्य नित्यज्ञानस्वरूपत्वेन तदभाववैशिष्ट्यानुपपत्तेरिति चेत्तत्राह—

अज्ञानमित्यजडबोधतिरस्क्रियात्मा
जाड्यं च मौढ्यमिति च प्रकृतिः प्रसिद्धा ।
सा चातिदुःस्थितवपुर्दशमद्वितीया
मालिङ्गति स्म घृतपिण्ड इवाग्निमिद्धम् ॥ ३१७ ॥

अज्ञानमिति । न च ज्ञानाभाव एवाज्ञानमभावस्य प्रत्यक्षत्वानुपपत्तेः । अज्ञानं चापरोक्षमेव सुखादिवदनुभूयते । नन्वभावस्यापि प्रत्यक्षत्वमस्तीति चेन्न— इन्द्रियसम्बन्धं विना तस्य प्रत्यक्षत्वानुपपत्तेः । ननु संयुक्तात्मविशेषणविशेष्यभाव एव तस्येन्द्रियप्रत्यासत्तिरिति

चेन्न—संयुक्तात्मना तस्य मूलसम्बन्धं विना विशेषणविशेष्यभावस्यै-वानुपपत्तेः । नन्वभावात्मस्वरूपद्वयमेव तयोः सम्बन्ध इति चेन्न—सम्बन्धस्य सम्बन्धिभिन्नत्वनियमादन्यथाऽभावस्वरूपसम्बन्धस्येश्वरात्मन्यपि सत्त्वेन तस्याप्यहं सर्वज्ञ इति वदहमज्ञ इत्यनुभवप्रसङ्गादज्ञानसम्बन्धे विद्यमानेपि तदपरिज्ञाने तस्यासर्वज्ञत्वप्रसङ्गात् । नन्वीश्वरोपि देवदत्ताज्ञानवानहमित्यनेन रूपेण सर्वाज्ञानतत्सम्बन्धान् जानातीति चेन्न—अभावरूपस्योभयसाधारणत्वेन तस्य देवदत्तीयत्वेनैव विशेषणायोगात् । ननु देवदत्तसमवेतज्ञानप्रतियोगित्वात्स देवदत्तीय इति चेदहो अयमसिद्धेनैवासिद्धं साधयितुं प्रगल्भते । न हि ज्ञानतदभावयोः कश्चित्सम्बन्धः सम्प्रतिपन्नोस्ति । येन देवदत्तज्ञानमेव तत्प्रतियोगि नान्यदिति स्यात् । न च तयोर्निरूप्यनिरूपकभाव एव सम्बन्धः । तत्रापि सम्बन्धस्य वक्तव्यत्वात् । किं च देवदत्तज्ञानप्रतियोगित्वमभावस्य तेन सम्बन्ध इत्युच्यते किं वाज्ञानाभावस्यैतद्देवदत्ताद्यज्ञानत्वे प्रयोजकमिति । नाद्यः । तदत्यन्ताभावस्यापि देवदत्तसंबन्धप्रसङ्गात् । द्वितीये देवदत्ताज्ञानत्वादिविशेषाक्रान्ताभाववैशिष्ट्येनाहं देवदत्ताज्ञानवानिति विशेषाज्ञानानुभववदज्ञानत्वसामान्याक्रान्ताभाववैशिष्ट्येनाहं देवदत्ताज्ञानवानिति विशेषाज्ञानानुभववदज्ञानत्वसामान्याक्रान्ताभावमज्ञ इत्यनुभवस्य दुरपह्नवत्वात् । ननु तदीयाज्ञानवैशिष्ट्यमेव तदीयाहमज्ञ इत्यनुभवविषयः । नचाज्ञानस्येश्वरीयत्वमस्तीति चेन्न-अन्यदीयदण्डसम्बन्धिनि स्वस्मिन्नहं दण्डीत्यनुभववदन्यदीयज्ञानसम्बन्धेप्यहमज्ञ इत्यनुभवस्यौचित्यात् । अस्त्विति चेन्न सर्वज्ञत्वाज्ञत्वयोः सांकर्यानुपपत्तेरीश्वरस्येश्वरत्वानुपपत्तेश्च वास्तवाज्ञत्वज्ञानप्रयुक्तदोषस्य संसारस्यापि सिद्धत्वात् । ननु तत्वज्ञानस्य सत्त्वान्न संसार इति चेन्न—तस्य वास्तवाज्ञत्वाविरुद्धत्वेन तत्प्रयोज्यसंसारेणाप्यविरुद्धत्वात्तस्मादीश्वरस्याज्ञत्वपरिहारायाज्ञानसम्बन्धाभावो वक्तव्यः । स च तस्य स्वरूपत्वे न

सम्भवति । ननु नास्त्येव तस्याज्ञानसम्बन्धः । सम्बन्धान्तरमन्तरा विशिष्टप्रत्ययविषयतायोग्यत्वस्याभावाधिकरणसम्बन्धस्य भगवत्यभावादिति चेत्तादृशयोग्यता किमभावाधिकरणस्वरूपमेव किं वा ततोऽतिरिक्ता । आद्ये नोक्तदोषनिस्तारः । द्वितीयेऽपसिद्धान्तः । अतीन्द्रियशक्त्यपरपर्याययोग्यतायास्त्वयानङ्गीकारात् । किं च विशिष्टप्रत्ययविषयत्वयोग्यताया अभावसम्बन्धत्वे घटवति भूतले तदभावभ्रमस्यापि पुरोदेशसम्बन्धविषयत्वेन प्रमात्वापातः । न च विशिष्टप्रत्ययजनकत्वं तथा च न भ्रमविषयाभावस्यास्ति भ्रमस्य विषयाजन्यत्वादिति वाच्यम् । अतीन्द्रियाभावस्याधिकरणसम्बन्धाभाव प्रसङ्गात् । तस्मादभावस्याधिकरणसम्बन्धाभावान्न प्रत्यक्षत्वं मा भूत्तर्हि ज्ञानाभावस्य प्रत्यक्षत्वं योग्यानुपलब्धिगम्यत्वमेवास्त्विति चेन्न—ज्ञानातीन्द्रियत्ववादिनो ज्ञानाभावस्य योग्यानुपलब्धिग्राह्यत्वानुपपत्तेः । प्रत्यक्षप्रतियोगिकाभावस्यैव योग्यानुपलब्धिगम्यत्वात्तर्हि ज्ञातताभावेनानुमीयत इति चेन्न—तस्या विषयेष्वनावश्यकत्वात् । अत एव व्यवहाराभावेनापि ज्ञानाभावानुमानं निरस्तं किन्त्वज्ञानसंसर्गाभाव एवाज्ञानमिति वक्तव्यम् । अन्यथा ज्ञाने सत्यपि न जानामीत्यनुभवप्रसङ्गात्तत्रापि नात्यन्ताभावप्रध्वंसावज्ञानं तदनित्यताविषयानुभवस्मृत्योर्विरोधादनुभवो घटज्ञानेन मेऽज्ञानं नष्टमिति "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन" इति च स्मृतिः । प्रागभावोऽज्ञानमित्यत्रापि किं यावज्ज्ञानप्रागभावः । उत यत्किञ्चिद् ज्ञानप्रागभावः । नाद्यः । सर्वेषां ज्ञानानां प्रागभावस्य देवदत्ते युगपदसंभवात् । न द्वितीयः । घटज्ञाने सत्यपि घटमहं न जानामीत्यनुभवप्रसङ्गात् । घटविषयज्ञानान्तरप्रागभावस्य सत्त्वात् । ननु तदापि घटज्ञानान्तरमपि नास्तीत्यनुभवोऽस्तीति चेत्सत्यमेव घटमहं न जानामीत्यप्यनुभवः किमिति न भवेद्विषयास्य सत्त्वात् । नन्वन्वय व्यतिरेकाभ्यां ज्ञानासमानकालीनज्ञानाभावस्यैवाज्ञानानुभवविषयत्वं

कल्प्यत इति चेत्तर्हि घटमहन्न जानामीति कदाप्यनुभवो न स्यात्। ज्ञानासमानकालीनत्वाभावादभावस्य। ननु विशेषविषयज्ञानासमानकालीनत्वमभावस्यात्राप्यस्तीति चेन्न घटत्वादिविशेषज्ञानस्यात्रापि सत्त्वात्। ननु घटमहं जानामीत्यनुभवस्य घटत्वादिविशेषविषयत्वेपि घटविशेषो न विषयः। अज्ञानं तु तद्विषयमतः स्वविषयविशेषज्ञानासमानकालीनज्ञानाभावो ऽज्ञानमितिधियो विषय इति चेत्कस्तर्हि घटविशेषविषयज्ञानाभावगोचराज्ञानानुभवः घटमहं न जानामीत्यनुभव इति चेन्न-अस्य घटसामान्याज्ञानविषयत्वादन्यथा विशेषविषयज्ञानस्य विशेषान्तराज्ञानाविरुद्धत्वेन यत्किञ्चिद्घटज्ञाने सत्यपि घटं न जानामीत्यनुभवप्रसङ्गादस्तु तर्हि घटविशेषं न जानामीति तदनुभव इति चेत्तर्ह्यज्ञानविशेषणत्वेन विशेषस्यापि ज्ञायमानत्वेन स्वविषयविशेषज्ञानासमानकालीनत्वाभावेनाज्ञानाननुभवप्रसङ्गः। नन्वज्ञानाविषयकस्वविषयविशेषज्ञानासमानकालीनज्ञानाभावो ऽज्ञानमित्यनुभूयते एकस्मिन्घटज्ञाने सति तु तस्यैव ज्ञानस्याज्ञानाविषयस्याज्ञानविषयविशेषविषयस्य सत्त्वेन तत्कालीनज्ञानान्तराभावस्योक्तज्ञानासमानकालीनत्वाभावात् तथा नानुभूयत इति चेन्न-अज्ञानाविषयकेत्यत्र ज्ञानाभावस्यैवाज्ञानत्वे एतस्मिन्घटे मम पूर्वं ज्ञानं नाभूदिदानीमपि भविष्यज्ज्ञानं नास्तीत्यज्ञानविषयकज्ञानदशायां घटमहं न जानामीति तदनुभवप्रसङ्गात्। किञ्च किमेतादृशयत्किञ्चिज्ज्ञानासमानकालीनत्वमभावस्य विवक्षितमुत सकलतादृशज्ञानासमानकालीनत्वम्। नाद्यः। एकस्मिन्घटज्ञाने सत्यपिज्ञानान्तराभावस्य सत्त्वान्न जानामीत्यनुभवप्रसङ्गात्। द्वितीयस्त्वप्रसिद्धप्रतियोगिकः। किंच तत्तत्प्रागभावानुभवो ज्ञानत्वावच्छिन्नप्रतियोगिज्ञानाज्जायते। उत तत्तज्ज्ञानत्वावच्छिन्नप्रतियोगिज्ञानात्। नाद्यः। ज्ञानत्वस्य प्रागभावप्रतियोगितानवच्छेदकत्वात्तद्धि सामान्याभावप्रतियोगितामवच्छिनत्ति। न च प्रागभावः सामान्याभावोऽस्ति। तस्य यावद्वि-

शेषाभावव्याप्यत्वाद्विशेषप्रागभावानां चेकदैकत्रासत्त्वात् । न द्वितीयः । जनिष्यमाणज्ञानस्य तन्मात्रवृत्तिधर्मावच्छेदेनोत्पत्तेः पूर्वमनुभवितुमशक्यत्वात्तत्स्मरणस्याप्यनुपपत्तेः । तस्मादज्ञानस्याभावरूपत्वे न कथंचित्तदनुभव इति भावरूपमेवाज्ञानमिति । कथं तर्हि तस्य न जानामीति नञर्थत्वेनानुभव इति चेन्न—ज्ञानविरुद्धत्वेन तदुपपत्तेरित्याह—अजडबोधतिरस्क्रियात्मेति । स्वयंप्रकाशचैतन्यविरुद्धस्वरूपेत्यर्थः । तथा च धर्मविरुद्धतया पापस्याधर्म इत्यनुभववज्जडत्वेन ज्ञाननिवर्त्यत्वेन च स्वयंप्रकाशज्ञानविरुद्धत्वेन न जानामीत्यनुभवोपपत्तिरित्यर्थः । तस्याः जडबोधतिरस्क्रियात्मत्वमेवानुभवेन दर्शयति—जाड्यं चेति । अस्ति ह्यज्ञानस्य न जानामीत्यनुभववेद्यत्वेन जडत्वप्रसिद्धिः । अस्ति च मौढ्यप्रसिद्धिः—मूढोऽहमस्वाप्समित्यनुभवात् । नचाज्ञानं जडमेव न तु जाड्यमिति वाच्यम्—प्रमेयत्वस्य प्रमाविषयतया प्रमेयस्यापि प्रमेयघटादिस्थिततया प्रमेयत्ववद् दृश्यतया जडस्याप्यज्ञानस्य स्वकार्यघटादिष्वनुस्यूततया जाड्यरूपतोपपत्तिरिति । तथा च जडत्वादजडविरुद्धत्वं मौढ्याच्च बोधविरुद्धत्वमित्यर्थः । इतोऽप्यज्ञानस्य भावरूपत्वं वक्तव्यमित्याह—प्रकृतिरिति । प्रकृतिरिति च प्रसिद्धेत्यन्वयः । 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादि श्रुत्या रजतादेरज्ञानान्वयव्यतिरेकाभ्यां चाज्ञानस्य रजतवियदाद्युपादानत्वं सिद्धं ततश्चाज्ञानं भावरूपमुपादानकारणत्वान्मृत्पिण्डादिवदिति तस्य भावरूपत्वसिद्धिरित्यर्थः । नन्वज्ञानस्याजडबोधतिरस्क्रियात्मत्वमनुपपन्नं तथात्वे तस्याजडबोधस्वरूपात्माश्रयत्वानुपपत्तेरित्याशङ्क्य किं तस्य युक्तितोनुभवस्वरूपात्माश्रयत्वमनुपपन्नं किं वा प्रतीतितोऽपि । नाद्यः । तस्य युक्त्यसहत्वस्य भूषणत्वादित्यभिप्रेत्याह—सा चातिदुःस्थितवपुरिति । सा प्रकृतिर्यतोऽद्वितीयां सजातीयादिभेदरहितां दृशमालिङ्गते आश्रयते प्रदीप्तमग्निं घृतपिण्ड इव ततो दुर्निरूपेत्यर्थः । चशब्दो द्वितीयपक्षनिराकरणार्थः । अनुभवस्य दर्शितत्वादित्यर्थः ।

इदञ्चाज्ञानस्य युक्तयसहत्वं भूषणायेतिज्ञापनार्थमुक्तम् । वस्तुतस्तु—स्वरूपज्ञानं नाज्ञानविरोधि किन्तु तत्साधकमेव कथं तर्हि तन्निवृत्तिरिति चेन्न अखण्डाकारवृत्त्यभिव्यक्तस्वरूपज्ञानेन तदुपपत्तेः । न च ज्ञानमात्रमविद्याविरोधीति शक्यं वक्तुं तदाकारज्ञानस्यैवाज्ञानविरुद्धत्वात् ब्रह्मज्ञानस्य नित्यनिर्विकल्पतया तदाकारत्वाभावादन्यथा परमतेपि प्रमेयमितिज्ञानेन घटाज्ञानसंशयादिनिवृत्तिप्रसङ्गादतो न युक्तिविरोधोपीति भावः । एतेन द्वितीयपक्षो निरस्त इति द्रष्टव्यम् ॥ ३१७ ॥

न च श्रुतौ मायैव जगत्कारणं श्रूयते न त्वज्ञानं न च मायैवाज्ञानमिति वाच्यमैन्द्रजालिकनिर्मितगजादौ नियमेन मायाशब्दस्य प्रयोगादविद्याशब्दस्याप्रयोगाच्च ततः कथमज्ञानस्य प्रकृतित्वेन भावत्वमित्याशङ्क्याह—

चिद्वस्तुनश्चिति भवेत्तिमिरं तमिस्रं
तामिस्रमन्धतमसं जडिमा तमिस्रा ।
माया जगत्प्रकृतिरच्युतशक्तिरान्ध्यं
निद्रा सुषुप्तिरनृतं प्रलयो गुणैक्यम् ॥ ३१८ ॥

चिद्वस्तुनश्चिति भवेदिति । कर्मणि षष्ठीयम् । सप्तमी चाधारे । चैतन्याश्रयविषयमज्ञानं तिमिरादिशब्दवाच्यमिह भवेदित्यर्थः । मायाविद्ययोश्चाभेदमुपरिष्टात्साधयिष्यति ततोऽज्ञानमेव प्रकृतित्वेन श्रूयत इत्यर्थः । स्वरूपचैतन्यावारकत्वेनाज्ञानस्य विक्षेपहेतुत्वमुपपादयति तिमिरमित्यादिना । पर्यायानेकशब्दप्रयोगः तत्र तत्र श्रुतौ प्रयोगाभिप्रायेण । जडप्रपञ्चकार्यानुगुणत्वाच्च तदेवोपादानं वक्तव्यमित्यभिप्रेत्याह—जडिमेति । न केवलमस्यावरणसामर्थ्यं किन्तु साधारणविक्षेपसामर्थ्यमप्यस्ति । तत एव मायेत्युच्यत इत्याह—मायेति । आत्मैवोपदानं माया तु

निमित्तमात्रमित्याशङ्क्याह—जगत्प्रकृतिरिति। कूटस्थस्यात्मनस्तदनुपपत्ते-र्मायाद्वारेणैव कारणत्वान्मायापि जगत्प्रकृतिरित्यर्थः। तस्य स्वातन्त्र्येण कारणत्वं वारयति—अच्युतशक्तिरिति। परतन्त्रत्वाच्छक्ति-वच्छक्तिः। चेतनभेदविभ्रमहेतुत्वमाह निद्रेति। सुषुप्तिसम्बन्धिप्रा-ज्ञोपाधित्वात्सुषुप्तिरित्याह—सुषुप्तिरिति। तस्य ज्ञाननिवर्त्यत्वसिद्धये सद्विलक्षणत्वमाह—अनृतामिति। सकलकार्यलयाधारत्वमाह—प्रलय इति। प्रकर्षेणास्मिन्कार्याणि लीयन्त इति प्रलयः एतस्यास्वातन्त्र्योक्त्या-पराभिमतप्रकृतिभेदभ्रान्तिं निराकरोति—गुणत्रयमिति। सत्वरजसस्तम आत्मकमित्यर्थः। अथवा—नन्वज्ञानस्य चैतन्याश्रयविषयत्वमनुपपन्नं गमनादिक्रियावत्स्वविषयत्वेन तद्भेदस्य न्यायसिद्धत्वादित्याशङ्क्या-नुमानस्य पराभिमतात्मविषयज्ञाने व्यभिचारं सिद्धवत्कृत्य सत्प्रति-पक्षानुमानमभिप्रेत्याह—चिद्रस्तुन इति। अज्ञानस्य समानाश्रयविषयता-नियमं दर्शयितुं—तिमिरमित्यादि। विमतमज्ञानं समानाश्रयविषयं तिमिरादिपदवाच्यत्वाल्लौकिकतमोवदित्यर्थः। अथवा—अज्ञानं समाना-श्रयविषयमावारकत्वात्तमोवत्। न च तत्र तमःपदाभिधेयत्वमुपाधि-स्तस्याज्ञानेपि सत्त्वादित्यर्थः। ननु तमसोपि तेजोऽभावस्य कथमावार-कत्वमिति चेन्न तमसो रूपवत्त्वेन क्रियावत्त्वेन च द्रव्यान्तरस्य तस्या-भावात्मकत्वानुपपत्तेः। ननु रूपवत्त्वप्रतीतिर्भ्रान्तिरिति चेन्न—तमाल-मालाश्यामलं तम इति प्रतीतेर्बाधकाभावात्। ननु रूपवत्त्वस्य स्पर्शवत्त्वं व्यापकं तदभावोऽत्र बाधक इति चेन्न—अनुभवानुरोधेन स्पर्शवत्त्वस्य रूपवत्त्वसहचारनैयत्यं यथा वायौ व्यभिचरति तथा-नुभवबलादेव रूपवत्त्वस्पर्शवत्त्वसहचारनैयत्यस्यापि तमसि व्यभिचारोपपत्तेः। ननु नीलरूपवतो गन्धवत्त्वं नियतमिति तदभावो-ऽत्र बाधक इति चेन्न। रूपवत्त्वमात्रे तन्नैयत्याभाववत्पाकजन्यनील-रूपवत्त्वस्यैव तन्नियम इति नीलरूपवत्त्वमात्रेपि तद्व्यभिचारोपपत्तेः। ननु नीलरूपं पाकजं तज्जन्यं वेत्यपि नियम इति चेन्न। शुक्लरूपं

पाकजगुणवृत्तिगुणत्वव्याप्यजातिमदेवेति नियमस्य जलरूपे व्यभिचारवदपार्थिवद्रव्ये तमसि पाकायोगात्तद्रूपेपि तद्व्याप्त्यभावात्। ननु रूपवतो द्रव्यस्यालोकसहकृतचक्षुर्ग्राह्यत्वनियमादालोकं विना तमःप्रत्ययो न स्यादिति चेन्न-आलोकविरुद्धस्य तमसोन्वयव्यतिरेकाभ्यामालोकं विनैव चक्षुर्ग्राह्यत्वानुभवादन्यथा रूपवदभावस्यालोकसहकृतचक्षुर्ग्राह्यत्वनियम इत्यालोकाभावस्यापि तदनुपपत्तेः। ननु यत्र विषयज्ञाने विषयातिरिक्तालोकापेक्षा तदभावज्ञान एवालोकापेक्षा न त्वालोकज्ञानं तथेति न तदभावज्ञाने तदपेक्षेति चेन्न—लाघवाद् यज्ज्ञानमालोकजन्यं तदभावज्ञानमपि तथेत्येव नियमादस्ति चालोकज्ञानेपि विषयीभूतालोकाज्जन्म। एतेनालोकत्वेनालोकजन्यं यज्ज्ञानं तदभावज्ञानेप्यालोकापेक्षेति—निरस्तम्। कथं चिदालोकजन्यज्ञानविषयप्रतियोगिकाभावविषयज्ञानस्यैव लाघवात्तज्जन्यत्वनियमात्। ननु प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसानिध्यस्याभावग्राहकत्वात्प्रतियोगिसत्त्वस्य तद्विरुद्धत्वादालोकाभावे नालोकापेक्षेति चेत्तर्हि अत्रापि तमस आलोकविरुद्धत्वात्तमसि तमोऽभावेन तन्निवृत्तिप्रयोजकालोकापेक्षाया अप्यभावान्न तत्र तदपेक्षेति गृह्यताम्। किं चालोकाभावस्य तमस्त्वे मन्दालोके वेश्मनि न तमः स्यात्तत्रालोकाभावाभावात्। ननु प्रौढप्रकाशयावत्तेजः संसर्गाभावो यत्र तत्र सत्तमः। स च मन्दालोके वेश्मन्यपीति चेत्किं प्रौढप्रकाशयावत्तेजः संसर्गसामान्याभावस्तमः उत विशेषाभावः। नाद्यः। सामान्यसंसर्गाभावस्यात्यन्ताभावत्वेन कदाचिदपि तस्यानिवृत्तिप्रसङ्गादुत्पादप्रत्ययानुपपत्तेश्च। न द्वितीयः। उत्पत्तिविनाशवतस्तमसस्तद्रहिताभावसमुदात्मकत्वानुपपत्तेः। ननु प्रध्वंसप्रागभावयोरुत्पत्तिविनाशदर्शनात्तत्समुदायस्यापि तत्संगच्छत इति चेन्न। तद्व्यतिरिक्तसमुदायाभावात्। नन्वन्धकारोत्पादविनाशप्रत्ययौ प्रध्वंसप्रागभावौ विषयीकुरुत इति चेन्न—तयोः प्रत्येकमतमस्त्वाद्यदुत्पन्नं तद्विनष्टमिति तयोः समानाश्रयत्वानुभवाच्च। किञ्च

यावद्विशेषाभावानां तावद्विशेषप्रतियोगिनिवर्त्यत्वनियमेनैकालोकवत्यपि तम उपलम्भप्रसङ्गात्। ननु तत्र यावद्विशेषभावा न सन्तीति चेन्न-एवमपि प्रदेशभेदेन दीपद्वयवति देवदत्तगृहे तम इतिप्रत्ययापाताद्देवदत्तगृहत्वाकारेण सकलतेजोभावाश्रयत्वात्तेजोऽवयविनि सकलतेजोऽभावस्य सत्त्वेन तमोबुद्धिप्रसङ्गाच्च। ननु तेजस्त्वासमानाधिकरण-यावत्प्रचुरप्रकाशतेजः संसर्गभावस्तमःशब्दवाच्यः—न च तेजोभावस्यैकत्वात् भूतले विद्यमानोपि स तेजस्त्वासमानाधिकरण एवेति वाच्यम्—यदवच्छेदेन तेजस्त्वासामानाधिकरण्यं तदवच्छेदेन तस्य तेजोऽभावस्य तमः शब्दवाच्यत्वादिति चेत्किमेकालोकविततदेशे यावत्तेजः संसर्गि उत तदभावसंसर्गि। नाद्यः। अनुपलम्भात्। न द्वितीयः। तत्र तमोबुद्धिप्रसङ्गात्। न चान्यः कश्चित्प्रकारोऽस्ति परस्परविरुद्धयोरन्यतरसद्भावस्य वक्तव्यत्वात्। ननु यावत्तेजः प्रत्येकप्रतियोगिकाभावसमुदाय एव यावत्तेजः संसर्गाभाव इति चेत्तत्र यावत्त्वं साकल्यं प्रतियोगिनि विशेषणं चेद् द्वित्रितेजोवत्यधिकरणे तेजसो यावत्त्वविशेषणस्य प्रत्येकमभावात्प्रत्येकं तेजः प्रतियोगिविशिष्टाभावसत्त्वेनान्धकारोपलम्भप्रसङ्गः। न विशेषणं चेदेकतेजोवत्यपरतेजः प्रतियोगिकयावत्संसर्गाभावसत्त्वात् सुतरामन्धकारोपलब्धिप्रसङ्गः। अस्मिन्पक्षे महान्धकाराद् गाढान्धकारस्य वैषम्यानुपलम्भप्रसङ्गाच्च। प्रौढप्रकाशयावत्तेजः संसर्गाभावत्वस्योभयत्राविशेषान्न त्वेकत्राप्रौढालोकोपि विद्यते अपरत्र तु तन्नास्तीति विशेष इति चेत्किमेतावता न ह्येतावतान्धकारे कश्चिद्विशेषः। नन्वत एवान्धकारे कश्चिद्विशेषो नास्तीति चेत्किमीषत्तमो गाढं तम इत्यनुभवमप्यपलपितुमुद्यतोसि। अन्धकारस्यालोकाभावत्वे जिज्ञासायामपि यावद्विशेषपरिज्ञानं विना तादृशाभावत्वेनानुभवितुमशक्यत्वाच्च। तस्मान्न द्रव्यान्तरमेव तम इति न साधनविकलो दृष्टान्त इति ॥ ३१८ ॥

नन्वज्ञानस्य चैतन्यमात्राश्रयत्वं वक्तुमनुचितमहमज्ञ इत्यहंकारा-

श्रयत्वेनैव तस्य प्रतीतेः। न चाहंकारस्य तदनाश्रयत्वेपि तत्सामानाधिकरण्येनाप्येवंप्रतीतिरुपपद्यत इति वाच्यम् । असति बाधके आश्रयाश्रयिभावप्रतीतेरन्यथा वर्णनानुपपत्तेः । मय्यज्ञानमिति च स्पष्टमेव तस्याहंकाराश्रयत्वं प्रतीयत इत्याशङ्क्याह—

आश्रयत्वविषयत्वभागिनी
निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो
नाऽऽश्रयो भवति नापि गोचरः ॥ ३१९ ॥

आश्रयत्वेति । निर्विभागचितिरेव जीवब्रह्मविभागशून्यं चैतन्यमेवाज्ञानस्याश्रयत्वविषयत्वभागिन्याश्रयत्वं विषयत्वं च भर्तुं शीलमस्यास्तीति तथा। निर्विभागेत्यस्य विवरणं—केवलेति । एवकारेणाहंकारतदुपहितव्यावृत्तिः क्रियते । चैतन्यमात्रमेवाज्ञानस्याश्रयो विषयश्च न त्वहंकारस्तदुपहितं चैतन्यं वेत्यर्थः । तत्र हेतुमाह—पूर्वसिद्धेति । अहंकाराध्यासात्प्रागेव सिद्धस्याहंकाराध्यासकारणस्य तमस इत्यर्थः पश्चिमोऽज्ञानाध्यासपश्चाद्भाव्यज्ञानाध्यासकार्यमहंकारादिरित्यर्थः । गोचरग्रहणं तु दृष्टान्तार्थं यथाहंकारादिः नाज्ञानस्य गोचरः तथा तत्कार्यत्वान्नाश्रयोपीत्यर्थः । अयमर्थः—लोके ह्यज्ञानस्य द्विविधोऽनुभवो दृश्यते मय्यज्ञानं मामहं न जानामीति च तत्र किं मयीत्यनुभवबलेनाहंकारस्य ब्रह्मविषयाज्ञानाश्रयत्वं स्वीकर्त्तव्यमुत मामित्यनुभवेन तद्गोचरचैतन्यस्यैव। यदि प्रथमं तदा मामिति प्रतीयमानमाश्रयस्य विषयत्वं बाध्येत। नन्वहम एव तदाश्रयस्य विषयत्वमपीति चेन्न—तस्य स्पष्टप्रतीतेर्भवद्भिरङ्गीकारादन्यथा तज्ज्ञानादेवाज्ञाननिवृत्तिरिति ब्रह्मज्ञानं व्यर्थमेव स्यात्। यदि पुनर्द्वितीयः पक्षः कक्षीक्रियेत तदाहंकाराश्रयत्वप्रत्ययस्य देवदत्ते सुखमिति केवलात्मवृत्ति-

सुखस्य शरीराधारत्वप्रत्ययवत्केवलात्माश्रिताज्ञानस्य स्वाश्रयवृत्त्यहं-काराश्रयत्वप्रतीतिः कथंचिदुपपद्यते । न केवलमनुभव एवात्र प्रमाणमु-पपत्तिश्चाहंकारादेरज्ञानजन्यतया तत्पश्चाद्भाविनः स्वकारणतया पूर्ववर्त्यज्ञानाश्रयत्वायोगात्कारणस्य कार्यवृत्तित्वायोगाच्च । चैतन्यस्य तु पुनः कालत्रयवर्तिनः तत्साधकतया तत्सम्बन्धित्वस्यावश्यं वक्तव्यात्सम्बन्धान्तराभावादाश्रयत्वमेव सम्बन्धो युज्यत इति ॥३१९॥

इदानीमज्ञानस्य भावत्वे युक्त्यन्तरमप्याह—

**नाभावताऽस्य घटते वरणात्मकत्वा-**

**न्नाभावमावरणमाहुरभावशौण्डाः ।**

**अज्ञानमावरणमाह च वासुदेव-**

**स्तद्भावरूपमिति तेन वयं प्रतीमः ॥ ३२० ॥**

नाभावतेति । अस्याज्ञानस्याभावत्वं न घटते । तत्र हेतुः—वरणात्मकत्वाद। वारकत्वादित्यर्थः । इदमज्ञानं भावरूपमावारकत्वात् कुड्यादिवत् । न च बाधकतर्काभावादप्रयोजकः हेतूच्छित्तेरेव बाधकत्वादित्याह—नाभाव-मिति । न केवलमभावस्यावारकत्वानुपपत्तिस्त्वदङ्गीकारोपि तथैवेत्याह आहुरिति । अभावपदार्थनिरूपणकुशलाः । नचास्य हेतोरसिद्धिः । परमाप्तो भगवानज्ञानस्यावरकत्वमाहेत्यर्थः । किमाह—अज्ञानमिति । वासुदेवः श्रीकृष्णः—श्रीगीतायाम्—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इति तस्यावारकत्वमाहेत्यर्थः । चकारात् "इमे सत्याः कामा अनृतापिधाना" इत्याद्या श्रुतिः समुच्चीयते । निगमयति—तदिति । तत्—अज्ञानम् । तेन—आवारकत्वेन ॥ ३२० ॥

भगवद्व्यासवचनबलादप्यज्ञानस्यावारकत्वमिति तदीयं श्लोक-माह—

एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-

रज्ञानतुल्यः पुरुषस्य राजन् ।

येनाऽऽवृतः कुरुते संप्रमत्तो

घोराणि कर्माणि सुदारुणानि ॥ ३२१ ॥

एकः शत्रुरिति । लौकिको हि शत्रुः कदाचित्किञ्चिदेव सुखं विरुणद्धि । अज्ञानावृतस्वरूपानन्दस्तु देहाभिमानात्सुखार्थं परस्त्रीगमनादिकमनुतिष्ठन् सकलमेव पुरुषार्थजातं विहन्ति । अतोऽज्ञानमेव परमशत्रुरिति व्यासवचनार्थः ॥ ३२१ ॥

अनुमानान्तरेणाप्यज्ञानस्य भावत्वमाह—

जाड्यं जगत्यनुगतं खलु भावरूपं

मौढ्यं च पुंगतमिति प्रतिभाति तादृक् ।

जाड्यं च मौढ्यमिति चानुभवप्रसिद्ध-

मज्ञानमाहुरपवर्गापिधानदक्षम् ॥ ३२२ ॥

जाड्यमिति । यत्पुनरज्ञानस्य प्रकृतित्वेन भावत्वमुक्तं तत्र प्रकृतित्वहेतोः पक्षधर्मत्वमुपपत्तिं चाह—जाड्यमिति । लोके हि कार्यं कारणस्वरूपभावानुरक्तमेव जायते । घटादिकार्ये च सर्वत्र सद्विलक्षणं जाड्यमनुगतं दृश्यते जगद्भावरूपं जडात्मकं दृश्यत इत्यर्थः । तादृग्भावरूपं पुरुषसमवेतमिदं मौढ्यं भ्रान्तिज्ञानं च दृश्यते पुरुषे भ्रान्तिज्ञानमपि भावरूपं दृश्यते । भावग्रहणं च तत्समानस्वभावकारणमवश्यमिति दर्शयितुमज्ञानं च जाड्यं जडात्मकं मौढ्यं मोहात्मकं चेतिप्रसिद्धं मूढोऽहमस्वाप्सं न किञ्चिन्मया चेतितमित्यनुभवसिद्धं ततश्च तस्यैव जडप्रपञ्चोपादानत्वं भ्रान्त्युपादानत्वं च कल्प्यते ।

ननु मूलकारणापेक्षायामपि परमाण्वादिकमस्तीति चेन्न—तत्र प्रमाणाभावादज्ञानस्यावश्यकत्वाच्चेत्यभिप्रेत्याह— अपवर्गपिधानदक्षमिति । परमानन्दावारकमित्यर्थः । सुषुप्तौ खलु जीवस्य ब्रह्मरूपं न प्रकाशते तत्किमिति वक्तव्यं प्रमाणाभावादिति चेन्न । तस्य स्वयंप्रकाशत्वात् । ननु ब्रह्मणः स्वयंप्रकाशत्वेपि तस्य जीवादन्यत्वात्तत्प्रमाणं विना न प्रकाशत इति चेन्न—"अनेन जीवेनात्मनानुप्रविश्य""तत्त्वमसी"त्याद्यभेदश्रुतेः । ननु प्रतिबन्धकसत्त्वान्न प्रकाशत इति चेत्कस्तर्हि प्रतिबन्धकः, अग्रहणमिति चेन्न—स्वरूपग्रहणस्याभावानुपपत्तेः, कदाचित्कग्रहणाभाव इति चेन्न—तस्य स्वरूपग्रहणप्रतिबन्धकत्वानुपपत्तेः, नापि मिथ्याज्ञानं—तस्य सुषुप्तावभावात्, नापि तत्संस्कारः— संस्कारमात्रस्य रजतादिविषयस्य तददर्शनात्, नापि कर्मैव प्रतिबन्धकम्—अन्याश्रितस्य तदनुपपत्तेः, तस्य स्वाश्रयतत्सम्बन्धयोरेवातिशयजनकत्वादात्मनश्चासंसर्गस्य स्वतः कर्मसम्बन्धाभावादुदाहृतश्रुतिस्मृतिविरोधाच्च । तस्मादज्ञानमेव सुषुप्तावप्यनुभवसिद्धमावारकमिति । तदेव कारणमस्त्वित्यर्थः ॥ ३२२ ॥

नन्वज्ञानस्यैव जगत्कारणत्वेन ब्रह्मणः कारणत्ववादिन्यः श्रुतयो व्याकुप्येरन्नित्याशङ्क्याह—

**साभासमेतदुपजीव्य चिद्द्वितीया**
**संसारकारणमिति प्रवदन्ति धीराः ।**
**साभासमेतदिति संसृतिकारणत्वे**
**द्वारं परं भवति कारणता दृशस्तु ॥ ३२३ ॥**

साभासमेतदिति । धीराः वेदान्तनिष्णाताः साभासमेतदज्ञानमुपजीव्याश्रित्याद्वितीया चित्संसारकारणमिति वदन्ति । अतो ब्रह्मणः कारणत्वान्न श्रुतिविरोध इत्यर्थः । नन्वेवमप्यज्ञानमाश्रित्य ब्रह्मणः

कारणत्वे तस्य स्वातन्त्र्यं भज्येतेत्याशङ्क्योपकरणस्य स्वातन्त्र्याविहन्तृत्वान्मैवमित्याह—साभासमिति । साभासमेतदज्ञानमात्मनः परं केवलं द्वारं भवतीति कृत्वा दृशः परमात्मन एव कारणतेत्यर्थः । एतदुक्तं भवति । आत्मनो जगत्कारणत्ववादिन्य इन्द्रो मायाभिरित्याद्याः श्रुतयोऽज्ञानमपेक्ष्यैव तस्य तत्कारणत्वमाचक्षते । केवलस्य तस्याविकारिणो जगत्कारणत्वानुपपत्तेः । न चैतावता ज्ञानस्य स्वतन्त्रकारणत्वमात्मव्यतिरेकेणालब्धप्रतीतिसत्ताकस्य तस्य तद्व्यतिरेकेण कारणत्वानुपपत्तेः । तथा च यद्यप्यात्मा कूटस्थः अविद्यैव विवर्त्तते । तथापि तस्यास्तद्विवर्त्तस्य जगतश्चात्माधीनसत्तास्फुरणत्वात्तद्विवर्तोपि तदधिष्ठानात्मविवर्त्त एवेति ॥ ३२३ ॥

नन्वज्ञानस्यात्माधीनसत्ताकस्यात्मव्यतिरेकेण कारणत्वाभावेपि स्वतन्त्रं प्रधानमेव स्मृतिप्रसिद्धं जगत्कारणं किं न स्यात्तस्य सावयवतया जडतया च जडप्रपञ्चपरिमाणोपपत्तेः । आत्मकारणत्वविषयश्रुतेश्च निमित्तकारणत्वविषयत्वेनाप्युपपत्तेः । ततः कथं दृश एव कारणत्वं तत्राह—

**यावद् दृशोऽन्यदिह संसृतिकारणं त-**
**द्वेदान्तवादिसमये न मतं जडत्वात् ।**
**यद्यज्जडं भवति संसृतिकारणं त-**
**न्नेति स्फुटं वदति सूत्रकृदत्र यस्मात् ॥ ३२४ ॥**

यावदिति । इह जगति यद्यद्दृशः परमात्मनोऽन्यत्तत्सर्वं जडत्वाद्वेदान्तवादिसमये कारणमिति न मतमिति सम्बन्धः । ननु जडस्यापि मृत्पिण्डस्य कारणत्वं दृष्टमिति कथमियं नियतिरित्याशङ्क्य सर्वत्रापि चैतन्यस्यैव बादरायणमते उपादानकारणत्वाद्दर्शनमसिद्धमित्याभिप्रेत्याह—यद्यज्जडमिति । सूत्रकृदत्र वेदान्ते "रचनानुपपत्तेश्च

नानुमानमि"ति सर्वं जडं न कारणमिति यस्मात्स्फुटं वदति तस्मादित्यर्थः ॥ ३२४ ॥

ननु सर्वत्रापि चैतन्यस्यैव कारणत्वे घटादिकं प्रति मृदादीनामन्वयव्यतिरेकौ न स्यातां तद्बलाच्च मृदादेरुपादानत्वे किमपराद्धं प्रधानेन जडत्वस्योभयत्राविशेषात्तत्कथं सूत्रकारस्तस्य कारणत्वं न्यषेधदित्याशङ्क्याह—

अजडकारणभावनिबन्धनं
सकलमेव जडं न तु कारणम् ।
इति हि वेदशिरःसु विचक्षणाः
कपिलपक्षनिराकरणे जगुः ॥ ३२५ ॥

अजडेति । मृदादि सर्वं जडमजडस्य ब्रह्मणः कारणभावे कारणत्वे निबन्धनं द्वारमेव न तु कारणं तथा च मृदादीनामपि चैतन्यावच्छेदकतया द्वारत्वेनैवान्वयव्यतिरेकाविति स्वातन्त्र्येण तदभावाच्चैतन्यमेव सर्वत्र कारणमिति न तद्दृष्टान्तेन प्रधानस्य कारणत्वं कल्प्यम् । ततश्च प्रधानकारणतानिराकरणं रचनानुपपत्तेरित्यादि सूत्रमपि संगतमेवेत्याह—इति हीति । कपिलपक्षः कपिलसंमतं प्रधानकारणत्वं तस्य निराकरणे विषय इत्यर्थः ॥ ३२५ ॥

एवं चिदाभाससहिताज्ञानतद्विवर्तप्रपञ्चसत्तास्फूर्तिप्रदतया ब्रह्मैव जगत्कारणमित्युक्तं तत्र ये ऽज्ञानविशिष्टे ब्रह्मणि ब्रह्मादिपदव्युत्पत्तिः केवले तदनुपपत्तेस्तस्यैव जगत्कारणत्वं विशिष्टश्च-विशेषण-विशेष्याभ्यामन्यदिति मन्यन्ते तन्मतं निराकर्त्तुमनुवदति ।

शबलमात्मपदेन निगद्यते
सकलमात्मजमित्यपि च श्रुतिः ।

शबलमात्मपदं जगतस्ततः

प्रकृतिरित्यपरे च जना जगुः ॥ ३२६ ॥

शबलमिति । शबलमज्ञानविशिष्टं विशिष्टं च विशेषणविशेष्यामन्यदेवेति तन्मतमस्मन्मते तु शबलमज्ञानमात्मा चेति मद्भेदः। यतः शबलमात्मपदेन परमात्मवाचकेन कथ्यते। यतश्चात्मनः आकाशः संभूत इत्यात्मपदार्थाज्जगदुत्पत्तिः श्रूयते। ततोऽज्ञानविशिष्टमेवात्मपदमात्मस्वरूपजगत्प्रकृतिरित्युपादानं नाज्ञानद्वारा चेतनः केवल इत्यर्थः। अथवात्र शबलमित्यज्ञानमेव साभासमुच्यते। शबलमात्मपदमिति चैतन्याभासविशिष्टमज्ञानमित्यर्थः। अज्ञानं च साभासमात्मादिपदवाच्यं कारणमित्यर्थः ॥ ३२६ ॥

ननु विशिष्टस्य केवलस्याज्ञानस्य वा कारणत्वे तस्य जडतयेक्षणाद्यसंभवात्कथमीक्षणपूर्वकं जगत्कारणत्वं तदैक्षतेति श्रुतिसिद्धमुपपद्येतेत्याशङ्क्याधिष्ठातुर्हि ईक्षणं नोपादानस्य लोके तथैव दर्शनादधिष्ठातृत्वं चात्र न शबलस्य किन्त्वज्ञानप्रतिबिम्बितचैतन्यस्यैवेति सदृष्टान्तमाह—

सुकृतदुष्कृतकर्मणि कर्तृतां

मतिगतात्मचितिप्रतिबिम्बकम् ।

व्रजति तद्वददः परमात्मनो

जगति याति तमः प्रतिबिम्बकम् ॥ ३२७ ॥

सुकृतेति । मतिरन्तःकरणं तद्गतं तन्निविष्टमात्मचितिप्रतिबिम्बकं प्रतिबिम्बं पुण्यापुण्यकर्मणोः कर्तृत्वं यथा व्रजति- प्राप्नोति तद्वत्परमात्मनोऽदः इदं तमः प्रतिबिम्बकमज्ञानगतं प्रतिबिम्बं जगति कर्तृतां याति तस्येक्षणादिकं सम्भवतीत्यर्थः ॥ ३२७ ॥

नन्वेवं सत्युपादानकारणत्वमपि तस्यैवास्तु किं विशिष्टकल्पनया केवलाज्ञाने तत्कल्पनया वा गौरवादित्याशङ्क्य विशिष्टस्यैवोपादानत्वमिति सदृष्टान्तमाह—

सुकृतदुष्कृतयोः शबला यथा
भवति कारणमात्मचितिस्तथा ।
गगनवायुपुरःसरकारणं
परमचेतनता शबलाकृतिः ॥ ३२८ ॥

सुकृतदुःष्कृतयोरिति । यथा परिणाम्यन्तःकरणविशिष्टात्मचितिश्चैतन्याभासविशिष्टमन्तःकरणं वा सुकृतदुष्कृतयोरुपादानकारणं न तु केवलं प्रतिबिम्बमात्रं तस्य स्वतोऽपरिणामित्वात्तथाऽज्ञानविशिष्टं परमात्मचैतन्यं केवलाज्ञानं वा गगनवायुप्रभृतीनामुपादानकारणं न तु तत्प्रतिबिम्बमात्रमिति प्रमाणिकत्वाद् गौरवमप्यदोषायेत्यर्थः ॥ ३२८ ॥

एवं परमतं विविच्य दर्शयित्वा तत्रादौ तदभिमतशवलस्यात्मपदवाच्यत्वं निराकरोति—

शबलता कवलीकृततावशा-
त्परमचेतनतैव निगद्यते ।
शबलमात्मपदेन न कथ्यते
शबलमात्मनिवृत्तिनिबन्धनम् ॥ ३२९ ॥

शबलतेति । अत्र शबलपदेन तदेकदेशोऽज्ञानं विवक्षितम् । यद्यपि केवलात्मा वाच्यो न भवति तथाप्यज्ञानोपहिततावलात्केवलचेतनः परमात्मैवात्मादिपदेन कथ्यत इत्यर्थः । एवकारव्यावर्त्यमाह—

शबलमिति । शबलमज्ञानविशिष्टमज्ञानं वात्मादिपदेन न कथ्यत इत्यर्थः । ननु शबल एवात्मादिपदानां व्युत्पत्तिरित्युक्तं शबलमज्ञानमात्मा चेत्यप्युक्तं तत्कथमज्ञानस्येदानीमात्मादिपदवाच्यत्वं निराक्रियत इत्याशङ्क्याज्ञानमात्रस्य विशिष्टस्य अन्यस्य वा तन्निराक्रियत इत्याह-शबलमात्मनीति । शबलमज्ञानमात्मादिपदानां वाच्यतया प्रवृत्तिनिमित्तमित्यर्थः ॥ ३२९ ॥

अत एव परेषां विभ्रमः सनिमित्त इत्याह—

शबलतापरिधानसमन्वया-
त्परमचेतनताऽऽत्मगिरः पदम् ।
भवति तेन जनस्य तु विभ्रमः
शबलमात्मगिरः पदमित्ययम् ॥ ३३० ॥

शबलतेति । येन परमचेतनता परमात्माज्ञानोपाधिवशादात्मादिपदस्य वाच्यं तेनाविवेकिजनस्याज्ञानमात्रं तद्विशिष्टं वा केवलचैतन्यादन्यदात्मादिपदवाच्यमित्ययं विभ्रमो भवति तु भवत्येवेत्यर्थः अविवेकिनां तादृशविभ्रमो योग्य एवेत्यर्थः ॥ ३३० ॥

ननु ब्रह्मणः सकलव्यवहारतीतत्वात्कथमज्ञानद्वारापि तत्र वाक्प्रवृत्तिः, न ह्यज्ञानेन ब्रह्माब्रह्म भवतीति चेदत्यल्पमिदमुच्यते "यत्सकलव्यवहारातीते वाग्व्यवहार" इति 'सर्वस्या अपि क्रियाकारकव्यवहृतेरात्ममात्रविषयत्वादित्याह—

बहु निगद्य किमत्र वदाम्यहं
शृणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः
सकलवाङ्मनसव्यवहारभाक् ॥ ३३१ ॥

बहुनिगदेनेति। किं बहूक्त्येत्यर्थः। अत्राद्वयशासने शास्त्रे संग्रहं सिद्धान्तसंक्षेपकथनं शृणुत। संग्रहमेवाह—सकलवाङ्मनसातिगतेति। सकलवाङ्मनसातिक्रान्तसकलव्यापारविषयापि सकलवाङ्मनसव्यवहारभाक् तत्तदवच्छिन्नचैतन्यस्यैव तत्तच्छब्दातत्तद्बुध्यादिविषयत्वेनात्मैव सकलव्यवहारभागित्यर्थः। यद्यप्यनवच्छिन्नात्मा वस्तुतः सकलव्यवहाराविषय एव 'यतो वाचो निवर्त्तन्ते' इत्यादिश्रुतेस्तथाप्यविद्या तस्मिन् सर्वा व्यवहृतीरानयति ब्रह्मव्यतिरिक्तस्य स्वतो निस्तत्त्वस्य स्वातन्त्र्येण व्यवहारविषयत्वानुपपत्तेः। कल्पितव्यवहारस्याधिष्ठान एव पर्यवसानान्न हि भ्रान्तेन सर्पबुद्ध्या रज्जौ ताड्यमानायामानीयमानायां वा रज्जुस्तटस्था भवति। न चैतावता श्रुतिविरोधः। न वा ब्रह्मणोऽब्रह्मत्वं केवलब्रह्मणः सर्वव्यवहारातीतत्वादत एव न तत्र व्युत्पत्तिरित्युच्यते। तस्मादविद्यासचिवं ब्रह्मैवात्मादिपदवाच्यं नाविद्यामात्रं न वा तद्विशिष्टमित्यर्थः॥ ३३१॥

नन्वेवमपि ब्रह्मण एवाद्वितीयतापरिज्ञानाय जगत्सृष्टिस्थितिलयहेतुत्वं बोधयन्ती श्रुतिः केवलस्यैव तस्य तद्बोधयति। तत्र किमज्ञानाद्वारकल्पनया प्रयोजनाभावादित्याशङ्क्य प्रयोजनाभावोऽसिद्धः श्रुतजगत्कारणत्वोपपादनस्यैव प्रयोजनत्वात्। न च श्रुत्यवगतेऽर्थे नोपपत्त्यपेक्षेति वाच्यम्। अन्यत्रापि तद्दर्शनादित्यभिप्रेत्याह—

**चित्रायागः पशुफल इति श्रूयमाणोऽपि चित्राऽ**
**पूर्वं द्वारं पशुफलतयाऽऽक्षिप्यते तत्र तद्वत्।**
**चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽत्रापि पश्चा**
**न्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन्॥ ३३२॥**

चित्रायाग इति। चित्रासंज्ञको यागः पशुफलं यस्य स पशुफलः इति शब्दः प्रकारपरामर्शी प्रकारश्च पशुफल इति दर्शितः। चित्रापूर्वं

द्वारमितिक्रियाविशेषणं यथा चित्रया यजेत पशुकाम इति पशु-साधनत्वेन श्रूयमाणेपि चित्रायागे पशुसाधनत्वेन प्रमिते तेन चित्रा-यागजन्मापूर्वमवान्तरव्यापारत्वेनाक्षिप्यते । तद्वद्यद्यपि चैतन्यात्मैव जगत्कारणमिति श्रूयते तथाप्यस्मिन् जगद्रूपे फले कार्ये जनयितव्ये-आत्मनः केवलस्य कारणत्वानुपपत्त्या विद्यापूर्ववासनादीनां द्वारत्वं कल्प्यत इत्यर्थः । अथवा आत्मन एवाविद्याशबलस्यात्मादिपदवाच्यत्वं दर्शयित्वा कारणत्वमपि तस्यैवाविद्या तु द्वारमात्रमिति सदृष्टान्तमाह-चित्रायाग इति । न चाविद्याया अप्यात्मपदवाच्यत्वात्तत्कारणत्वमपि श्रौतमेव न तु कल्प्यमिति वाच्यं आत्मन एवेक्षणादियोगस्य योग्यता-दिबलाच्छ्रुत्या कारणत्वबोधनात् । न च पदोपस्थापितस्य सर्वस्यापि पदार्थान्तरेणान्वयनियमः घटोऽनित्य इत्यत्र घटत्वस्यानित्यपदेनान्वय-प्रसङ्गादिति भावः ॥ ३३२ ॥

इतोप्यविद्याद्वारैवात्मनः कारणत्वमिति वदन्न विशिष्टं न वा ऽज्ञानमात्रं कारणमित्यभिप्रेत्याह—

**कारणत्वमुपलक्षणं चिते-**

**र्ब्रह्मणो न खलु तद्विशेषणम् ।**

**इत्यपीदमुपपद्यते तदा**

**चेतना भवति कारणं यदा ॥ ३३३ ॥**

कारणत्वमिति । जगत्कारणत्वमित्यर्थः । जगत्कारणत्वं हि ब्रह्मण एव लक्षणमिति जन्मादिसूत्रे स्थितं तच्च तटस्थलक्षणं न विशेषण-मिति वक्ष्यते । जगत्कारणत्वं च जगज्जननानुकूल- शक्तिमत्त्वं तच्चाज्ञानतद्विशिष्टयोरेव स्यात्तदाऽब्रह्मधर्मत्वान्नैतत्तल्लक्षणं स्या-त्तद्धर्मिण एव तल्लक्ष्यत्वात्तत्र यदि केवल एवात्मा तत्कारणं तदा कार्यानुकूलशक्तिमत्त्वलक्षणकारणत्वस्य यावद्द्रव्यभावित्वेनोप-

लक्षणत्वानुपपत्तिस्तस्मादविद्याद्वारेणैव ब्रह्मणः कारणत्व-मिति ॥ ३३३ ॥

एतच्छ्लोकार्थस्यैव विवरणम्—

अन्यदेव यदि कारणं भवे-
त्कारणत्वमुपलक्षणं कथम् ।
चेतनस्य घटतेऽन्यगामिना
वस्तुनान्यदुपलक्ष्यते यतः ॥ ३३४ ॥

अन्यदेवेति । स्पष्टार्थः ॥ ३३४ ॥

तस्माद्ब्रह्मणो जगत्कारणतया तत्राज्ञानस्यावश्यकत्वादज्ञातं ब्रह्म वेदान्तप्रतिपाद्यमिति न किञ्चिदनुपपन्नमित्याह—

अनवबुद्धमतः श्रुतिमस्तकै-
र्विषयतामुपपादयितुं क्षमम् ।
अनुभवात्मपदं तमसा यतः
पिहितमेतदिह प्रतिभासते ॥ ३३५ ॥

अनवबुद्धमिति । आत्मन्यनुभवोऽप्यज्ञानं साधयतीत्याह-अनुभवात्म-पदमिति । यतोऽनुभवरूपात्मस्वरूपं तमसापिहितमज्ञानविषयतया मामहं न जानामीत्यवभासते अतोऽनवबुद्धमात्मस्वरूपं श्रुतिमस्तकै-र्विषयतामुपपादयितुं क्षमं प्रतिपादयितुं शक्यत इत्यर्थः ॥ ३३५ ॥

यच्चोक्तं प्रमाणप्रमेयादेः कल्पितत्वे तद्वदेव ब्रह्मणोपि मेयत्वेन कल्पितत्वप्रसङ्गः। अमेयत्वे वा तत्र वेदान्ताः प्रमाणमिति व्याहतिरिति तदात्मनः प्रमेयत्वाभावेपि वेदान्तानां तत्र प्रामाण्योपपादनेन परिहृतं

यच्च पुनरुक्तं नाद्यापि वेद्म्यहमनिर्वचनीयभाषामित्यत्रानिर्वचनीयत्वं न प्रसिद्धमिति तदपि ज्ञाननिवर्त्यतया अज्ञानस्य तस्मिन्नेव प्रसिद्धमिति यद्यपि दर्शितं तथापि तदेव ज्ञाननिवर्त्यस्यानिर्वचनीयत्वं यावन्नोपपाद्यते तावदप्रसिद्धमेव भवतीति मत्वा प्रसिद्धाध्यासे तदुपपादयति-

अज्ञानकल्पितमनिर्वचनीयमस्मि—
न्नाबालवृद्धमविवादपदं प्रसिद्धम् ।
स्वप्ने तथा च भगवानपि वक्ष्यतीदं
सन्ध्येऽस्ति सृष्टिरिति पक्षनिराससिद्ध्यै ।३३६।

अज्ञानकल्पितमिति । किं लौकिकानामप्रसिद्ध्याऽनिर्वचनीयत्वमसिद्धं किं वा सूत्राप्रवृत्त्या आद्येऽपि किं जाग्रत्यप्रसिद्धिरुत स्वप्नेऽपि नाद्य इत्याह—अज्ञानकल्पितमिति । अस्मिञ्जाग्रत्यज्ञानारोपितं रजताद्यनिर्वचनीयमित्याबालवृद्धं बालप्रभृति वृद्धपर्यन्तं सर्वेषामविवादमविप्रतिपत्तिर्यथा भवति तथा प्रसिद्धं शुक्तौ प्रतीयमानरूप्यस्य प्रकारान्तरेणानिरूपणादित्यर्थः । द्वितीयं दूषयति—स्वप्ने तथा चेति । स्वप्ने दृष्टपदार्थेऽपि जाग्रति वाऽनिर्वचनीयत्वं सर्वप्रसिद्धमित्यर्थः । प्रथमद्वितीयं दूषयति—भगवानपि वक्ष्यतीति । सन्ध्ये सृष्टिराह हीतिपूर्वपक्षितस्वप्नसृष्टिपारमार्थिकत्वस्य निराकरणाय भगवान्सूत्रकारोऽपि मायामात्रमिति सूत्रेणेदमनिर्वचनीयत्वं वक्ष्यतीत्यर्थः । भविष्यत्ताप्रयोगस्तु तार्तीयविचारस्य समन्वयविचारात्पश्चाद्भावित्वादार्थिकक्रममभिप्रेत्येति द्रष्टव्यम् ॥ ३३६ ॥

ननु मात्रादिविभागस्यानिर्वचनीयत्वे कथं तस्य तत्त्वप्रमितिहेतुत्वमित्याशङ्क्य किमनिर्वचनीयस्य वस्तुनो बोधकत्वमात्रमनुपपन्नं किं वा अर्थक्रियाकारित्वमात्रमाद्येऽपि किमेतद्वाद्यन्तरस्य चोद्यमुतैकदेशिनः । नाद्यः कल्पितस्य सवितृसुषिरस्य वास्तवमरखज्ञापकत्वव-

रकल्पितप्रमात्रादेः सत्यब्रह्मावबोधकत्वोपपत्तेरित्याह—

**मिथ्यासुषिः सवितृमण्डलमध्यवर्ती**
**प्रत्यक्षदृष्टिपथमापतितोऽचिरेण ।**
**द्रष्टुः शरीरकरणप्रविभागरूपं**
**मृत्युं निवेदयति सत्यमिदं प्रसिद्धम् ॥ ३३७ ॥**

मिथ्यासुषिरिति । सुषिः छिद्रं प्रत्यक्षदृष्टिपथमापतितः प्रत्यक्षेण प्रकाशमानः सवितृमण्डलमध्यगतो मिथ्या सुषिरचिरेण शीघ्रं द्रष्टुः सत्यमृत्युं निवेदयतीति प्रसिद्धम् । अथापि यत्र छिद्र इवादित्यो दृश्यते तदाप्येवमेव विद्यादिति श्रुत्या सिद्धमित्यर्थः । मृत्यु स्वरूपमाह—शरीरकरणप्रविभागरूपमिति । शरीरात्स्थूलशरीरात्करणसमुदा-यात्मकस्य लिङ्गशरीरस्य प्रविभागरूपमित्यर्थः । ननु तत्र सुषिरज्ञानमेव मरणसूचकं न सुषिरमिति चेत्किं सुषिरोपलक्षितं ज्ञानं तज्ज्ञापकं किं वा तद्विशिष्टं नाद्यः सर्वस्यापि ज्ञानस्य तथात्वप्रसङ्गात् । द्वितीये सुषिरस्यापि मरणकारणत्वमागतमेव । ननु सुषिरं ज्ञाने परिचायक-मात्रं न विशेषणं न वोपलक्षणमिति चेन्न—अस्योदासीनत्वे तत्परिचित-ज्ञानस्यापि निर्विशेषत्वप्रसङ्गादिति भावः ॥ ३३७ ॥

द्वितीयं सूत्रविरोधेन दूषयति—

**स्वप्नः शुभाशुभफलागमसूचकः स्या—**
**न्मिथ्यापि सन्निति च सूत्रकृदाह यत्नात् ।**
**गुर्वादिसर्वमिदमद्वयबुद्धिहेतु-**
**र्मायानिबन्धनमिति प्रतिपादनाय ॥ ३३८ ॥**

स्वप्न इति । यस्मात्सूत्रकारो 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु

पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने' इत्यादि श्रुति-प्रसिद्ध्या "आरोहणं गोवृषकुञ्जराणां प्रसादशैलाग्रवनस्पतीनाम्" इत्यादिस्मृतिप्रसिद्ध्या च मिथ्या सन्नपि स्वप्नः शुभाशुभफलागमसूचक इति कल्पितस्यापि गुर्वादेरवबोधकत्वप्रतिपादनाय 'सूचकश्च हि श्रुतेराचक्षते च तद्विद' इति सूत्रेणाह । तस्मात्कल्पितस्यार्थक्रियानङ्गीकारे सूत्रविरोधः स्यादित्यर्थः । नापि प्रथमद्वितीयः । कल्पितस्यार्थक्रियातुत्वेहे बाधकाभावात् । नन्वेवं सति शुक्तिरजतादेरपि कङ्कणकटकहेतुत्वं स्यादिति चेन्न व्याप्त्यभावात् । ननु कल्पितत्वाविशेषात्कस्यचिदेवार्थक्रियाकारित्वमिति कुतो नियम इति चेद्यद्धि कर्मकाले वर्तितुं क्षमते तदेव कटकादिहेतुः न च शुक्तिकारजतं तथा ततोन तस्यार्थक्रियाकारित्वम् । तद्वा किमिति न स्यादिति चेन्न—विरोधिज्ञानसम्बन्धात्तत्स्थित्यनुपपत्तेः अतो रजतादेर्यावच्छुक्तिज्ञानमेव सत्त्वान्न तदनन्तरमर्थक्रियाकारित्वं घटादेश्च ब्रह्मज्ञानपर्यन्तं सत्वात्तस्यार्थक्रियाहेतुत्वमिति संगच्छते । अत एव बाधात्पूर्वं मिथ्याऽहिदंशनेन मरणं दृश्यते । अत एव ज्ञानमात्रं हेतुरिति निरस्तम् । अन्यत्र सर्पदंशस्यैव मरणहेतुत्वकल्पनादन्यथा सुप्ताप्रबुद्धयोस्तेन मरणानुपपत्तेरित्यलम् ॥ ३३८ ॥

ननु भवतु मिथ्यावस्तुनोपि तत्त्वप्रमित्युत्पादकत्वं मिथ्यावस्तुत्वमेवानुपपन्नं तस्याप्रसिद्धत्वात् । न च लौकिकभ्रान्तिविषये रजते स्वप्नादौ च तत्प्रसिद्धिरिति वाच्यम्—तत्रापि तदऽसंप्रतिपत्तेरित्याशङ्क्य किं भ्रान्तिः सविषया उत निर्विषया । आद्येपि किं भ्रान्तिविषयः सदुतासत् किं वा सदसदात्मकमिति विकल्पत्रितयमपि दूषयति—

भ्रान्तिप्रतीतिविषयो न च सन्नचास-
न्नाकाशतत्कुसुमयोर्न हि साक्षि नापि ।

तस्या भवेत्सदसदात्मकगोचरत्वं
न ह्यस्ति तत्किमपि यत्सदसत्स्वरूपम् ॥३३९॥

भ्रान्तिप्रतीतीति । बाध्यमानत्वात्सन्न भवति । अपरोक्षत्वाच्चासन्न भवतीत्यर्थः । उभयत्रापि बाधकमाह—आकाशेति । भ्रान्तेः सद्विषयत्वे गगने गगनप्रतीतेरिव भ्रान्तित्वप्रसिद्धिर्न स्यादसद्विषयत्वे च गगनकुसुमप्रतीतिवत्स्पष्टभ्रान्तित्वप्रसिद्धिर्न स्यादित्यर्थः । सा भ्रान्तिस्तस्या भ्रान्तेः हि यस्मात्सदसदात्मकं किञ्चिद्वस्तु नास्ति तस्मात्तस्याः सदसदात्मकगोचरत्वमपि नास्तीत्यर्थः ॥ ३३९ ॥

इदानीं भ्रान्तिर्निर्विषयेति द्वितीयपक्षं दूषयति—

आलम्बनं च विरह्य्य न विभ्रमस्य
ज्ञानात्मनो भवति जन्म कदाचिदत्र ।
सिद्धं ततः सदसती व्यतिरिच्य किञ्चि
दालम्बनं भ्रमधियः सकलप्रवादे ॥ ३४० ॥

आलम्बनं चेति । भ्रान्तेर्विषयं विनानुदये हेतुमाह—ज्ञानात्मन इति । घटादिज्ञानादौ सविषयत्वनियमदर्शनाद्भ्रान्तेरपि जन्यज्ञानत्वात्स-विषयत्वं वक्तव्यम् । विषयश्च सदादिरूपेण दुर्निरूप इति परिशेषात्त-द्विषयोऽनिर्वचनीय एवेत्याह—सिद्धं तत इति । विषयस्य सदादिरूपेण दुर्निरूपत्वं तच्छब्दार्थः । व्यतिरिच्य विहायात्र प्रत्येकसमुदायाभ्यां सदसत्त्वेन विचारासहत्वमनिर्वचनीयत्वमिति तल्लक्षणं दर्शितम् । प्रमाणं चात्रापरोक्षतया प्रतीयमानत्वे सति बाध्यमानत्वानुपपत्ति-र्व्यतिरेकलिङ्ग‌‌ं वार्थाद्दर्शितम् । न च देशान्तरीयरजतस्येह बाध्यमान-त्वादन्यथोपपत्तिरप्रयोजकं वा लिङ्गमिति वाच्यम् । पुरोवर्तिनि तत्प्र-सक्त्यभावेन तन्निषेधानुपपत्तेः । अत्र प्रतिपन्नस्य देशान्तरसत्त्वे

प्रमाणाभावाच्च । न तावदिदं रजतमिति विधिप्रत्ययस्तत्र प्रमाणं तस्य पुरोदेशसंसृष्टरजतगोचरत्वात् । नापि नेदं रजतमिति निषेधप्रत्ययः । तस्य प्रसक्तरजताभावमात्रगोचरत्वात् । नापीह बाधानुपपत्त्या तस्य देशान्तरस्थत्वसिद्धिरिति वाच्यम् । प्रतियोगिप्रसक्तिमात्रापेक्षिणो बाधस्य तस्य देशान्तरस्थत्वं विनानुपपत्त्यभावात् । नन्वत्र बाध्यमानस्य देशान्तरस्थत्वं विना प्रसक्तिरेवानुपपन्नेति चेन्न—ध्वंसप्रतियोगिप्रसक्तिवदुपपत्तेः । अन्यथाख्यातिनये शुक्तिरजतादिसंसर्गे व्यभिचाराच्च । ननु पुरोदेशप्रतिपन्नस्य तत्रैव सत्त्वे कथं तस्य त्रैकालिकनिषेधः न हि यत्र प्रतियोगि तस्यैव तत्रात्यन्ताभावः संगच्छते । ननु यत्र यदा प्रतीयोगि प्रतीयते तत्र तदा तदत्यन्ताभावप्रतीतिरानुपपन्ना । किं वा तत्र कालान्तरेपि । आद्यस्त्वङ्गीक्रियते न हि रजतप्रतीतिकाले तदत्यन्ताभावप्रतीतिमाचक्षमहे । न द्वितीयः । घटवत्यपि भूतले प्रतियोगिकालान्यकाले इह भूतले घटो नेति तदत्यन्ताभावप्रतीतिवत्कालभेदेन रजततदत्यन्ताभावप्रतीत्युपपत्तेरिति चेत्तथापि नासीन्नास्तीति प्रत्ययोऽनुपपन्न एव । न हि घटवति भूतले कालभेदेन घटो नासीदिति प्रत्ययो दृश्यते उपपद्यते वा अत्र च पुरोदेशे रजतं तादात्म्यसम्बन्धेन नासीन्नास्ति न भविष्यतीति प्रत्ययो दृश्यते । किं च यत्र प्रतियोगिनस्तादात्म्यं समवायो वा तत्र तन्निषेधप्रत्ययः । तत्प्रागभावप्रध्वंसौ विषयींकुरुते नात्यन्ताभावम् । यत्र पुनः संयोगः संम्बन्धः तत्र तन्निषेधप्रत्ययो ऽत्यन्ताभावमिति व्यवस्था स्थीयते । रजतं च तादात्म्यसम्बन्धेन शुक्तिकायां वर्त्तत इति भवदङ्गीकारे कथं तदत्यन्ताभावप्रतीतिरपीति चेदुच्यते-शुक्तिकायां रजतत्वावच्छिन्नप्रतियोगिकात्यन्ताभावोनुपपन्नः किं वा सत्त्वावच्छिन्नप्रतियोगिकतदभावोपि । तत्राद्योऽङ्गीकृतः । न द्वितीयः । सत्त्वावच्छिन्नस्य रजतस्य शुक्तिकायामभावेन तत्र तदत्यन्ताभावोपपत्तेः । तद्रूपेण त्रैकालिकनिषेधप्रतीत्युपपत्तेश्च । ननु रजते

सत्त्वं न प्रतियोगितावच्छेदकं तत्र तदभावादिति चेन्न—अवच्छेदको हि न विशेषणं किन्तूपाधिः। स चाविद्यमानोऽपि ज्ञायमानतया प्रतियोगिव्यावर्त्तको भवति दण्डवत्। ननु प्रतियोगिनि प्रतियोगितावच्छेदकधर्मवैशिष्ट्यज्ञानमभावधीहेतुर्न च प्रकृते तत्संभवति तस्य रजते सत्त्वे शुक्तौ तदवच्छिन्नप्रतियोगिकाभावानुपपत्तेस्तत्रासत्त्वे वा तद्वैशिष्ट्यबोधस्यान्यथाख्यातित्वप्रसङ्गादिति चेद्—न प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानमभावधीहेतुः। किन्तु प्रतियोगिताच्छेदकज्ञानमेव लाघवात्। ननु एवं यत्र प्रतियोगितावच्छेदको धर्मो निषिध्यते। तस्यापि तद्रूपेणान्यत्र निषेधः स्यात्प्रतियोगितावच्छेदकप्रतियोगिज्ञानयोर्जातत्वात्। नचाभावाप्रतियोगित्वेन प्रतियोगितावच्छेदकोपस्थितिरभावधीकारणमिति वाच्यम्। प्रतियोगितावच्छेदकनिषेधानन्तरम् तत्स्मृतिमतस्तद्रूपेण तस्य निषेधप्रसङ्गादिति चेन्न—प्रतियोगितावच्छेदकप्रतियोगि विवेकाग्रहस्याप्यभावधीहेतुतावच्छेदकत्वात्। नचैवं सति कुतो लाघवमिति वाच्यम्। विवेकाग्रहस्याज्ञायमानस्यैव हेतुतावच्छेदकत्वाद्वैशिष्ट्यस्य तु ज्ञायमानत्वेन हेतुतावच्छेदकत्वे वैशिष्ट्यं तस्य ज्ञानविषयत्वं चेत्युभयस्य कल्प्यत्वात्। किञ्च समस्त्वेऽप्ययमेव पक्ष उचितः। एवं हि सर्वजनान गवि शशविषाणं नेति प्रतीतिरुपपादिता भवति। अन्यथाऽनुभवोपि व्याख्येयः स्यात्तस्मात्पारमार्थिकत्वाकारेण शुक्तौ रजताऽत्यन्ताभावप्रतीतिः सङ्गच्छते। नन्वेवमपि रजतस्य सद्विलक्षणत्वे नरशृङ्गवदपरोक्षप्रतीत्यनुपपत्तिरसद्विलक्षणत्वे चात्मवद्बाधानुपपत्तिरित्यपरोक्षप्रतीतिबाधयोः सदसत्वे एव प्रयोजके इत्यन्यथोपपत्तिरिति चेदेकस्य तदुभयकारत्वानुपपत्तेः तयोः परस्परं विरोधात्। ननु तयोर्वास्तवैक्यविरोधेऽपि कल्पितैक्यं न विरुध्यत इति चेत्किमिदं कल्पितत्वं सदसदात्मकत्वमेवेति चेन्न तस्यैव विरोधात्। नन्वेकस्य सदासदात्मकत्ववत्तद्विलक्षणत्वमपि विरुद्धमिति चेन्न विरुद्धयोरपि

मृषातादात्म्योपपत्तेः। ननु सदसतोरेव मृषातादात्म्यं किं न स्यादिति चेन्न। मृषाशब्दार्थस्यैवानिर्वचनीयत्वात्। किं च सद्विलक्षणत्वमपरोक्षप्रतीत्यभावे न प्रयोजकं गौरवात् किं त्वसत्त्वमेव। एवमसद्विलक्षणत्वमप्यबाधान्न प्रयोजकं किन्तु सत्त्वमेव। ननु त्वत्पक्षेऽपि बाधापरोक्षप्रतीतिप्रयोजकगौरवमस्त्येवेति चेन्न। यत्र यद्धि प्रयोजकं तदभावस्तदभावे प्रयोजक इति नियमेनापरोक्षप्रतीतिप्रयोजकीभूतसत्त्वाभावस्यत्त्वसत्त्वस्य तदभावप्रयोजकत्वेन बाधप्रयोजकीभूतासत्त्वाभावस्य सत्त्वस्याबाधप्रयोजकत्वेन रजतस्य सदसदात्मकस्य सत्त्वासत्त्वाभ्यामपरोक्षप्रतीतिलदभावयोर्बाधतदभावयोश्चापातात्।

नन्वसत्त्वासमानाधिकरणं सत्त्वं सत्त्वासमानाधिकरणमसत्त्वं चापरोक्षप्रतीतिबाधयोः प्रयोजकमिति चेन्न। उभयात्मके रजते तदसम्भवेन तयोरनुपपत्तेः। किं च त्वदभिमतासद्वैलक्षण्यसद्वैलक्षण्ययोरबाधापरोक्षप्रतीत्यभावप्रयोजकयोरपि सदसदात्मके रजते सुलभत्वेनापरोक्षप्रतीतिबाधयोरभावप्रसङ्गः। ननु सद्वैलक्षण्यस्यासत्त्वसमनियतस्य कथमसद्वैलक्षण्येन स्थितिरेवमसद्वैलक्षण्यस्यापि सत्वसमनियतस्य कथं सद्वैलक्षण्येन स्थितिरिति चेत्किमेतावत्कालं निद्रितं भवता यत्सदसद्विलक्षणपदार्थैकसुहृदाऽपरोक्षबाधानुपपत्त्यामन्त्रितं सदसद्विलक्षणं सकलजनसंमतमपि न जानीषे। ननु न मया निद्रितं विरुद्धपदार्थयोर्मध्ये एकतरनिषेधेऽन्यतरपरिशेषनियमस्य का गतिरिति पृच्छ्यत इति चेन्न—सर्वप्रकारानिर्वचनीयत्ववादिनामस्माकं बलवदनुपपत्तिप्रमाणसिद्धस्य प्रकारान्तरस्य सत्त्वेनान्यतरपरिशेषनियमाभावादि तेन सद्वैलक्षण्यस्य बाधप्रयोजकस्यासत्वमात्रनियतस्यासद्वैलक्षण्यस्यापरोक्षताप्रयोजकस्य सन्मात्रवर्तिनश्चोभयविलक्षणेऽभावान्मन्मत इव त्वन्मतेपि बाधादिकं न स्यादिति निरस्तम्। चतुर्थप्रकारस्यापि संभवेनासद्वैलक्षण्यसद्वैलक्षण्योः सत्वासत्वमात्रनियतत्वाभावात्। ननु सद्वैलक्षण्यमपरोक्षप्र-

तीत्यभावे न प्रयोजकं येन तदभावोऽपरोक्षप्रतीतौ प्रयोजकमित्युभयात्मके रजते पारोक्ष्यापरोक्ष्यापातः किन्त्वपरोक्षप्रतीतिविषयत्वाभावव्याप्यं सत्त्वव्यापकमात्रं त्वन्मतेऽप्यसत्त्वस्यैवंरूपत्वमेवेति चेन्न—एवमपि व्याप्यवति व्यापकसद्भावनियमेनोभयात्मके रजते सद्विलक्षणस्यापि सत्त्वेन रजतस्य प्रतीयमानापरोक्षत्वाभावसंभवप्रसङ्गादस्मन्मते तु चतुर्थप्रकारस्यापि संभवेन सद्विलक्षणेऽप्यसत्त्वाभावेनापरोक्षत्वाभावापादकाभावात्तस्मादपरोक्षप्रतीतिबाधानुपपत्त्यासद्सद्विलक्षणत्वमेव स्वीकर्त्तव्यमिति नार्थापत्त्यनुमानयोरन्यथोपपत्त्यप्रयोजकते इति भावः ॥ ३४० ॥

यच्चोक्तं ब्रह्मणि वेदान्तानामपरोक्षप्रतीतिजनकता न संभवतीति तत्र किं विषयस्य धर्मादिवन्नित्यपरोक्षतया वेदान्तास्तद्विषयापरोक्षप्रतीतिं नोत्पादयन्तीत्युच्यते किं वाऽपरोक्षे ब्रह्मणि शब्दप्रमाणस्य परोक्षप्रमितिजननस्वभावतयाऽपरोक्षप्रतीतिं नोत्पादयन्तीति । नाद्यः । ब्रह्मणो यत्साक्षादित्यादिश्रुत्या नित्यापरोक्षतयैव सिद्धत्वात् । न द्वितीयः । अपरोक्षे ब्रह्मणि परोक्षज्ञानमुत्पादयतो वेदान्तस्याप्रामाण्यप्रसङ्गस्य प्रागुक्तत्वात् । अस्त्वप्रामाण्यमिति चेन्नापौरुषेयस्य वेदस्य तदनुपपत्तेः । तस्माद्वेदान्ता ब्रह्मण्यपरोक्षज्ञानमेवोत्पादयन्तीत्याह—

ब्रह्मात्मवस्तु निरवद्यचिदेकरूपं
वन्ह्युष्णतावदपरोक्षवपुःस्वभावात् ।
निर्दोषवेदशिरसो वचनादतोऽस्मिन्
ब्रह्मात्मवस्तुनि भवेदपरोक्षबुद्धिः ॥३४१ ॥

ब्रह्मात्मवस्त्विति । प्रत्यक्चिदेकरसत्वात्परोक्षतादिदोषरहितं ब्रह्मात्मवस्त्वपरोक्षवपुरपरोक्षस्वरूपम् । घटाद्यापरोक्ष्याद्ब्रह्मास्य विशेषमाह—स्वभावादिति । अनन्यप्रयुक्तमापरोक्ष्यं ब्रह्मण इत्यर्थः । अस्मिन्नर्थे

दृष्टान्त—ःवन्ह्युष्णतावदिति । वह्नेरौष्ण्यवदित्यर्थः । फलितमाह—निर्दोषेति । यतः स्वभावादपरोक्षं ब्रह्मात इति सम्बन्धः । अतोऽस्मान्निर्दोषवेदशिरसो वचनादिति वाऽपौरुषेयतया स्वतः प्रमाणाद्वेदान्तादपरोक्षे ब्रह्मण्यपरोक्षबुद्धिर्भवेदित्यर्थः ॥ ३४१ ॥

यच्चोक्तं ब्रह्मणि स्वयंप्रकाशे प्रमाणकृत्यं नास्तीति तद्यद्यपि "नैतद्वस्तुनि कल्पितस्य"[२४५]इत्यनेन परिहृतं तथापि तत्र ब्रह्मणोऽविषयत्वेपि तत्र वेदान्तप्रामाण्यनिर्वाहायैव तदुक्तं, प्रयोजनाभावदोषस्य स्वोचितस्थले परिहारो न कृत इति मन्दाशङ्कापनुत्त्यर्थमत्रापि तत्परिहरति—

सा चोपनेयरहिते विषयिण्यनन्तेऽ-
निर्वाच्यमग्रहणमात्रमपाकरोति ।
स्वोत्पत्तिलब्धनिजवस्तुबलेन तत्र
तापत्रयं समुपशाम्यति निर्निमित्तम् ॥ ३४२ ॥

सा चेति । अथवा—पूर्वं जगन्मूलाविद्यानिवृत्तिः प्रयोजनमित्युक्तं तन्न संभवत्यविद्यायां सत्यामपि सुषुप्तावनर्थादर्शनेन तन्निवृत्तेरनाकाङ्क्षितत्त्वेनापुरुषार्थत्वादित्याशङ्क्याह—सा चेति। अपरोक्षबुद्धिरित्यर्थः । उपनेयरहिते—ज्ञानाधेयस्फुरणाख्यातिशयशून्ये । तत्र हेतुः—विषयिणीति । विषये घटादौ ज्ञानं स्फुरणाख्यमतिशयमाधत्ते आत्मनश्च ज्ञानस्वरूपत्वेन विषयित्वान्न विषयत्वमतो न तत्रातिशयः सम्भवतीत्यर्थः । अनिर्वाच्यमिति च्छेदः । अग्रहणं ग्रहणविरोधि भावरूपाज्ञानम् । न चाविद्यासत्त्वस्यात्ममात्रत्वान्न तन्निवृत्तिः संभवतीति वाच्यम् । वस्तुतस्तथात्वेप्यारोपितरूपान्तरस्यापि सत्त्वादत एवोक्तमनिर्वाच्यमिति । उत्पन्नस्यापि ज्ञानस्य प्रसंख्यानापेक्षां व्यावर्त्तयति—स्वोत्पत्तीति । स्वस्योत्पत्तिमात्रेण लब्धं यन्निजवस्तुबलमसाधारणाविचालि ब्रह्माकारत्वं तेनेत्यर्थः । अधिष्ठानाकारज्ञानं ह्यविद्यानिवृत्तौ स्वस्यो-

त्पत्तिमात्रमपेक्षते न त्वभ्यासमपि शुक्तिकाज्ञानादौ तथैवदर्शनात्। ननु तत्र विषयस्यातिस्पष्टत्वाद्विनैवाभ्यासं ज्ञानमज्ञानं निवर्तयत्यत्र ब्रह्मात्मनोस्तु नेति सूक्ष्मत्वादभ्यासोप्यपेक्षणीय इति चेत्—नहि सूक्ष्मत्वं ज्ञाने सति तस्य शीघ्रमज्ञानानिवर्त्तकत्वे प्रयोजकं किन्तु तद्विषयस्य ज्ञानस्याविचालिनः शीघ्रमनुत्पत्तावेव तथैवारुन्धत्यादिज्ञाने दर्शनात्तथा च ब्रह्मात्मविषयदृढतरज्ञानस्योत्पत्तावेवाभ्यासोपि कल्पयितुमुचितः। सामग्रीविलम्बेन ज्ञानाख्यकार्यविलम्बस्यौचित्याल्लोके दर्शनाच्च न तु दृष्टविरुद्धत्वेनाविद्यानिवृत्तौ स कल्पनीय इति भावः। तत्राविद्यानिवृतौ सत्यां तापत्रयाध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधस्तापः संसारः समुपशाम्यति सम्यगत्यन्तदग्धेन्धनानलवन्नश्यतीत्यर्थः। तत्र हेतुः—निर्निमित्तमिति। निर्गतं निवृत्तं निमित्तमुपादानकारणं यस्य तत्तथा। अविद्याख्योपादानस्य निवृत्तत्वात्संसारस्यात्यन्तिकनिवृत्तिरित्यर्थः। तथा चाविद्यानिवृत्तेः स्वतः पुरुषार्थत्वाभावेप्यनर्थसाधननिवृत्तित्वेन तत्त्वं संभवतीति भावः॥ ३४२॥

एवमनाधेयातिशयेऽनतिशयानन्दे स्वप्रधानेऽखण्डैकरसे ब्रह्मणि वेदान्तानामविद्यानिवृत्तिमात्रफलतया प्रामाण्यमुपपादितम्। इदानीं कार्यान्विते व्युत्पत्तिं निराकृत्य लोके सिद्धे व्युत्पत्तिप्रदर्शनेन तदेव प्रामाण्यं दृढीकर्त्तुं परपक्षमनुवदति—

वाक्यात्प्रवर्त्तकनिवर्त्तकरूपभाजः
पुंसः प्रवृत्तिमुपलभ्य धियोऽनुमानात्।
कार्यान्विते शिशुरवैति पदस्य शक्ति-
मित्युच्यते यदि तु तत्र वयं वदामः॥ ३४३॥

वाक्यादिति। अयं व्युत्पित्सुः प्रवर्त्तकनिवर्त्तकरूपभाजः प्रवर्त्तक

कार्यताज्ञाननिवर्त्तकाहननादिसंकल्पज्ञानजननद्वारा प्रवर्त्तकनिवर्त्तकत्वाकारवतो वाक्याच्छ्रूयमाणगामानयेत्यादिवाक्यात्प्रवर्त्तमानस्य श्रोतुः प्रवर्त्तकधियं कार्यताज्ञानं प्रवृत्त्या लिङ्गेन परिकल्प्यानुमाय गवादिशब्दस्य कार्यान्विते शक्तिमवैतीत्युच्यते यदीत्यर्थः । तत्र दूषणं प्रतिजानीते—तत्रेति । तस्मिन्नर्थे विषये दूषणं वदाम इति सम्बन्धः ॥ ३४३ ॥

प्रतिज्ञातं दूषणमेवाह—

योग्येतरान्वितपदार्थनिवेदने तु
शब्दस्य शक्तिरिह वृद्धजनप्रयोगे ।
विज्ञायते न खलु कार्यसमन्वितेऽर्थे
कार्याभिधायिषु पदेष्वपि तत्प्रसङ्गात् ॥ ३४४॥

योग्येतरेति । वृद्धजनप्रयोग इति निमित्तसप्तमी । इह जगति वृद्धप्रयोगं निमित्तीकृत्यान्वययोग्यं यदितरत्तेनान्वितो यः पदार्थस्तस्य निवेदने प्रकाशने । तुरवधारणे योग्येतरान्वितपदार्थनिवेदन एव शब्दस्य शक्तिर्विज्ञायते । एवकारव्यावर्त्यमाह—न खल्विति । कार्यान्विते शक्तिर्न ज्ञायत इत्यर्थः । कुत इति चेत्तत्र वक्तव्यं किं सर्वाण्यपि पदानि कार्यान्वितस्वार्थमभिदधति उत कार्यपदव्यतिरिक्तानि । नाद्य इत्याह—कार्याभिधायिष्विति । सर्वपदानां कार्यान्वितस्वार्थपरत्वमनुपपन्नमानयनादिक्रियावाचिष्वपि पदेषु तत्प्रसङ्गात्कार्यान्वितार्थाभिधायित्वप्रसङ्गात् कार्यस्य कार्यान्वितत्वाभावान्न हि स्वयं स्वेनान्वेतुं शक्यते इत्यर्थः ॥ ३४४ ॥

ननु माभूत् स्वस्य स्वेनान्वयः कार्यान्तरेणान्वयः तस्य किं न स्यादित्याशङ्क्य कार्यपदं येन कार्येणान्वितं स्वार्थमभिधत्ते

तत्कार्यवाचकपदमपि किं कार्यान्तरेणान्वितं स्वार्थं ब्रूते किं वा यदन्वयप्रतियोगितया स्वार्थमुपस्थापयति तदन्वितस्वार्थं वा नाद्य इत्याह—

कार्यान्वितार्थविषया यदि शब्दशक्तिः
कार्यार्थवाचिषु लिङादिषु कार्यमन्यत्।
वक्तव्यमापतति तत्र च तत्र चान्य-
द्वक्तव्यमेव भवतीत्यनवस्थितिः स्यात्॥ ३४५॥

कार्यान्वितार्थेति। यदि कार्ये शब्दशक्तिः कार्यान्वितार्थविषयिणी स्याद्यदि च तत्कार्यवाचिषु लिङादिषु कार्यान्वितस्वार्थशक्तिसिद्ध्यर्थमन्यदानयनादिकार्यादन्वयानुयोगिभूतादन्यत्किञ्चित्कार्यं वक्तव्यमापपति तदा तत्र तत्र तस्मिन् तस्मिन्कार्यपदे कार्यान्वितस्वार्थे शक्तिकल्पनार्थं कार्यान्तरं वक्तव्यं भवति अन्यथा तत्तत्कार्यपदस्य स्वार्थाभिधानानुपपत्तेरित्यनवस्थापाताान्न कस्यापि स्वार्थाभिधायकत्वमित्यर्थः। न द्वितीयोऽपि। कार्यभेदे वाक्यभेदप्रसङ्गाद् व्युत्पत्तिकाले कार्यद्वयोपस्थित्यभावाच्च लोके धात्वर्थातिरिक्तकार्याभावाच्चेत्यर्थः॥ ३४५॥

कार्यपदव्यतिरिक्तानि कार्यान्वितार्थमभिदधतीति द्वितीयपक्षेपि किं कार्यपदमनन्वितस्वार्थमात्रं कथयति। उत योग्येतरान्वितम्। नाद्यः। प्रतीतिविरोधात्। अनन्वितार्थव्युत्पत्तेर्निराकरिष्यमाणत्वादित्यभिप्रेत्य न द्वितीयोपीत्याह—

सिद्धान्वितं यदि लिङादिपदानि कार्यं
ब्रूयुर्विनश्यति तदा नियमस्त्वदीयः।

योऽवर्णितः सकलमेव पदं स्वमर्थं
कार्यान्वितं वदति नान्यदिति स्वशास्त्रे ॥३४६॥

सिद्धान्वितमिति । योग्येतरो यः सिद्धार्थस्तदन्वितार्थमित्यर्थः । तदीयं नियममेवाह-यो वर्णित इति इति । स्वं स्वीयम् । ननु मयेदानीं सिद्धपदानां कार्यान्वितस्वार्थे कार्यपदानां योग्येतरसिद्धान्वितस्वार्थ एव शक्तिरित्युक्तं तत्कुतो मम नियमभङ्ग इत्यत आह—स्वशास्त्र इति । स्वस्य प्राभाकरस्य मूलग्रन्थ इत्यर्थः । न केवलं नियमभङ्गः किन्त्वनुगतैकप्रयोजके योग्येतरान्वितस्वार्थे संभवति प्रयोजकद्वैविध्यकल्पना न न्याय्येत्यपि द्रष्टव्यम् ॥ ३४६ ॥

यस्तु पुनः सिद्धान्तविरोधं नातीव बाधकं मन्यते न्यायसिद्धस्यैव सिद्धान्तत्वादिति तं प्रति बाधकान्तरं वक्तव्यम् । न च प्रयोजकद्वैविध्यं बाधकं योग्येतरकार्यान्तरान्वितत्वस्यैकस्यैव प्रयोजकत्वादित्याशङ्क्याह—

योग्येतरान्वितनिमित्तकशब्दशक्ति-
व्युत्पत्तिरेव यदि संभवभागिनी स्यात् ।
आश्रीयते किमिति कार्यसमन्वितेऽर्थे
शब्दस्य शक्तिरसदर्थविशेषणेन ॥ ३४७ ॥

योग्येतरेति । योग्येतरान्वितं योग्येतरान्वितत्वं निमित्तं प्रयोजकं यस्याः शब्दशक्तेः तस्या व्युत्पत्तिः परिज्ञानं यदि शब्दस्य योग्येतरान्वितवाचकत्वं क्वचित्संभवति तदा शब्दस्य कार्यसमन्वितेऽर्थे शक्तिः किमित्याश्रीयत इति सम्बन्धः । योग्येतरान्वितेऽपि शब्दशक्तिराश्रीयत इति चेत्कार्ये व्युत्पत्तिः किमर्थमाश्रीयत किं वाक्यस्य

प्रवर्त्तकत्वनियमात्किंवा कार्यान्वितत्वस्य ततो नियमेनोपस्थितेः । नोभयथापि तस्याग्रे निरसिष्यमाणत्वात्तथा च प्रमाणाभावान्न कार्यान्विते व्युत्पत्तिरित्यर्थः । न केवलं व्युत्पादकाभावात्तत्र न व्युत्पत्तिः । व्यावर्त्याभावेन न कार्यविशेषणस्यार्थवत्त्वमपीत्याह— असदर्थविशेषणेनेति असन्नविद्यमानोऽर्थः प्रयोजनं यस्य तत्तथोक्तं व्यर्थविशेषणत्वादित्यर्थः । न चात्र कार्यविशेषणेन योग्येतरान्वयो व्यावर्त्यते—तस्य त्वयाप्यङ्गीकृतत्त्वात् । नापि केवलार्थव्युत्पत्तिः—तस्या आवश्यकयोग्येतरान्वितत्वविशेषणेनैव व्यावृत्तत्वात् । अतः कार्यविशेषणं व्यर्थमेव । न केवलं व्यर्थविशेषणत्वमात्रमपि तर्ह्यन्यतरत्वेन वाच्यत्वाङ्गीकारे प्रयोजकगौरवं चेत्यपि द्रष्टव्यम् ॥ ३४७ ॥

ननु व्यावर्त्याभावेन प्रयोजकगौरवेण च कार्यान्वितत्वपरित्यागे योग्येतरत्वविशेषणमपि माभूत्तस्यापि व्यावर्त्याभावाद्गौरवाच्च । न ह्यन्वितत्वे सति योग्येतरत्वं विना शब्दवाच्यत्वव्यतिरेको दृष्टः । तस्यापि सर्वत्र दर्शनमात्रेण प्रयोजकत्वे दर्शनस्यैव नियामकतया यथादर्शनं कार्यपदव्यतिरिक्तपदप्रवृत्तौ कार्यान्वितत्वमपि प्रयोजकं कार्यपदे तु योग्येतरान्वितत्वमात्रं प्रयोजकमिति किं न स्यादित्याशङ्क्याह—

यत्राविशेषितनिमित्तकताविरोधे
किञ्चिन्निवारकमुदीक्षितमस्तु तत्र ।
किञ्चिद्विशेषणविशिष्टमभीष्टशक्ते-
र्वस्तु प्रयोजकमिदं पुनरत्र नास्ति ॥ ३४८ ॥

यत्रेति । यत्र यस्मिन्नविशेषितनिमित्तकतावरोधेऽविशेषितस्य योग्येतरत्वादिविशेषणाविशिष्टस्यान्वितत्वमात्रस्य निमित्तकत्वावरोधे शब्दवाच्यत्वप्रयोजकत्वाङ्गीकारे निवारकं बाधकं किंचिदुदीक्षितं

दृष्टमस्ति। तत्राभीष्टशक्तेः शब्दशक्तेः किञ्चिद्योग्येतरत्वादिविशेषण-विशिष्टं वस्त्वन्वितत्वं प्रयोजकं पुनः शब्दो विशेषमाह अत्र कार्याख्य-विशेषणे त्विदं बाधकं नास्तीत्यर्थः। योग्यत्वमितरत्वं च विनार्था-नामन्वितत्वमेव न संभवति। अयोग्येनानितरेणान्वयाङ्गीकारात्ततो नानयोः साम्यमिति ॥ ३४८ ॥

ननु योग्येतरकार्यान्यतरत्वाकारेण न शब्दवाच्यत्वं येन योग्ये-तरान्वितत्वमात्रेण शब्दवाच्यत्वे संभवति कार्यविशेषणं व्यर्थं भवेत्। किन्तु कार्यान्वयान्वितत्वमेव शब्दवाच्यतायां निमित्तम्। न चात्र योग्येतरविशेषप्रवेशोऽस्ति अतो नात्र व्यर्थविशेषणता न वा प्रयोजकद्वैविध्यमित्याशङ्क्याह—

**कार्यान्वयान्वयिनि वस्तुनि शब्दशक्ति**
**रित्युच्यते यदि तदाऽपि समानमेतत्।**
**अन्वीयमानवचनत्वमतोपपत्तौ**
**कार्यान्वयान्वयिविशेषणगीर्वृथेति ॥ ३४९ ॥**

कार्यान्वयान्वयिनीति। एतद्—व्यर्थविशेषणत्वम्। कथमत्र व्यर्थविशे-षणत्वमिति चेत्तत्र वक्तव्यं किं कार्यस्य योग्येतरत्वेनान्वयप्रतियोगित्व किं वा कार्यत्वे सति योग्येतरत्वाकारेण। अथवा कार्यत्वेन। अन्त्ये कार्यस्य कार्यत्वावच्छिन्नप्रतियोगिकसम्बन्धाश्रयत्वेन स एवात्मा-श्रयः स्वविशेषणविशेष्यत्वापत्तिश्चेत्यभिप्रेत्य द्वितीयं व्यर्थविशेष-णत्वेनापि दूषयन् प्रथमं स्वीकरोति—अन्वीयमानेति। अन्वीयमान-वचनत्वमतेन योग्येतरान्वितवाचकत्वमतेनोपपत्तौ कार्यान्वयान्वय-विशेषणगीः-कार्यान्वयान्वयिनीत्यत्र कार्यमिति विशेषणगीर्वृथेत्यर्थः। अथवा—अन्विते शक्तिरिति वक्ष्यमाणस्वसिद्धान्ताभिप्रायेण कार्यान्वयेत्य-

न्वयिविशेषणं व्यर्थं स्यादित्याह—अन्वीयमानेति । कार्यान्वयेति या विशेषणगीः सा वृथेत्यर्थः ॥ ३४९ ॥

ननु नियमेन वाक्याद् गवादिव्यक्तेः कार्यान्वितताया एव प्रतीतेः शाब्दप्रतीतेश्च शब्दशक्तिं विनानुत्पादात्कथं तस्य शब्दशक्त्यविषयत्वमिति चेत्सत्यम्—तद्धि कार्यपदसमभिव्याहारादेव प्रतीयते न तु केवलाद् गवादिपदात् । न च नियमेन तस्य व्युत्पत्तिकालोपस्थितेरुपस्थितविषयत्वाच्च शक्तेरुपस्थापकप्रमाणपराधीना शक्तिर्यथा प्रमाणोपस्थापितमेव विषयीकुर्यादिति वाच्यम् । यतः शक्तिः प्रमाणाधीनाप्युपस्थितविषयापि गौरवादिभ्यो बिभ्यती नोपस्थितिमात्रं विषयीकर्त्तुमीष्टे अन्यथातिप्रसङ्गादित्यभिप्रेत्याह—

**वक्तृज्ञानविवक्षयोरपि भवेच्छब्दार्थता तावके**
**पक्षे शब्दमनुप्रतीतिरुभयोरस्त्येव यस्मात्तयोः ।**
**यद्यच्छब्दमनु प्रतीतिपदवीमारोहदुत्प्रेक्ष्यते**
**तत्तद्वाच्यमिति स्थितौ न हि तयोः शब्दार्थतावर्जनम्**
**॥ ३५० ॥**

वक्तृज्ञानेति । तावके प्राभाकरीये मते वक्तुः प्रयोक्तुर्यज्ज्ञानं प्रयोगकारणीभूतं वाक्यार्थविषयं या च वक्तुरीक्षा विवक्षा तयोरपि शब्दार्थता भवेत्कुतस्तत्राह—शब्दमन्विति । यस्मात्कार्यवत्तयोरुभयोर्वक्तृज्ञानविवक्षयोः शब्दमनुशब्दं लक्ष्यीकृत्य शब्दलिङ्गात्प्रतीतिरस्त्येव तत इत्यर्थः । प्राभाकरमते हि लौकिकं वाक्यं वक्तृज्ञानविवक्षे अनुमापयति इत्थमयं वेदैवमयं विवक्षतीति। अनुमानं च इदं वाक्यं संसर्गज्ञानविवक्षापूर्वं निर्दुष्टपुरुषवाक्यत्वादस्मद्वाक्यवदिति । अर्थश्च ज्ञानविवक्षाविशेषणतया तस्मिन्ननुमाने भाति न तु स्वातन्त्र्येण शब्देन प्रतिपाद्यते अत एव पौरुषेयवाक्यमनुवादकमितिगुरुमतम् । तथा च

व्युत्पत्तिकाले तयोरपि नियमेनोपस्थितत्वात्तत्रापि शब्दशक्तिग्रहप्रसङ्ग इत्यर्थः। ननु नियमेन तयोरुपस्थितावपि गौरवादनुपयुक्तत्वादन्यतो लब्धत्वाच्च न शब्दशक्तिविषयत्वं कल्प्यत इति चेन्न—गौरवेपि कार्यपदेनैवान्येन लाभेप्यनुपयोगेपि शब्दान्तरनियतोपस्थितिमात्रेण त्वया कार्यस्य निखिलशब्दशक्तिविषयत्वस्वीकारादतो गुरोर्गौरवं न दोषायेत्यभिप्रेत्याह—यद्यदिति । प्रतीतिपदवीं प्रतीतिविषयतामारोहादाप्नुवत्तयोर्वक्तृज्ञानविवक्षयोरित्यर्थः । तथा च न नियतोपस्थितिमात्रेण कार्यस्य निखिलशब्दशक्तिविषयत्वमिति भावः ॥ ३५० ॥

अस्तु तर्हि तयोरपि शब्दवाच्यत्वमिति चेत्तत्राह—

**वेदे वक्तुरभावतस्तदुभयं नास्तीह यस्मादतः**
**शब्दे वाचकशक्तिमुज्झति निजां तत्र स्ववाच्यं विना**
**वाच्ये वाचकशक्तिमिच्छति भवान्नान्यत्र तत्र श्रुते-**
**रप्रमाण्यमिति स्फुटं तव भवेद्बुद्धेरनुत्पत्तितः ॥ ३५१ ॥**

वेद इति । यस्मादिहापौरुषेये वेदे स्वतन्त्रवक्तुरभावात्तदुभयं वक्तृज्ञानं विवक्षा च नास्ति। ततो वैदिकशब्दो निजां स्वीयां वाचकशक्तिमुज्झति स्वार्थं न बोधयेदित्यर्थः। तत्र हेतुः—स्ववाच्यं विनेति । तस्य मुख्यार्थाभावादित्यर्थः। ननु वेदे मुख्यार्थाभावेपि लक्ष्यार्थः किं न स्यात्तत्राह—वाच्य इति । भवान्वाच्ये पदान्तरवाच्य एव वाचकशक्तिं पदान्तरस्य लक्षणया बोधनसामर्थ्यमिच्छति न त्वन्यत्र पदान्तरावाच्येपीत्यर्थः । भवानित्यनेन नास्माकमेष नियम इति दर्शयति। अथवा वक्तृज्ञानविवक्षयोर्वेदेऽभावेपि तत्र तदतिरिक्त एव शब्दशक्तिः किं न स्यादित्याशङ्क्य लोकवेदाधिकरणन्यायेन लौकिक-

स्यैवार्थस्य वेदार्थत्वेन त्वदभिमतत्वादित्यभिप्रेत्याह—वाच्य इति । लौकिकपदेन वाच्य इत्यर्थः । वाचकशक्तिमिति । वैदिकपदशक्तिमित्यर्थः । ततश्च वक्तृज्ञानादिविशेषितकार्ये वेदस्य शक्तिर्वर्णनीया अन्यत्र केवलकार्ये न वर्णनीयेत्यर्थः । फलितमाह—तन्नेति । इतिशब्दो हेतौ यस्माद्विशिष्ट एव कार्ये शब्दशक्तिः प्रसज्यते न केवले तस्मात्तत्र केवलकार्ये विषये वेदात्प्रतीत्यनुपपत्त्यापाताद्वक्तृज्ञानादिविशिष्टकार्यस्य चाभावाद्वैदिकाभिमानिनस्तव श्रुतेरपि स्फुटमबोधकतालक्षणमप्रामाण्यं स्यादित्यर्थः । तथा च यथावक्तृज्ञानविवक्षयोः प्रयोगद्वारा व्युत्पत्त्युपायत्वं तथा कार्यताज्ञानमपि भवन्मते प्रवृत्तिद्वारा प्रयोजनज्ञानविवक्षादिद्वारा वा व्युत्पत्तिहेतुरिति भावः ॥ ३५१ ॥

किं च यदि कार्यान्वित एव सर्वेषां पदानां शक्तिर्न योग्येतरान्वितमात्रे तर्हि विशिष्टविधिमात्रोच्छेदप्रसङ्ग इत्याह—

> **न च सोमयागपदयोरुभयो-**
> **रपरस्परेण घटतेऽत्र युजा ।**
> **पदजातमेतदखिलं हि निजं**
> **विषयं समर्पयति कार्ययुतम् ॥ ३५२ ॥**

नचेति । अपरस्परेणान्योन्यमत्र कार्यान्वितार्थशक्तिपक्षे युजा सम्बन्धः । तत्र सोमयजिपदयोरन्योन्यासम्बन्धे हेतुमाह—पदजातमिति । हि यतः सर्वं पदं कार्ययुतं कार्यान्वितं निजं विषयं समर्पयति बोधयति । तत इति सम्बन्धः । सर्वस्यापि पदस्य कार्यान्वितस्वार्थबोधकत्वाङ्गीकारे सोमेन यजेतेत्यत्र प्रत्ययोपात्तनियोगेनैव सोमयजिपदयोरन्वयः स्यान्न परस्परं तयोरन्यतरस्याकार्यत्वात् । न च सोमपदस्य धात्वर्थकार्येणान्वयो यागपदस्य नियोगेनेति

वाच्यम् । वेदे धात्वर्थस्य कार्यत्वानङ्गीकारात्काम्यसाधनस्यैव नियोज्यकृतिसाध्यतया कार्यत्वादित्यर्थः ॥ ३५२ ॥

कार्यान्वयान्वितत्वपक्षेऽप्ययं दोषः सम इत्याह—

कार्यान्वयान्वयिनि शक्तिरिति स्थितौ च
कार्यान्वयान्वितमतिर्न परस्परेण ।
सम्बन्धितामतिरतश्च न सिद्धमेति
सर्वो विशिष्टविधिरित्यपि दूषणं वः ॥ ३५३ ॥

कार्यान्वयान्वयिनीति । कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिरिति-मतेपि सर्वैः पदैः कार्यान्वयान्वितमतिरेव स्यान्न सिद्धार्थानां सोमयागादीनां परस्परं सम्बन्धमतिरित्यर्थः । ननु माभूत्पक्षद्वयेपि सोमयागपदार्थयोः परस्परमन्वयः किं नश्छिन्नं प्रत्युत कार्यान्वितार्थे शब्दशक्तिवादिनामस्माकं तद्भूषणमेव तत्राह—अतश्चेति । चशब्दः पक्षद्वयसमुच्चयार्थः । यतो न क्रियाकारकयोः परस्परमन्वयः अतो वो विशिष्टविधिः । सोमादिकारकविशिष्टयागविषयो नियोगः सर्वो नः सिद्धमेतीति सम्बन्धः । अपिशब्देन पूर्वोक्तदूषणानि समुच्चीयन्ते । सोमेन यजेतेत्यत्र हि सोमविशिष्टयागे नियोगोऽवगम्यते । सोमयागसम्बन्धस्याप्यपूर्वत्वात्तत्र यदि सोमयागयोः परस्परवैशिष्ट्यं पदाभ्यां न बोध्येत कथंविशिष्टविषयव्यावृत्तनियोगाभिधानं घटते । ननु सोमयागयोः शब्दान्वयबोधाभावेपि नियोगाक्षेपादेव तदन्वयबोधः किं न स्यादिति चेन्नान्योन्याश्रयप्रसङ्गादवगतो नियोगः सोमयागयोः वैशिष्ट्यमाक्षिपेदाक्षिप्ते तु तद्वैशिष्ट्ये विशिष्टविषयव्यावृत्तो नियोगोऽवगम्यतेति भावः ॥ ३५३ ॥

ननु योग्येतरान्वितशक्त्यङ्गीकारेऽप्ययं दोषः समान एव तत्रापि

प्रधानेन नियोगेनैवान्येषामन्वयस्य वक्तव्यत्वादित्याशङ्क्याह—

योग्येतरान्वितपदार्थगतैव शब्द-
शक्तिः स्थिता यदि पुनर्घटते तदाऽयम्।
सर्वो विशिष्टविधिरस्तु तथैव तस्मा-
द्युक्तं तथेतरदितीदमपीह भाष्यम्॥ ३५४॥

योग्यतरेति। पदार्थगता पदार्थविषयिणी स्थिता आस्थिता श्रितेत्यर्थः। योग्येतरान्वितशब्दशक्तिपक्षे हि तद्योग्येतरत्वेनैवान्वयो भवति न तु नियोगेनेति नियम इति सोमयागयोरप्यन्वयो भवत्येव। न चैवं नियोगस्य प्रधान्यप्रच्युतिः उद्देश्यत्वेन साध्यत्वेन च तस्य प्रधान्योपपत्तेः। नियोगापह्नवायैव योग्येतरस्मिञ्छब्दशक्तिस्वीकारा-च्चेत्यर्थः। ततोऽयमेव पक्षस्त्वयापि स्वीकर्त्तव्य इत्याह—अस्त्विति। तस्मात्तथैव योग्येतरान्वितविषयशब्दशक्तिरस्त्वित्यर्थः। न केवल-मस्मिन्पक्षे विशिष्टविधिमात्रोपपत्तिः। अपि तु भवदीयभाष्यवचन-मप्युपपन्नतरमित्याह—युक्तमिति। इहास्मिन्पक्षे यदैकस्मादपूर्वं तदेत-रत्तदर्थमिति भाष्यमपि युक्तमुपपन्नमित्यर्थः। तत्र हि भाष्ये एकस्यैव नियोगसमर्पकत्वं पदान्तरं तदर्थं नियोगविषयधात्वर्था-र्थमिति व्युत्पाद्यते। तच्च योग्येतरान्वितत्वपक्ष एव संगच्छते। अन्यथा सर्वस्यापि नियोगशेषत्वेन नियोगविषयशेषत्वाभावादित्यर्थः॥ ३५४॥

ननु व्युत्पत्तिकाले प्रवृत्त्या कार्यताज्ञानमेवानुमीयते। तस्यैव प्रवृत्तिकारणत्वात्ततः प्रवर्त्तकज्ञानं जनयतः कार्यमेवार्थो वक्तव्यः। तच्चेत्त्वया न स्वीक्रियते। तदा शब्दस्यैव साक्षात्प्रवर्त्तकत्वमुक्तं स्याच्छब्दश्रवणानन्तरं प्रवृत्तिदर्शनात्तथा च तस्य बोधकत्वं हीयेतेति शङ्कामनूद्यापवदति—

**शब्दः प्रवृत्तिजनको न तु बोधकश्चे-**
**न्नैतत्प्रवर्त्तकधियो जनकत्वहेतोः ।**
**इष्टाभ्युपायमतिजन्मनिमित्तभूतः**
**शब्दः प्रवर्त्तयति नैष पुनः पुमांसम् ॥ ३५५ ॥**

शब्द इति । लिङादियुक्तशब्दस्य कार्यताज्ञानजनकत्वानङ्गीकारे शब्दो न बोधकः स्यात् किन्तु साक्षात्प्रवर्त्तक एव स्यादिति चेत्तन्न कुतस्तत्राह—प्रवर्त्तकधियो जनकत्वहेतोरिति । प्रवर्त्तकज्ञानजनकत्वाद्धेतोरित्यर्थः । ननु शब्दस्य प्रवर्त्तकज्ञानजनकत्वाङ्गीकारे कार्यपरतैव स्यात्प्रवर्त्तकान्तरस्याभावादित्याशङ्क्य प्रवर्त्तकान्तराभावोऽसिद्ध इष्टसाधनत्वज्ञानस्य प्रवर्त्तकत्वादित्यभिप्रेत्याह—इष्टाभ्युपायेति । इष्टाभ्युपाय इष्टसाधनत्वं तद्विषयणी या मतिस्तज्जन्महेतुः इष्टसाधनताज्ञानजननद्वारा पुरुषं प्रवर्त्तयति न तु साक्षादिति सम्बन्धः । अतो न बोधकत्वभङ्ग इति भावः । ३५५ ॥

तस्मान्न कार्यान्विते व्युत्पत्तिरञ्जसा किन्तु योग्येतरान्वित एवेत्युपसंहरति—

**तस्मादसंगतमिदं यदुशन्ति केचित्**
**कार्यान्वितार्थविषयैव तु शब्दशक्तिः ।**
**तत्र प्रयोगमभिवीक्ष्य तथा प्रतीतिः**
**कल्प्येति वर्णितनिजेष्टविघातहेतोः ॥ ३५६ ॥**

तस्मादिति । तत्पदार्थमेवाह— वर्णितनिजेष्टविघातहेतोरिति । विशिष्टविधेर्विघातादित्यर्थः । एतच्च पूर्वोक्तव्यर्थविशेषणत्वादेरप्युपलक्षणम् । तत्र कार्यान्विते प्रयोगं वृद्धानां गामानयेत्यादिप्रयोगं तथा प्रतीति-

यथा शक्तिस्तथा प्रतीतिरपि लौकिका हि प्रवर्त्तकवस्तुन्येव लिङादिशब्दं प्रयुञ्जते । प्रवर्त्तकं च कार्यमिति प्रवर्त्तकविषयशब्दं दृष्ट्वा कार्यविषयैव शब्दशक्तिः प्रतीतिश्च कल्प्यत इत्येतदसंगतमित्यर्थः। तथा प्रतीतिमिति । पाठे तु कार्यान्विते प्रयोगवत्प्रवृत्तिलिङ्गेन प्रतीतिं चाभिवीक्ष्य कार्यान्वितविषयैव शब्दशक्तिः कल्प्येति सम्बन्धः ॥३५६॥

एवं लौकिकपदानां कार्ये व्युत्पत्तिं निराकृत्य वैदिकलिङादेर्धात्वर्थातिरिक्ते नियोगे व्युत्पत्तिर्निराकरोति—

**वेदैकगम्यमिति कार्यमभीष्टमस्मिन्-**
**शक्तिग्रहोऽपि न यदस्य समञ्जसोऽयम् ।**
**शक्तिग्रहं च परिहृत्य न बोधकत्वं**
**शब्दस्य शक्यमिह वक्तुमशङ्कितेन ॥ ३५७॥**

वेदैकगम्यामिति । कार्यं धात्वर्थातिरिक्तं स्थायिनियोगाख्यं वेदैकगम्यमभीष्टं लिङादिपदस्य शक्तिग्रहोप्यस्मिन्कार्य इत्ययं पक्षो न समञ्जस इति सम्बन्धः। मानान्तरेण नियोगोपस्थितौ तत्र लिङादिव्युत्पत्तिः किं वा शब्देन तदुपस्थितौ। नाद्यः। नियोगस्य मानान्तरागोचरत्वात्तदिदमभिप्रेत्योक्तं—वेदैकगम्यामिति। भवतामङ्गीकारोपि तथेत्यभिप्रेत्योक्तम्—अभीष्टमिति । न द्वितीयः। व्युत्पत्तेः प्राक्शब्दात्तदुपस्थित्यनुपपत्तेरित्याह—शक्तिग्रहं चेति । अशङ्कितेन धृष्टेनेत्युपहासः । तथा च—वेदेन तदुपस्थितौ लिङादेस्तत्र शक्तिग्रहः शक्तिग्रहानन्तरमेव तत्सहायाल्लिङादेस्तदुपस्थितिरित्यन्योऽन्याश्रयदुष्टार्थाभिधातृत्वादस्य धृष्टत्वमित्यर्थः। अथवा—स्तुतियोग्यस्य वेदैकगम्यत्वं ततः किं तत्राह—इत्यास्मिन्च्छक्तिग्रह इति । अपिरवधारणे यस्माद्वेदैकगम्यं तस्मादस्मिन्कार्ये अयं शक्तिग्रह एव न समञ्जसः कुतः पुनस्ततस्तदधिगम

इत्यर्थः। ननु माभूच्छक्तिग्रहः। शब्दस्तु स्वार्थमवबोधयतु न हि समर्थतयावगतशब्द एवार्थमवबोधयेदितिनियमः। समयस्य कार्यैकगम्यस्य तत्पूर्वमधिगत्ययोगादित्याशङ्क्य किं शब्दार्थप्रतीतेः पूर्वं शक्त्यधिगतेरसम्भवादेव तस्य तद्धेतुत्वं निह्नूयते किं वा शक्तिग्रहं विनापि शब्दादर्थोपस्थितिदर्शनबलात्। नाद्यः। मध्यमवृद्धव्यवहारादिना लिङ्पदस्य लोके शक्तिग्रहोपपत्तेः। न हि स्वाभिमतेऽर्थे शक्तिग्रहो न सम्भवतीति सर्वसंप्रतिपन्नशक्त्यवधारणकारणत्वस्यापलापो युज्यते। न द्वितीयः। अव्युत्पन्नस्यान्यत्र शब्दावगमादर्थप्रतीत्यदर्शनात्। नन्वन्यत्र-त्यशक्तिग्रहं विनार्थप्रतीत्यभावेपि लिङादिपदात्केवलादेवार्थप्रतीतिर्जायतामिति चेदहोऽस्य धाष्टर्यं यदयं क्लृप्तं कारणं परित्यज्यानुभवपराहतामपि केवलाल्लिङादिपदादर्थप्रतीतिं वर्णयतीत्यभिप्रेत्याह—शक्तिग्रहं चेति। ननु लोक इव वेदेपि शक्तिग्रहजन्योद्बुद्धसंस्कारसध्रीचीन एव लिङादिर्नियोगबोधकः। न च नियोगोपस्थितिं विना तत्र शक्तिग्रहोऽनुपपन्न इति वाच्यम्। नियोज्याभिधायिस्वर्गकामादिपदसमभिव्याहारानुपपत्त्युपस्थितनियोगे लिङादिशक्तिग्रहादिति चेन्न—अनुपपत्तिगम्यत्वे नियोगस्य मानान्तरगोचरतयाऽपूर्वत्वक्षतेः। नन्वियमनुपपत्तिर्न मानं किन्तु तर्क एव। यद्ययं लिङादिर्धात्वर्थातिरिक्तस्यापि कार्यपरो न भवेत्स्वर्गकामादिपदसमभिव्याहृतो न भवेदित्येवंरूपस्तर्कश्चाप्रमाणमिति न तस्यापूर्वत्वहानिरिति चेन्न—एवमपि तर्कमूलभूतव्याप्तिग्रहगोचरत्वेन नियोगस्यापूर्वत्वाभावात्तदगोचरत्वे व्याप्त्यभावेन तर्कस्याभासत्वप्रसङ्गात्तर्कस्य च स्मृत्यनुभवद्वैराश्यवादिनः तवाप्रमाणत्वानुपपत्तेः। स्मृतेश्चाप्रमाणत्वेपि तन्मूलानुभवस्य प्रमाणतया तद्विषयनियोगस्यापूर्वक्षतेः। किं च यदि तर्केणापि नियोगः स्वर्गसाधनत्वेनोपस्थितो भवेत्तदा तस्य स्वर्गं प्रति साधनतया प्राधान्यप्रच्युतिप्रसङ्गः। ननु

तस्य साधनत्वमुपस्थितावेवापेक्ष्यते न तु तस्य वाच्यत्वेपि, वाच्यत्वं तु तस्य कृतिसाध्यत्वाकारेणेति न प्राधान्यप्रच्युतिरितिचेत्तर्हि तस्य स्वर्गसाधनत्वेनोपस्थितौ कारणाभावात्तस्य तत्साधनत्वमेव न सिद्ध्येत्। न च नियोज्यकृतिसाध्यत्वावगमानुपपत्तिः तत्र मानम्-अवगततत्साधनभावस्यैव तत्कृतिसाध्यतावगमादतो न तस्य कृतिसाध्यत्वमपि सिद्ध्येत्। ननु तस्य साधनत्वेपि प्रधानफलेन सहैकलोलीभावान्न प्राधान्यप्रच्युतिरिति चेन्न—प्रत्यक्षाप्रत्यक्षयोस्तयोरेकत्वानुपपत्तेः। स्वर्गस्य सुखत्वेन प्रत्यक्षत्वादेकत्वे तयोः साध्यसाधनभावानुपपत्तेश्च। न च तस्य फलसाधनत्वेपि गर्भदासन्यायेन न प्राधान्यप्रच्युतिरिति वाच्यम्। स्वामिनोपि तस्यां दशायां कर्त्तुरिव यागस्य गर्भदासशेषत्वात् दृष्टान्तासम्प्रत्तिपत्तेः। न हि प्राधान्यमप्राधान्यं वा जातिः किन्तु यो यदा यस्योपकरोति स उपकारनिर्वर्त्तकः शेषः। उपकार्यः शेषी। न चात्र गर्भदासन्यायावकाशोपि स्वामी हि चेतनः कालान्तरे दासाधीनोपकारमात्मनो मन्यमानस्तैलान्नदानादिना तं पोषयति। तदानीमपि स्वयं स्वामित्वेन तिष्ठति। नियोगः पुनरचेतनः स्वस्य कस्मै ज्ञातप्रयोजनाय स्वर्गं प्रसाधयेदिति न तस्य स्वर्गशेषत्वप्रतिपत्तिदशायां स्वामित्वानुभवः। ननु नियोगनिष्पत्त्या स्वर्गो भविष्यतीति बुद्ध्या नियोज्यो नियोगं निष्पादयतीत्येतावतैवात्र गर्भदासन्यायावतार इति चेत्तर्हि नियोगस्य स्वर्गं प्रति साधनत्वनोपस्थितस्य तं प्रति शेषत्वमेवेति न तस्य सर्वशेषित्वं प्राप्नोति। किं चैवमपि न नित्यनियोगस्य शब्दवाच्यत्वसम्भवः। तत्र तदुपस्थापकतर्काभावेन व्युत्पत्त्यभावात्। ननु कामिनियोगे व्युत्पन्नस्य लिङोऽन्यत्राप्यविशिष्टत्वान्नियोग एवार्थ इति चेन्न—फलसाधनत्वाकारेणोपस्थितनियोगस्य तद्रूपेणैव शक्तिविषयत्वाद्यद्रूपेण नियतोपस्थितिस्तद्रूपेण शक्तिविषयत्वादन्यथा लोकेपि कार्यान्वितत्वेनोपस्थितावपि केवले शक्तिग्रह इति साधु-

समर्थिता कार्यव्युत्पत्तिः लौकिकवैदिककार्यवैलक्षण्येपि नियोग-मात्र इव कार्यमात्रे लिङादिव्युत्पत्त्या कार्यमात्रशक्तपदेन वेदे सम-भिव्याहारादिविशेषसामग्रीसमवहितेन कार्यविशेषोपस्थितिसम्भवेन च प्राथमिकधात्वर्थकार्यव्युत्पत्तिविरुद्धा तत्र लक्षणा च स्वाभिमता निपुणमुपपादिता । किंच प्रधानापूर्वत्वेनैव शब्दवाच्यत्वे दुरिता-पूर्वस्यापि शब्दार्थत्वप्रसङ्गः तस्मात्समीहितसाधनापूर्वत्वाकारेणैव तस्य लिङाद्यर्थत्वमिति न नित्यनियोगस्य तदर्थता । यत्तु नित्या-पूर्वमेव पुरुषार्थ इति तदसत् । एवमपि तस्य समीहिसाधनत्वा-भावेनाशब्दार्थतापातात्सुखदुःखप्राप्तिपरिग्रहारान्यतरत्वाभावेन तद-वाप्तेरपुरुषार्थत्वाच्च । अत एव यागस्य नियोगफलं प्रति करणत्व-मौपादानिकमित्यपि तेषां दुर्वहं नियोगो हि धात्वर्थविषयावच्छिन्न-तया शब्देनाभिधीमानस्तस्य कारणत्वमाक्षिपेद्विषयत्वं च धात्वर्थस्य फलकारणतयावगतस्यैव प्रतिसंहितफलकरणत्वस्यैव नियोगविष-यत्वात्तथा च कथं नान्योन्याश्रयः । न च नियोगान्विताभि-धानाभिधेयापर्यवसानादेव यागस्य करणत्वमिति करणत्वं विष-यत्वं च युगपत्सिद्ध्यतीति वाच्यं, तदुभयविषयस्य ज्ञानस्यैकत्वे करणत्वमौपादानिकं विषयत्वं शाब्दमिति व्यवस्थानुपपत्तेः । न च ज्ञानद्वयस्यैकस्मिन्नात्मनि युगपदुत्पत्तिः सम्भवति । करण-त्वज्ञानस्य पूर्वभावित्वे च कथमुक्तदोषनिस्तारः । यागस्य विष-यताभिधायिशब्दाभावाच्च न विषयत्वेनान्वयः शब्दाद् बोध्यते । ननु प्रकृत्यर्थान्वितप्रत्ययार्थस्य लिङाभिधानान्नियोगयागयोर-न्वयी वक्तव्यः । स च सम्बन्धोवच्छेद्यावच्छेदकतालक्ष-णविषयविषयिभाव एवान्यस्याभावादिति यागस्य विषयत्वे-नान्वय इति चेन्न । यागकरणको नियोग इति करणकरणिभावे-नाप्यन्वयसंभवेन परिशेषासंभवात् । ननु नियोगविषयत्वनिर्वाहार्थ-मेव यागस्य तत्करणतापेक्ष्यते नान्यथेति चेन्न—नियोगविषयत्वमन्त-

रेणापि तदुत्पत्त्यर्थं यागस्य तत्कारणत्वेनान्वयस्यापेक्षितत्वादन्यथा कामिनस्तत्साधनादन्यत्र प्रवृत्त्यनुपपत्तेः । किंच धात्वर्थस्यैव स्वर्ग-साधनत्वे संभवति तदतिरिक्तस्य शब्दार्थत्वकल्पनमनुचितम् । ननु धात्वर्थस्य क्षणिकस्य कथं कालान्तरभाविफलसाधनत्वेनान्वयः न ह्ययोग्ययोरपि शाब्दान्वयबोधो भवेदिति चेन्न । गृहीतवेद-प्रामाण्यस्य क्रियायां कालान्तरभाविफलसाधनताऽयोग्यता-ज्ञानानुदयादन्यथाद्वावेवायोग्यताज्ञाने स्वर्गकामः सिकतां भक्षयेदित्यादाविव वेदस्य निश्चताप्रमाणतया स्वर्गकामपद-समभिव्याहारादिलक्षणतर्कस्यैवानुदयप्रसङ्गात् । ननु साध्य-विशेषं प्रति साधनताऽयोग्यतानिश्चयेपि नाप्रामाण्यनिश्चयः पौरुषेयत्वादिप्रयुक्ताप्रामाण्यस्य निरस्तत्वादिति तर्कोदयः स्या-दिति चेत्तर्हि वेदप्रामाण्याभिनिवेशवतोऽसति विरोधिकोट्युपस्थाने योग्यतानिश्चय एव भवति । तथा ह्यर्थाबाधो योग्यता तद्बाधश्चा-योग्यता । न च यागस्य स्वर्गसाधनत्वं शब्दातिरिक्तेन केन-चन मानेन बाध्यते । तस्य मानान्तरागोचरत्वात् । ननु क्रियायाः स्वर्गसाधनत्वे क्रियानन्तरमेव स्वर्गः किं न स्यादतस्तददर्शनेन तद-योग्यता निश्चीयत इति चेन्न । साधनस्यापि चतुष्टयसन्निकर्षस्येवा-लोकापेक्षया रूपज्ञानजनकत्वं वर्त्तमानशरीरपातादिसहकार्यपेक्षया स्वर्गजनकत्वोपपत्तेरित्यनुपलब्धेरन्यथापि सिद्धत्वादन्यथा नियोग-पक्षेप्येष दोषः समान एव नियोगस्य स्वर्गं प्रति साधनत्वात् । ननु विमता क्रिया कालान्तरभाविफलसाधनं न भवति क्रियात्वान्मर्दन-क्रियावदित्यनुमानादेव तन्निश्चीयत इति चेन्न । कालान्तरभाविपरमा-पूर्वसाधनयागक्रियायां व्यभिचारात् । ननु स्वर्गजनिका न भवतीति साध्यत इति चेन्न कालान्तरभाविपरमापूर्वसाधनत्ववत्स्वर्गसाधन-तया अप्युपपत्तेरप्रयोजकत्वात् । ननु तत्र परमापूर्वत्वाकारेण दुरिता-पूर्वे क्रियानन्तरभावित्वदर्शनमस्तीति चेत्किमेतावता प्रकृतयागनि-

योगयोर्न ह्येतावता योग्यतायां वैषम्यमुपपाद्यते । न च सजातीय-दर्शनमेव योग्यता तथा सत्यद्य जातः पयः पिबतीति वाक्यस्याबो-धकत्वप्रसङ्गाद्यजिपदोपस्थितयागत्वाकारेण परमापूर्वसाधनतायाः क्वचिदप्यदर्शनाच्च । किन्त्वर्थाबाध इत्युक्तं स चोभयत्र यागस्य स्वर्ग-नियोगसाधनत्वयोः समान एव । एतेनानन्तरक्षयानुभवादेव यागस्य स्वर्गसाधनत्वाभावो निश्चीयत इति प्रत्युक्तम् अपूर्वसाधनत्वाभाव-स्यापि निश्चयप्रसङ्गादवान्तरापूर्वद्वारापूर्वसाधनत्वसंभावनायाः स्वर्ग-साधनत्वपक्षेपि तुल्यत्वात्तस्माद्योग्यतोपस्थित्यभावाद्वेदप्रमाण्याभि-निवेशवतो झटिति तदर्थाबाधलक्षणयोग्यतानिश्चयस्यैवोदयाद्यागस्य स्वर्गसाधनत्वे बोधिते प्रमितसाधनत्वनिर्वाहायापूर्वं कल्प्यते द्वारतयेति न तस्य शब्दवाच्यता । अनन्यलभ्यत्वाभावादित्यर्थः ॥ ३५७ ॥

नन्वेवं ब्रह्मणोपि मानान्तरागोचरतया तत्रापि कथं शब्दशक्तिर्ग्रा-ह्येत्याशङ्क्य समानेपि मानान्तरागोचरत्वे महद्वैषम्यमस्तीत्याह—

शश्वत्स्वयंप्रभमलुप्तचिदात्मभूतं
विष्णोः परं पदममुत्र तु शब्दशक्तिः ।
शक्या ग्रहीतुमतिबुद्धिमनस्यपीति
शास्त्रप्रमाणकमदः प्रवदन्ति सन्तः ॥ ३५८ ॥

शश्वत्स्वयंप्रभमिति । सर्वदा व्यवहारदशायामपि स्वयंप्रकाशमि-त्यर्थः । स्वयंप्रकाशेपि ज्ञाने नाशादूर्ध्वं तत्सिद्धये पुरुषान्तरज्ञाने वा पुरुषान्तरस्य मानापेक्षावदत्रापि तदपेक्षां निवारयति । अलुप्तचि-दात्मभूतम्-अविनाशिचैतन्यलक्षणात्मभावमापन्नम् । अमुत्र-ब्रह्मणि, तु-शब्देन कार्यादस्य विशेषो दर्शितः । तमेव विशेषं शश्वदित्यादिना दर्शयति अतिबुद्धिमनस्यतिक्रान्तं बुद्धिकारणं मनो येन तदतिबुद्धि-मनः तस्मिन् । अथवा बुध्यतेऽनेनेतिबुद्धिः शब्दः वाङ्मनसातीत इत्यर्थः ।

अतस्तद्ब्रह्मणः स्वयंप्रकाशत्वात्तच्छबलस्य प्रमाणान्तरागोचरस्यापि प्रमाणं विना साक्षिणा स्फुरणसंभवात्। न च तत्र व्युत्पत्त्यनुपपत्तिरित्यसकृदावेदितमस्माभिः तन्न विस्मर्त्तव्यमितिभावः। यतो विष्णोः परं पदं शश्वत्स्वयंप्रभमलुप्तचिदात्मभूतं ततोऽतिबुद्धिमनस्यपि अमुत्र तु शब्दशक्तिर्ग्रहीतुं शक्येति सन्तो वदन्ति अतः शास्त्रप्रमाणकमिति सम्बन्धः ॥ ३५८ ॥

एवं प्रवर्त्तकवाक्यादेव प्राथमिकव्युत्पत्तिमङ्गीकृत्य तत्र लाघवादावश्यकत्वाच्च। योग्येतरान्वित एव व्युत्पत्तिर्न कार्यान्वित इत्युक्तं संप्रति केवलसिद्धबोधिवाक्यादपि तद्दर्शनाच्च कार्यान्विते व्युत्पत्तिरिति वक्तुं व्युत्पत्तिहेतुभूतवाक्यार्थज्ञानं प्रवृत्त्यादिकं विनापि संभवतीत्याह—

**जातः सुतः सकलवंशविवर्धनस्ते**

**विप्रेति वाक्यसमनन्तरमस्य बुद्धिः।**

**श्रोतुर्मुखाकृतिवशेन तु पुत्रजन्म-**

**वस्तुन्यवश्यमनुमीयत एव बालैः ॥ ३५९ ॥**

जातःसुत इति। हे विप्र ते सकलवंशविवर्द्धनः सुतो जात इति वार्ताहरोक्तवाक्यश्रवणसमनन्तरमस्य श्रोतुः मुखाकृतिवशेन प्रसन्नवदनादिलिङ्गेन पुत्रजन्मनि विषयेऽवश्यं बुद्धिर्जातेति बालैः पुत्रादिशब्दार्थानभिज्ञैरनुमीयत इति सम्बन्धः। पुत्रस्ते जात इति वाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासादिकं सर्वैरनुभूयते। तच्च हर्षं विना नोत्पद्यत इति बालस्तमनुमिनोति। अयमिदानीं सुखी प्रसन्नवदनत्वादहमिवेति हर्षश्च कादाचित्काकस्मिकोऽनुपद्यमानः किंचिन्निमित्तमपेक्षते। तन्निमित्तानि च यद्यपि क्षेत्रारामप्राप्त्यादीनि बहूनि सन्ति

तथाप्ययं समवगततत्सुतजन्मा स्वात्मन्यवगतपुत्रजन्महर्षहेतुभावः उपस्थितमेव तत्सुतजन्म हर्षनिमित्ततया कल्पयन् पुत्रजन्मज्ञानादेवायं सुखीति तद्विषयज्ञानमस्यानुमिनोति यद्यपि चानेन व्युत्पित्सुना हर्षहेतुस्तत्प्रियासुखप्रसवोपि ज्ञात एवेति हर्षहेतुत्वेन तदवगमोपि कल्पयितुमुचितस्तथापि पुत्रजन्ममात्रज्ञापकतत्पदाङ्कितवासःप्रदर्शनेन पितरि पुत्रजन्मज्ञानस्यावश्यकल्प्यतया तस्यैव सुखहेतुत्वे संभवत्यन्यस्य कल्पनानुपपत्तेरिति पुत्रजन्मविषयज्ञानमेव कल्पयति। अतः प्रवृत्तिनिवृत्ती विनापि श्रोतृसमवायिज्ञानस्यानुमानं संभवतीत्यर्थः ॥ ३५९ ॥

ततः किमिति तत्राह—

**भूतार्थनिष्ठवचनादपि शब्दशक्तिः**
**शक्या ग्रहीतुमुदितेन पथानभिज्ञैः।**
**तत्र प्रवर्त्तकनिवर्त्तकवाक्यमूल-**
**शक्तिग्रहैकनियमस्य न हेतुरस्ति ॥ ३६० ॥**

भूतार्थनिष्ठेति । यतो ऽश्रुतार्थमात्रविषयज्ञानानुमानमुदितन्यायेन संभवति ततोनभिज्ञैः पुत्रार्थशब्दार्थानवगन्तृभिः भूतार्थमात्रनिष्ठादपि वचनान्निमित्ताच्छब्दशक्तिः संमुग्धाकारेण पुत्रजन्मज्ञानस्य वाक्यान्वयव्यतिरेकाभ्यां वाक्यस्य तत्र सामर्थ्यं ग्रहीतुं शक्येत्यर्थः । ननु प्रवर्त्तकवाक्यादपि व्युत्पत्तिर्दृश्यते । सत्यम् । न ह्यस्माभिः प्रवर्त्तकवाक्यमूला व्युत्पत्तिर्निराक्रियते । किन्त्वन्यतोपि व्युत्पत्तिदर्शनात्तस्याः तदेकमूलत्वं नेत्याह—तत्रेति । एवं सतीत्यर्थः । प्रवर्त्तकनिबन्धनैव व्युत्पत्तिः । सा च कार्यैकविषयेति नियमो नास्तीत्यर्थः। बालो हि प्रवृत्तिलिङ्गेन तद्धेतुप्रवर्त्तकज्ञानमेव हर्षादिलिङ्गेन पुत्रजन्मज्ञानमनुमाय तस्य वाक्यान्वयव्यतिरेकाभ्यां वाक्य-

मेव तद्धेतुत्वेन कल्पयति। ननु तत्पदाङ्कितवासोलक्षणलिङ्गदर्शनेनापि पितुस्तत्संभवात्कथं प्रमाणान्तरादस्य परिशेष इति चेन्न–लिङ्गप्रदर्शनात्प्रागेव पितुः श्रूयमाणवाक्यसमनन्तरभाविमुखविकासादिलिङ्गानुमिततहर्षहेतुनज्जन्मज्ञानान्वयव्यतिरेकयोर्वाक्यनिष्ठत्वात् लिङ्गदर्शनस्य पश्चात्तर्कविधया वाक्यस्यार्थान्तरपरिशेषकत्वात्तथाच न प्रवर्त्तकवाक्यनिबन्धना व्युत्पत्तिरिति भावः॥ ३६०॥

नन्वेवं सामान्यव्युत्पत्तावपि पदविशेषस्यार्थविशेषे व्युत्पत्तिं विना वाक्यस्यार्थबोधकत्वाभावात्तत्र च प्रवृत्तिनिवृत्त्योरपेक्षितत्वात्तयोश्च प्रवर्त्तकनिवर्त्तकवाक्यं विनाऽयोगात्। सामान्यव्युत्पत्तिपर्यवसानाय प्रवर्त्तकवाक्यमपेक्षणीयमेव। अतः कथं सिद्धवाक्यादेव व्युत्पत्तिरित्याशङ्क्य प्रवर्त्तकनिवर्त्तकवाक्यं विनाप्यवापोद्वापाभ्यां विशेषव्युत्पत्तिरपि तत्रैव संभवतीत्याह—

**सामान्यतः प्रथममेष पदार्थपिण्डो**
**वाच्योऽस्य वाचकमिदं पदपिण्डरूपम्।**
**इत्याकलय्य पुनरेष विशेषतोऽपि**
**शब्दार्थसंगतिमवैति जनस्तटस्थः॥ ३६१॥**

सामान्यत इति। एष तटस्थो जनो व्युत्पित्सुः प्रथमं संमुग्धाकारेण एष पदार्थपिण्डः पदार्थसमूहो वाक्यार्थोऽस्य वाक्यस्य वाच्यः इदं पिण्डरूपं वाक्यमस्य वाक्यार्थस्य वाचकमित्याकलय्य [शक्तिं सामान्यतो गृहीत्वा पुनः विशेषतोऽपि शब्दार्थसंगतिं पुत्रादिपदस्य तत्तदर्थविशेषे संगतिमवैति अवगच्छतीति संबन्धः॥ ३६१॥]

(१) एवं प्रसिद्धपदसमभिव्याहारादप्यप्रसिद्धपदस्य विनैव

---

(१) आदर्शपुस्तके ३६२ श्लोकस्य तत्त्वबोधिनीटीका त्रुटितेति श्रीमधुसूदनसरस्वतीप्रणीतसारसंग्रहव्याख्या योज्यते इति शेयम्।

कार्यान्वयप्रतीतिं योग्येतरान्विते संगतिग्रहणादपि न शब्दार्थस्य कार्यान्वयित्वनियमः। न च तत्रापि पदान्तरस्य कार्यान्विते प्रथमावगतशक्त्यनुरोधेन कार्यपदाध्याहारोऽस्त्विति वाच्यम् योग्येतरान्वित एव प्रथमं संगतिग्रहोपपादनादित्याशयेनाह —

काष्ठैः स्थाल्यां पचति विविधैरोदनं पूर्णिकेति
श्रुत्वा बालः सपदि मनुते काष्ठशब्दस्य शक्तिम्।
दृष्ट्वा तस्मिन्पचनकरणं प्रज्वलत्काष्ठजातं
न्यायोपायादितरवचसां शक्तिषु प्राक्प्रवीणः ॥३६२॥

काष्ठैः स्थाल्यामिति। पूर्णिका—दासी। इतरवचसां काष्ठपदव्यतिरिक्तपदानां शक्तिषु अमत्रादिविषयास्विति शेषः। प्रागेतस्मात्प्रयोगात्पूर्वं प्रवीणो निपुणो विद्वान्बालः पूर्णिका विविधैः काष्ठैः स्थाल्यामोदनं पचतीति श्रुत्वा पचनकरणं प्रज्वलत्काष्ठजातं च दृष्ट्वा तस्मिन्काष्ठे न्यायोपायान्न्यायबलेन तत्तदर्थविशेषे स्थाल्यादिपदानां शक्तेर्निश्चयात्परिशेषन्यायेन काष्ठशब्दस्य शक्तिं सपदि मनुते इति सम्बन्धः ॥ ३६२ ॥

[ इदानीं प्रथमव्युत्पत्तेः प्रवर्त्तकवाक्याधीनत्वनियमेऽपि क्रियातिरिक्तकार्यस्यैव लोकेऽप्रसिद्धत्वात् न कार्यान्विते शक्तिः ] संभवतीत्याह—

न च किमपि नः कार्यं नाम प्रमाणपथानुगं
यदि तु पुनर्लिङ्लोडादेरूपैष्यति वाच्यताम्।
न खलु तदितो धात्वर्थादेः पृथग्व्यवसीयते
व्रजतु तदिह श्रेयो हेतुर्लिङादिपदार्थताम् ॥ ३६३ ॥

न च किमपीति । प्रमाणपथानुगं—प्रमाणविषयः विचारसह-मिति यावत् तथाहि किं कार्यत्वं नाम कृतिसाध्यत्वं किं वा कृत्युद्देश्यत्वम् । आद्येपि किं साक्षात्कृतिसाध्यत्वमुत परम्परया। नाद्यः। असंभवात् अभावार्थस्य तस्य साक्षात्कृतिसाध्यत्वानुपपत्तेः धात्वर्थेऽतिव्याप्तेश्च । ननु न धात्वर्थेऽतिव्याप्तिः प्रथमं कृतिसाध्यतया प्रतीयमानस्यैव कार्यत्वात्कामिकृतेश्च काम्यसाधनविषयत्वादव्यवहितकारणस्यैव साधनत्वाद्धात्वर्थस्यापूर्वव्यवहितत्वादपूर्वस्य च तदभावादत एव नासंभवोऽपीति चेन्न—धात्वर्थस्यापि फलं प्रत्यव्यवहितकारणत्वात् । न च तस्यापूर्वेण व्यवधिः । तस्य व्यापारतयाऽव्यवधायकत्वात् । अन्यथा ज्वालादेरपि संयोगेन व्यवहितस्यासाधनत्वप्रसङ्गात् । किञ्च किमिदमव्यवहितत्वं स्वोत्पत्त्यनन्तरक्षण एव कार्योत्पादकत्वं किं वा फलकाले विद्यमानत्वम् । अथवा—कार्यान्तरमजनयित्वा फलोत्पादकत्वम् । अथवा यस्मिन्सति कार्यं भवत्येव तत्त्वम् । नाद्यः । नियोगेऽसंभवात् न हि नियोगः स्वोत्पत्त्यनन्तरक्षणमेव स्वर्गमुत्पादयति । न द्वितीयः । स्वस्य विनश्यदवस्थायां ज्ञानादिजनकचतुष्टयसंनिकर्षादावव्याप्तेः । नापि तृतीयः। नियोगस्यापि स्वर्गादिसुखार्थं तत्पूर्वमेव देहाद्युत्पादकतया तदसंभवात् । ननु शरीरादिकमप्येतस्य फलमेवेति चेन्न । तस्यास्वर्गत्वात्सुखविशेषस्यैव स्वर्गत्वात्तत्साधनत्वेन तत्फलत्वे वाऽपूर्वस्यापि तत्साधनतया तज्जनकयागस्याप्यव्यवहितत्वात् । तस्माच्चतुर्थ एव परिशिष्यते । स च धात्वर्थेपि संभवत्येव । तस्मिन्सति स्वर्गस्यावश्यकत्वात् । न द्वितीयः । स्वर्गेऽतिव्याप्तेः । तस्यापि धात्वर्थद्वारा कृतिसाध्यत्वात् । अत एव नाद्यद्वितीयोपि स्वर्गस्यैव पुरुषार्थतया कृत्युद्देश्यत्वात् नियोगे सुखविलक्षणे तदनुपपत्तेश्च । अत एवानन्योद्दिष्टकृतिव्याप्यत्वमित्यपि लक्षणमलक्षणं नियोगस्य स्वर्गोद्दिष्टकृतिव्याप्यत्वात् । न च स्वगोचरस्येप्सितकारणत्वज्ञापकत्वे सति

प्रवर्त्तकत्वं ज्ञानस्यैव प्रवर्त्तकत्वेनानिष्पन्नस्य तस्य प्रवृत्तिहेतुत्वानुपपत्तेः । यागकारणताबोधस्य नियोगाधीनत्वेऽन्योन्याश्रयदोषस्योक्तत्वाच्च । न च प्रमाणमपि नियोगविषयं पश्यामः । तस्य शब्दातिरिक्तप्रमाणागोचरत्वाच्छब्दस्य तत्र व्युत्पत्त्यसंभवेन प्रामाण्यायोगादतो धात्वर्थातिरिक्तं लक्षणप्रमाणाभ्यां दुर्निरूपमिति । ननु यागः कर्त्तव्य इति कर्त्तव्यत्वानुभव एव तत्र प्रमाणमिति चेन्न धात्वर्थचिकीर्षाया एव तथात्वेनानुभवादन्यथा नियोगस्य मानान्तरगोचरत्वेऽपूर्वत्वक्षतेरित्याह—यदिहेति । इह वेदे यद् धात्वर्थातिरिक्तं कार्यं लिङादेर्वाच्यतामुपैष्यति प्राप्स्यतीति मतं तत्कार्यमितो धात्वर्थतद्विषयचिकीर्षाभ्यां पृथङ् न व्यवसीयते खल्विति सम्बन्धः । अतः कार्यं लिङाद्यर्थो न भवतीत्यर्थः । कस्तर्हि लिङाद्यर्थः श्रेयः साधनत्वमेवेत्याह—व्रजतीति । यस्मात्कार्यं न प्रमाणपथानुगतं तस्माच्छ्रेयोहेतुत्वमेव लिङादिपदार्थतां गच्छतीत्यर्थः ॥ ३६३ ॥

ननु लिङादिश्रवणानन्तरं पुरुषस्य प्रवृत्तिदर्शनाल्लिङादेः प्रवर्त्तकपरत्वं वक्तव्यं प्रवर्त्तकं च कार्यमेव दृष्टं न त्वन्यत्प्रमाणाभावादित्याशङ्क्य सर्वत्राप्यन्वयव्यतिरेकाभ्यां श्रेयःसाधनताज्ञानस्यैव रागद्वाराप्रवर्त्तकत्वात्तत्रैव लिङादिपदव्युत्पत्तिरितीष्टसाधनताज्ञानस्य प्रवृत्तिं प्रत्यन्वयव्यतिरेकौ तावदाह—

**न खलु जगति श्रेयोहेतुप्रमित्युदयादृते**
**पुरुषवचनात्क्वापि प्राज्ञः प्रवर्तितुमर्हति ।**
**पुरुषवचनाच्छ्रेयोहेतुप्रमित्युदयात्पुन-**
**स्तदनुवशगो रागोत्पत्तौ ततः स हि चेष्टते ॥३६४॥**

न खल्विति । खलु प्रसिद्धौ श्रेयोहेतुप्रमितिरिष्टसाधनत्वज्ञानं प्राज्ञः प्रेक्षापूर्वकारी प्रेक्षापूर्वकारिणां विषभक्षणादाविष्टसाधनत्वज्ञानाभावेन

प्रवृत्त्यदर्शनात्कदलीफलभक्षणादौ तत्सद्भावेन प्रवृत्तिदर्शनात्तस्यैव प्रवर्त्तकत्वं न कार्यताज्ञानस्येत्यर्थः। एतच्चोपरिष्टात्प्रपञ्चयिष्यते। तस्यापि प्रवर्त्तकत्वं न साक्षात्किन्तु रागद्वेषद्वारेत्याह—रागेति। प्रवृत्तिविषये इच्छोत्पत्तौ सत्यां ततः पश्चात्तदनुवशगो रागवशीकृतः स चेष्टते हीत्यर्थः॥ ३६४॥

इदानीमिष्टसाधनताज्ञानस्य रागद्वारैव प्रवर्त्तकत्वान्न प्रवृत्त्या साक्षात्करणतयेष्टसाधनज्ञानमनुमातुं शक्यमित्यभिप्रेत्यादौ रागानुमानप्रकारमाह—

**नयनिपुणधीर्बालश्चेष्टां समीक्ष्य समीहितुः**
**कृततदुचितव्याप्तिज्ञानः पुरा निज आत्मनि।**
**परतनुगतं श्रेयोहेतुप्रतीत्युदयोत्थितं**
**चरितविषये रागं तस्य प्रवर्त्तकमिङ्गति॥३६५॥**

नयनिपुणधीरिति। अन्वयव्यतिरेकादिर्नयः समीहितुः प्रवर्त्तमानस्य कृततदुचितव्याप्तिज्ञानः कृतं निष्पन्नं तस्याः चेष्टायाः लिङ्गत्वे उचितं या या प्रवृत्तिः सा रागजन्या यथा मम भोजनपानादिप्रवृत्तिरित्येवंरूपं व्याप्तिज्ञानं यस्य स तथोक्तः। निजात्मनि स्वस्मिन् परतनुगतं प्रवर्त्तमानात्मसमवेतं चरितविषये उपभुक्तसजातीये इङ्गति विमता प्रवृत्तिः रागजन्या प्रेक्षावत्प्रवृत्तित्वान्मदीयप्रवृत्तिवदित्यनुमिनोतीत्यर्थः॥ ३६५॥

इदानीं रागेणेष्टसाधनत्वज्ञानानुमानं सूचयन् तत्र सामान्यव्युत्पत्तिप्रकारमाह—

**प्रवर्तकोत्थाननिबन्धने ततः**
**समीहितोपायविशेषवस्तुनि।**

गिरोऽनुमाय प्रतिपत्तिहेतुतां
विशेषसिद्धौ तु समीहते पुनः ॥ ३६६ ॥

प्रवर्त्तकेति । प्रवर्त्तको यो रागस्तस्योत्थानमुत्पत्तिस्तस्य निबन्धने कारणे रागकारणीभूतज्ञानविषय इत्यर्थः । अनेन रागेणेष्टसाधनत्वज्ञानानुमानं सूचितं ततो रागानुमानानन्तरं समीहितोपायविशेषवस्तुनीष्टसाधनत्वे गिरो लिङादियुक्तवाक्यस्य गामानयेत्यादिप्रवर्तकवाक्यश्रवणेन श्रोतृप्रवृत्त्या तस्य रागानुमानानन्तरमिष्टसाधनत्वज्ञानमनुमाय तस्य च कारणान्तराभावाद्वाक्यमेव तत्कारणं कल्पयतीत्यर्थः । एवं सामान्यव्युत्पत्तिं प्रदर्श्य विशेषव्युत्पत्तिमप्याह—विशेषसिद्धा इति । कारकपदस्य योग्येतरान्वितगोपिण्डादिवाचकत्वं लिङादिपदस्य धात्वर्थान्वितश्रेयः साधनत्ववाचकत्वमिति विशेषपरिज्ञानार्थं समीहते यतत इत्यर्थः ॥ ३६६ ॥

तत्रादौ कारकपदानां विशेषव्युत्पत्तिग्रहप्रकारमाह—

पदान्तरस्याऽऽगमनादिहान्यत-
स्तथा परस्योद्धरणादितो गिरः ।
विशेषसिद्धिं लभते प्रयत्नवान्
पदार्थसम्बन्धगतां विचक्षणः ॥ ३६७ ॥

पदान्तरस्येति । इह—गामानयेति वाक्ये ऽन्यस्माद्वाक्यान्तरात्पदान्तरस्याश्वादिपदान्तरस्यागमनादावापाद्यथा आवापस्तथा इतः प्रकृतिवाक्यात्पदस्य गोपदस्योद्धारणात्प्रयत्नवान् व्युत्पत्त्यनुकूलव्यापारवान् तटस्थः पदार्थसम्बन्धगतां गवादिपदार्थगतशक्तिविषयिणीं सिद्धिं लभत इत्यर्थः । सामान्यव्युत्पत्तिग्रहानन्तरङ्गवादिपदानामावापोद्वापाभ्यां योग्येतरान्वितगवाद्यर्थे शक्तिं गृह्णातीत्यर्थः ॥ ३६७ ॥

इदानीं लिङादिक्रियापदानां श्रेयःसाधनत्वे व्युत्पत्तिग्रह-प्रकारमाह—

**लडादिशब्देऽपगते लिङादौ**
**प्रत्यागतेऽभीप्सितसाधनत्वम् ।**
**प्रतीयते तेन लिङादिशब्द-**
**स्तदर्थवाचीति स वेत्ति बालः ॥ ३६८ ॥**

लडादीति । लडादीत्यादिपदेन लिङादिकं गृह्यते । गामानयतीत्युक्ते श्रेयः साधनताया अनवगमाद्गामानयेत्युक्ते तदवगमादन्वयव्यतिरेकाभ्यां लिङादेः श्रेयः साधनत्वमर्थ इति गृह्णातीत्यर्थः ॥ ३६८ ॥

एवं योग्येतरान्विते व्युत्पत्तिरित्युक्तं सम्प्रति तदपि न व्युत्पत्तौ प्रयोजकगौरवात् किन्त्वन्वितत्वमात्रेऽन्वयश्च कारकाणां क्रियया क्रियायाश्च कारकेणेति यदुक्तं तदपि न कारकाणामपि परस्परान्वययोग्यत्वान्न—तेषां कार्यान्वय आवश्यक इत्यभिप्रेत्याह—

**योग्येतरान्विततया न च वाच्यताऽस्य,**
**कार्यान्वितत्त्ववपुषा न विशेषणस्य ।**
**किंत्वन्वितत्त्ववपुषो न विशेषणस्य**
**किञ्चित्प्रयोजकमिहास्ति निरूपणायाम् ॥ ३६९ ॥**

योग्येतरेति । ननु योग्येतरत्वमन्तरेणान्वितत्वमेव न संभवतीत्युक्तं सत्यमत एवान्वये नियमेन तदपेक्ष्यते । शब्दवाच्यत्वे त्वन्वितत्वमात्रं प्रयोजकं तस्मिन्सति योग्येतरत्वयोर्व्यतिरेकाभावादित्यभिप्रेत्याह—न विशेषणस्येति । योग्येतरस्येत्यर्थः । इह—अन्विततत्वे ॥ ३६९ ॥

ननु लाघवादन्वितत्वमात्रे पदशक्तौ ततोपि लाघवात्तदर्थमात्रे पदानां शक्तिरस्तु। युक्तं चैतदन्वयस्य वाक्यार्थत्वात्तस्य पदार्थत्वकल्पनायां चैकपदेनैव वाक्यार्थीभूतसंसर्गोपस्थितौ पदान्तरवैयर्थ्यप्रसङ्गात्पदात्केवलपदार्थानुभवदर्शनाच्च अन्यथा पदसिद्धान्वयबोधकत्वेन वाक्यस्य प्राभाकरनय इवानुवादकत्वप्रसङ्गाच्च। न च तत्तत्पदैः तत्तत्पदार्थमात्रबोधेऽनेकपदात्मकस्य वाक्यस्य विरम्य व्यापराभावादन्वयबोध एव न स्यात् कारणाभावादिति वाच्यम्। पदाभिहितपदार्थैरेव तदुपपत्तेरित्यभिहितान्वयवादिनां भट्टानां मतं दूषयितुमनुवदति—

**यत्केचिदाहुरभिधाय निजान्पदार्था-**
**नेतावतोपरतवन्ति पदानि तेभ्यः।**
**पश्चाद्विशेषणविशेष्यतया तु तेषां**
**संसर्गबुद्धिरपराऽवतरिष्यतीति ॥ ३७० ॥**

यत्केचिदिति। भट्टा इत्यर्थः। तेभ्यः पदाभिहितपदार्थेभ्यः पश्चात्स्वार्थमभिधाय पदोपरमानन्तरं तेषां पदार्थानामपरा केवलपदार्थबुद्धेरन्या। नचैवं सति वाक्यार्थज्ञानस्याशाब्दत्वापत्तिः। शब्दाजन्यत्वात्पदार्थानां मानान्तरत्वप्रसङ्गश्चेति वाच्यम्। परम्परया शब्दमूलत्वेन तस्यापि शाब्दत्वात् शब्दबोधितपदार्थानामेव शब्दप्रमाणत्वाच्च। चैवमनुमितेरपि प्रत्यक्षपरामर्शमूलतया प्रत्यक्षान्तर्भावापात इति वाच्यम्। नियमेन शब्दापेक्षावदनुमित्या नियमेन तस्यानपेक्षितत्वात्प्रकारान्तरेणापि परामर्शसंभवादिति भावः ॥ ३७० ॥

दूषयति—

**तद्दुर्घटं न खलु किंचिदपि प्रमाण-**
**मस्याः प्रसाधकमुदीरितकल्पनायाः।**

**येनोपलब्धिविषयत्वमुपागतानि**
**संसृष्टमेव तु पदानि पदार्थमाहुः ॥ ३७१ ॥**

तद्दुर्घटमिति । तत्परोक्तं दुर्घटमनुपपन्नं तत्र हेतुमाह—न खल्विति । खलु यस्मादस्योदीरितकल्पनाया भट्टमताभिहितान्वयकल्पनायाः प्रसाधकं किमपि षण्णां मध्ये एकमपि प्रमाणं न तस्मात्तत् दुर्घटमिति सम्बन्धः। ननु किमिति प्रमाणाभावः अन्विताभिधानस्य दुष्टत्वेन परिशेषस्यैव तत्र प्रमाणत्वादित्याशङ्क्यान्विताभिधानं नानुपपन्नम् अतो न परिशेषसिद्धिरित्याह—येनेति । येन प्रतीयमानानि पदानि संसृष्टमेवार्थमभिदधति तेन परिशेषोऽसिद्ध इति सम्बन्धः । किं पदसमुदायस्य संसर्गबोधजनकत्वं निराक्रियते, किं वा प्रत्येकं पदस्य । न तावदाद्यः। गामानयेत्यादिवाक्यादन्वितस्यैवावगमात् । संसर्गविशेषजिज्ञासयैव वाक्यप्रयोगाच्च । नापि द्वितीयः। पदमात्रादपि यत्किञ्चिदन्वितार्थस्यैवानुभवादत एव गौरित्यभिधानान्तरं किं गच्छति तिष्ठति वेति संसर्गविशेषजिज्ञासा भवति। अन्यथासामान्यज्ञानाभावेन विशेषजिज्ञासानुपपत्तेः । न च मानान्तरेण संसर्गसामान्यज्ञानमिति वाच्यम् । मानान्तरकल्पनायां बीजाभावात्पदश्रवणानन्तरमव्यवधानेन तदुपस्थितेश्च । एवमपि मानान्तरकल्पनायां गामानय दण्डेनेति पदानि गोकर्मकदण्डकरणकानयनज्ञानपूर्वकाणि गोतत्कर्मत्वादिवाचकपदत्वात्संप्रत्तिपन्नगामानयेत्यादिवाक्यवदित्यनुमानानन्तरं मनसा गामानयेति प्रत्ययोपपत्तेः । शब्दप्रामाण्यविलोपप्रसङ्गात्तच्च न युज्यते लिङ्गप्रतिसन्धानं विनापि शब्दादर्थप्रतीतेः । अतएवान्यलभ्यत्वेनान्वयस्याशक्यत्वमिति निरस्तम् । न चैवं पदान्तरवैयर्थ्यं विवक्षितान्वयविशेषस्यैकपदेनानुपस्थितत्वादत एव न वाक्यस्यानुवादकत्वमपि। न च परम्परया शब्दमूलत्वेन शब्दत्वमपि जनकविशेषादेव कार्यविशेषाच्छब्दस्य चाजनकत्वेन ततः प्रमायां विशेषानुपपत्तेरित्यन्विताभिधानमेव समीचीनमिति भावः ॥ ३७१ ॥

किं च केवलपदार्थे व्युत्पत्त्यसंभवादप्ययं पक्षोऽनुपपन्न इत्याह-

नासंसृष्टपदार्थबुद्धिपदयोः पूर्वापरत्वप्रमां

मुक्त्वा कारणकार्यतावगतये कश्चित्समर्थस्तयोः।

पौर्वापर्यमुदीक्ष्य हेतुफलतां सर्वत्र संगृह्णते

नो चेत्सर्वमसंगतं भवति वः सर्वव्यवस्थाहतेः॥३७२॥

नासंसृष्टेति। यदि प्रथमव्युत्पत्तिकाले आवापोद्वापाभ्यां पदविशेषव्युत्पत्तिकाले वा केवलपदार्थोपस्थितिः स्यात्तदायत्ततज्ज्ञानयोर्नियतपूर्वापरीभावेन कार्यकारणभावः कल्प्येत। नचैतदस्ति। यत्किञ्चिदन्वितस्यैवार्थस्य व्युत्पत्तिकालेऽवगमादतः केवलपदार्थज्ञानपदयोः पूर्वापरीभावाभावान्न तयोः कश्चित्कार्यकारणभावं ग्रहीष्यतीत्यर्थः। ननु पूर्वापरीभावज्ञानं विनापि कार्यकारणभावागमः किं न स्यान्न असम्भवादतिप्रसङ्गाच्चेत्याह—पौर्वापर्यमिति। हेतुफलतां कार्यकारणभावं नियतपूर्ववर्तित्वस्य कारणत्वान्नियतपश्चाद्भावित्वस्य कार्यत्वात्पौर्वापर्यज्ञानाभावे कारणत्वग्रह एव न सम्भवति। यदि पुनः पौर्वापर्यज्ञानमन्तरेणापि कार्यकारणभावग्रहं वाञ्छसि तदा कारणत्वादि तद्घटितं न स्यादिति वक्तव्यम्। तदा सर्वं सर्वस्य कारणमिति न कार्यकारणनियमः स्यादित्यर्थः॥ ३७२॥

ननु माभूत् कार्यकारणनियमः। कार्यकारणभावस्तु सिद्ध्यत्येवेत्याशङ्क्य कार्यविशेषार्थिनः कारणविशेषोपादानानुपपत्तेः। कार्यकारणतैव न सिद्ध्यतीत्यभिप्रेत्याह—

पूर्वापरान्वयबलेन हि कारणत्व

कार्यत्वसंगतिमिह प्रतियन्ति लोके।

**नो चेद्भवेदनियमो न च तत्र कर्त्तुं**
**कार्याणि कारणविशेषमुपाददीरन् ॥ ३७३ ॥**

पूर्वापरेति । तत्र लोकेऽनियमे सतीति शेषः । न चान्वयविशिष्टोपस्थितावपि केवलार्थस्योपस्थितिरस्तीति कार्यकारणभावग्रहः स्यादिति वाच्यम् । भवन्मते विशिष्टस्य केवलादन्यत्वेऽपि विशेषणीभूतसामान्यान्वयांशज्ञानस्यानन्यथासिद्धत्वेन व्यक्त्याकृतिज्ञानस्यैव तत्रापि पदकार्यत्वग्रहादन्यथा व्यक्त्यादीनां त्रयाणामुपस्थितावप्येकत्रैव शक्तिग्रहः स्यादिति भावः ॥ ३७३ ॥

एवं पदैः पदार्था अभिधीयन्ते । पदाभिहितैः पदार्थैः पदार्थानां संसर्गबोधो भवतीत्यभिहितान्वयवादिनामेकः पक्ष उपन्यस्य दूषितः । इदानीं संसर्गबोधस्य शाब्दत्वनिर्वाहाय पदार्थानामविद्यमानानां ज्ञानजनकत्वानुपपत्तेश्च पदान्येव पदार्थमवबोधयित्वा संसर्गमवबोधयन्तीति तेषामेव पक्षान्तरमनूद्यात्रापि पूर्वोक्तदूषणे समानेऽपि दूषणान्तरमाह—

**पदजातबुद्धिजनिता भवति**
**व्यक्तिषक्तबुद्धिरिति तावदिह ।**
**न विगानमस्ति भवतामपि चेद्-**
**व्यवधानकल्पनमकारणकम् ॥ ३७४ ॥**

पदजातेति । व्यतिषक्तं व्यतिषङ्गः संसर्गः इह लोके वेदे च पदार्थसंसर्गबुद्धिः पदजातबुद्धिजनिता वाक्यधीजन्येत्यत्र भवतामपि विगानं विप्रतिपत्तिर्नास्तीति चेत्पदानां पदार्थान्वयबोधजनने केवलपदार्थज्ञानेन व्यवधानकल्पनमकारणकं निर्निमित्तं निष्प्रयोजनमित्यर्थः ॥ ३७४ ॥

ननु पदजनितपदार्थबोधाभावे कथं पदैः संसर्गस्य वाक्यार्थस्य बोधः स्यात्पदार्थज्ञानस्यापि व्यापारतया तत्र कारणत्वादत एव न तस्य पदव्यवधायकत्वमपीत्याशङ्क्याह—

व्यतिषक्तबुद्धिजनकं सकलं
पदजातमित्यनुमतं यदि वः ।
व्यवधानकल्पनविडम्बनया
किमिहाञ्जसैव जनकं भवतु ॥ ३७५ ॥

व्यतिषक्तेति । विडम्बना निरर्थकव्यापारः पदज्ञानत्वेन तज्जन्यज्ञानं हि तस्य व्यापारः । न सम्बन्धिज्ञानत्वेन तस्यान्यत्रापि स्मृतौ कारणत्वात्पदज्ञानं च पदज्ञानत्वेन तदेव स्मारयति यत्पदशक्यं पदशक्तिश्च व्युत्पत्तिकालीनोपस्थित्यनुरोधेनान्वितविषयैवेत्युक्तं न केवलार्थे अतः केवलार्थज्ञानस्य पदव्यापारत्वाभावान्मध्ये तदाश्रयणे पदं व्यवधीयेतेत्यर्थः । अञ्जसा साक्षात्केवलपदार्थज्ञानं विनेत्यर्थः ॥ ३७५ ॥

ननु व्यवधानेनापि वाक्यं संसर्गं बोधयद् दृश्यते । यथा—अरुणादिवाक्ये तृतीयया आरुण्यादेः साक्षात्क्रयणसम्बन्धप्रतीतावपि तं विहायारुण्यादेः द्रव्यसम्बन्धबोधद्वारा क्रयणसंसर्गं बोधयतीत्याशङ्क्याह—

पारम्पर्यं ह्यगतिकगतिं कारणादाश्रयन्ते
नोत्सर्गेण स्फुरति विदुषां यत्र तत्र प्रनाडी ।
श्रुत्या सोमक्रयमनुगतः साधनत्वेन हित्वा
साक्षाद्भावं ह्यरुणिमगुणः प्रापदेनामशक्तेः ॥३७६॥

पारम्पर्यमिति । परम्परयान्वयबोधकत्वमगतिकगति न विद्यते गति-रुपपत्तिः प्रकारान्तरेण यस्य सोऽगतिकस्तस्य गतिरगतिकगतिः ताम-नन्यगतिकामिति यावत् । कारणात्साक्षादन्वयासम्भवान्निमित्ताद्विदुषा-मित्यनेन प्रणाड्याः प्रामाणिकत्वं दर्शयति । यत्रान्वयबोधस्य प्रणाडी-मध्ये व्यवधायकं किञ्चित्प्रमाणसिद्धं तत्रैव प्रकारान्तरेणान्वयबोधा-सम्भवादनन्यगतिकं पारम्पर्यमाश्रयन्ते न तूत्सर्गेण स्वभावेनेत्यर्थः । कुत्र तर्हि सा प्रमाणसिद्धा तत्राह — श्रुत्या सोमक्रयमित्यादिना । अरुणिमगुणः आरुण्यादिगुणः तृतीयाश्रुत्या सोमक्रयणं प्रति साक्षात्साधनत्वेना-नुगतः प्रापितः पश्चादशक्तेरयोग्यतया साक्षाद्भावं साक्षादन्वितत्वं विहायैनां प्रनाडीं प्रापदित्यर्थः । आरुण्यादिगुणस्य साक्षादन्वय-बोधस्य प्रमाणसिद्धत्वात्तद्व्यवधानेन द्रव्यादिद्वारान्वयबोधः । न चात्र केवलपदार्थज्ञाने प्रमाणमस्ति । अतो नात्र व्यवधानकल्प-नेत्यर्थः ॥ ३७६ ॥

एवं दूषितेऽप्यभिहितान्वयवादे पुनरपि पदार्थानां संसर्गबोध-जनकत्ववादी दृष्टान्तबलेन तत्साधयितुं दृष्टान्तमाह—

श्वेतिमानमभिपश्यतः पुरः

शृण्वतस्तदनु हेषितध्वनिम् ।

तद्वदत्र खुरमुद्गरस्वनं श्वेत-

रूपतुरगोऽटतीति धीः ॥ ३७७ ॥

श्वेतिमानमिति । श्वेतरूपमित्यर्थः । तदनुश्वेतरूपस्य दर्शनानन्तरं हेषितध्वनिं हेषिताख्यध्वनिं हेषेत्यश्वशब्दस्य संज्ञा खुरमुद्गरस्वनं खुरान्निष्पन्नशब्दविशेषमटति धावतीति धीर्भवतीदि शेषः । श्वेतोऽ-श्वोऽटतीतिधीर्यद्भवति तद्वदित्युत्तरेण सम्बन्धः । कस्य भवतीत्या-काङ्क्षायामुक्तं श्वेतिमानमित्यादि दूरस्थितो हि पुरुषश्चक्षुषा श्वेतं

रूपमात्रं किञ्चिद्द्रव्यगतमवलोक्य तदाश्रयविशेषमभिकाङ्क्षन् तत्र श्रूयमाणखुरध्वनिनास्य चतुष्पात्त्वं निर्धारयति । पुनस्तत्रापि विशेषजिज्ञासुर्हेषाध्वनिनाश्वत्वमपि तस्यानुमिनोति । तदनन्तरं तस्यश्वेतोऽश्वो धावतीति प्रतीतिरुपजायते । तत्र न प्रत्यक्षं प्रमाणं तस्य श्वेतरूपक्रियाविषयत्वेपि तदाश्रयद्रव्यविशेषविषयत्वाभावात् । नाप्यनुमानं तस्य चतुष्पात्त्वाश्वत्वविषयत्वेपि श्वेतोऽश्वो धावती-त्येवंरूपविशिष्टधीजनकत्वाभावान्नाप्यन्यत्किञ्चित्प्रमाणमस्त्यतः पदा-र्थानामेव परस्पराकाङ्क्षानुरोधेन तद्बोधजनकत्वमेषितव्यमिति भावः ॥ ३७७ ॥

दार्ष्टान्तिकमाह —

**तद्वदत्र पदजातबुद्धिभि**
**र्बोधिताखिलपदार्थहेतुकः ।**
**सर्वशब्दविषयार्थसंगतेः**
**प्रत्ययो भवति योग्यतादिभिः ॥ ३७८ ॥**

तद्वदिति । पदजातबुद्धिभिर्बोधिताखिलपदार्थहेतुकः—तत्तत्पद-बोधितपदार्थहेतुक इत्यर्थः । सर्वशब्दविषयार्थसङ्गतेः—सर्वेषामेक-स्मिन्वाक्ये प्रयुक्तशब्दानां विषया वाच्या येऽर्थास्तेषां सङ्गतेरिति कर्मणि षष्ठी पदार्थानां परस्परसम्बन्धविषयः प्रत्ययो भवती-त्यर्थः ॥ ३७८ ॥

दृष्टान्तं दूषयति—

**नैतत्क्लृप्तनिमित्ततोऽपि घटते संसर्गधीरीदृशी**
**श्वेतोऽश्वस्त्वरितोऽभिधावतितरामित्यादिकार्योत्थिता ।**

**कार्यं क्लृप्तनिबन्धनं यदि भवेन्नास्यापरं कारणं**
**कल्प्यं तेन पदार्थजातजनिता नैषा मतिर्लिङ्गजा॥३७९॥**

नैतदिति । क्लृप्तनिमित्ततः क्लृप्तप्रमाणादीदृक्पदार्थमेवाह—श्वेतोऽश्व इत्यादिना । श्वेतोश्वो धावतीत्येवंरूपा या बुद्धिरुत्थिता ईदृशी संसर्गबुद्धिः क्लृप्तनिमित्ततोऽपि घटत इति सम्बन्धः । श्वेतोऽश्वो धावतीतिबुद्धिर्न पदार्थप्रमाणजन्या क्लृप्तप्रामाण्यस्य मनसोऽनुमानस्य वा तत्र संभवात् चक्षुरादिप्रमाणेन श्वेतिमरूपादिषूपनिहितेषु मनसा श्वेतोश्वो धावतीति धीर्जायते । अथवा विमतोश्वो भवितुमर्हति हेषाध्वनिमत्त्वात् सम्मतवदित्यनुमानानन्तरं श्वेतोश्वो धावतीत्यविलम्बेन नानादेशसंयोगविभागवत्वात्तादृशपक्ष्यादिवदित्यनुमानेनैव तज्जन्यत इत्यर्थः । नन्वस्तु मानान्तरसत्त्वं न चैतावता पदार्थानामपि संसर्गबोधजनकत्वं विरुध्यते । न हि प्रत्यक्षदृष्टं करिणं चीत्कारेण नानुमिमते इत्याशङ्क्याह—कार्यमिति । क्लृप्तमनुमानादिनिबन्धनं कारणं यस्य संसर्गबोधाख्यकार्यस्य तत्तथा । अस्य संसर्गबोधाख्यकार्यस्यापरं क्लृप्तप्रमाणव्यतिरिक्तं प्रमाणान्तरं तथा च प्रत्यक्षदृष्टस्यान्यत्रानुमानगम्यत्वं सम्भवति उभयोरपि तयोः क्लृप्तप्रमाणत्वात् न वान्यत्पक्षे तदपि प्रमाणसम्प्लवानङ्गीकारात् । न चात्र पदार्थाख्यं प्रमाणान्तरं क्लृप्तमस्ति । नन्वयमपि शाब्द एवेति चेन्न । शब्दाभिहितपदार्थातिरिक्तपदार्थसंसर्गबोधस्याशाब्दत्वादतस्तदर्थं न प्रमाणान्तरं कल्पनीयमित्यर्थः । निगमयति—तेनेति । येन कार्यं क्लृप्तप्रमाणादेव भवितुमर्हति । पदार्थप्रामाण्यं चाक्लृप्तं तेनैषा श्वेतोश्वो धावतीतिबुद्धिर्न पदार्थजातजनिता किन्तु लिङ्गजेत्यर्थः ॥ ३७९ ॥

ननु यथा श्वेतोऽश्वो धावतीत्यत्र पदार्थोपस्थापकप्रत्यक्षादिमानेनैव संसर्गबुद्धिर्जायते तद्व्यतिरिक्तमानान्तरस्याभावादेवं

पदार्थोपस्थापकपदैः पदार्थबुद्धिद्वारेणैव संसर्गबोधो भवितुं युक्त इत्यभिहितान्वयवादिमतान्तरमपि दृष्टान्तत्वेनोक्तं पक्षान्तरदूषणानुवादपूर्वकं दूषयति—

पादार्थं न पृथक्प्रमाणमपरं नानाप्रमाणोद्भवं
नाप्येतत्फलमत्र पक्षयुगले कल्प्यं निमित्तान्तरम् ।
क्लृप्तं लिङ्गमतोऽपि निर्वहति चेत्संसर्गधीरीदृशी
पादार्थी न पृथक्प्रमा न च फलं नानाप्रमाणोद्भवम् ॥३८०॥

पादार्थमिति । किं पदार्थोपस्थापकप्रत्यक्षानुमानयोः पृथगेव संसर्गबुद्धिजनकत्वमुत मिलितयोः । नाद्यः । तयोः प्रत्येकं संसर्गबुद्धौ सामर्थ्याभावात् । नन्वनुमानस्य मनसो वा संसर्गबुद्धिजनकत्वमिदानीमेवोक्तमिति चेत्सत्यम् । तद्धि प्रत्यक्षान्तरमनुमानान्तरं च तथा सति नायं व्यवधानेन संसर्गबुद्धिजनने दृष्टान्तः । तयोः पदार्थगोचरत्वेन व्यवधानाभावादित्यभिप्रेत्य प्रमाणद्वयात्मकसमुदायस्य संसर्गबुद्धिजनकत्वमिति द्वितीयं पक्षं दूषयति—पादार्थमिति । पादार्थं पदार्थसम्बन्धिपदार्थजन्यमिति यावत् । प्रमाणं प्रमाणपदार्थजन्या प्रत्यक्षादिप्रमितिव्यतिरिक्ता काचित्प्रमाऽस्ति । पदार्थस्य प्रमाणत्वासिद्धेरित्युक्तानुवादः । अपरं प्रत्यक्षादिप्रमाणेभ्यः प्रत्येकमुत्पन्नज्ञानादन्यत् नानाप्रमाणोद्भवं प्रत्यक्षादिसमुदायजनितमेतत्फलं श्वेतोऽश्वो धावतीति ज्ञानम् । अथवा पदार्थप्रमाणसमुदायात्संसर्गधीरिति पक्षे किं समुदायः समुदायिव्यतिरिक्तः उताव्यतिरिक्तः । आद्येऽपि किमयं समुदायः पदार्थोपस्थितिद्वारा संसर्गं बोधयति । उत न अन्त्ये न व्यवधानसिद्धिरित्यभिप्रेत्याद्यं दूषयति—पादार्थमिति । पदार्थविषयमित्यर्थः । न पृथक्प्रमाणं प्रत्येकं प्रमाणं प्रत्येकप्रमाणादन्यत्समुदायात्मकं न प्रमाणमित्यर्थः । अत एव चैतत्फलं नानाप्रमाणसमुदा-

थोद्भवं नेत्याह—नानाप्रमाणेति। नापि द्वितीयः। नानाप्रमाणानामेकज्ञानजनकत्वासंभवात्प्रमाणातिरेकप्रसङ्गाच्चेत्यर्थः। ननु श्वेतोऽश्वो धावतीति ज्ञाने लिङ्गजन्यत्वस्याननुभूयमानस्यापि कल्पनात्पदार्थप्रमाणत्वस्य संसर्गबोधस्य प्रत्यक्षादिप्रमाणजन्यत्वस्य वा कल्पना किं न स्यादित्याशङ्कयोक्तं न प्रस्मर्त्तव्यमित्याह—अत्रेति। निमित्तान्तरं संसर्गबोधस्येति शेषः। धर्मधर्म्युभयकल्पनाद्वरं धर्ममात्रकल्पनमित्यर्थः। ननु क्लृप्तान्न निर्वाहश्चेदक्लृप्तमपि कल्प्यं यथा अपूर्वमित्याशङ्क्य क्लृप्तादनिर्वाहो नास्तीत्याह—अतोऽपीति। लिङ्गादपि चेत्यर्थः। चेच्छब्दोऽवधारणे निर्वहत्येवेत्यर्थः। अपिशब्दः प्रत्यक्षं सूचयति। नानाप्रमाणोद्भवमित्येतदनन्तरं कल्पनामिति पदमध्याहर्त्तव्यम्॥ ३८०॥

नन्वन्विताभिधानपक्षे पदानां पदाभिहितपदार्थान्वितस्वार्थाभिधायकत्वं वक्तव्यम्। वाक्यप्रयोगकाले पदार्थोपस्थापकमानान्तरस्य नियमेनानुपस्थानादनुपस्थितस्य चान्वयानुपपत्तेः तथा चान्योऽन्याश्रयः। पदोपस्थाप्यत्वमनन्वितत्वमपेक्षते। अन्वितत्वं च पदोपस्थाप्यत्वमिति ततोऽभिहितान्वयपक्ष एव समीचीन इत्याशङ्कामुपसंहारव्याजेन निराकरोति—

**नासंसृष्टमतो वदन्ति वचनान्याहुः क्रियासंगतं**
**योग्येनान्वितमेव केवलममून्याहुः स्वमर्थं यतः।**
**एवं सत्यपवर्जिताक्रियमलं निष्पन्नरूपं सदा**
**संसर्गादिविवर्जितं च वदितुं वस्तुस्वरूपं श्रुतिः॥३८१॥**

नासंसृष्टमिति। कार्यान्वितत्वपक्षे प्रयोजकद्वैविध्यं कार्यान्वयान्वितत्वपक्षे व्यर्थविशेषणता विशेषणविशेष्यतापत्तिश्च। योग्येतरान्वितत्वपक्षे च व्यर्थविशेषणत्वमभिहितान्वयवादिमते पदार्था-

नामक्लृप्तप्रमाणत्वकल्पना अविद्यमानानां तेषां जनकत्वानुपपत्ति-र्वाक्यार्थबोधस्याशब्दत्वं तत्रैव पक्षान्तरे पदात्सामान्येनान्वितार्थ-प्रतीतेराकस्मिकत्वं नैयत्येन व्युत्पत्तिकालेऽन्वितार्थावगमानुपपत्तिः विनिगमनाभावश्चेत्येवमादयो दोषाः सन्तीति यतोऽतस्तानि पदान्यसंसृष्टमनन्वितं न वदन्ति। नापि क्रिया संगतं योग्येतरेणा-न्वितं वाहुः। ततोऽमूनि पदानि केवलं योग्येतरत्वकार्याभ्याम-विशेषितमनन्वितं स्वीयमर्थमाहुरिति योजना। लोके हि विशिष्टार्थ-प्रत्यायनायैव शब्दः प्रयुज्यते न तु पदार्थमात्रप्रत्यायनाय पदात्के-वलपदार्थाप्रतीतेः। अन्वितस्यैव प्रतिपत्तेश्च। अत एव द्वारमित्यादौ पदात्प्रतीतान्वयसामान्यबोधपर्यवसानाय पिधेहिपदाध्याहारः क्रियते। नचान्यत्रान्योन्याश्रयः। यत्र हि संसर्गमर्यादयाऽन्वयबोध-स्तत्रैवान्वयप्रतियोगिन उपस्थितिरपेक्ष्यते यत्र तु शक्त्यान्वयोऽवबो-ध्यते न तत्र तस्य पूर्वोपस्थित्यपेक्षा। ननु शक्तिग्रहणाथमन्वयज्ञानापेक्षा तदर्थं च प्रतियोग्यपेक्षेति पूर्वोपस्थितिरपेक्ष्यत इति चेन्न। प्रत्यक्षादि-प्रमाणान्तरेणोपस्थितपदार्थान्वय एव शक्तिग्रहादतो नान्योन्याश्रय इत्यन्वितव्युत्पत्तिरेव समीचीनेति भावः। अन्वितमात्रे व्युत्पत्ति-समर्थनफलमाह—एवंसतीति। अन्वितमात्रे सामर्थ्ये सतीत्यर्थः। श्रुति-स्तत्त्वमादिवचनमपवर्जिता क्रियमपवर्जितक्रिया कार्यं यस्मिन् तत्तथा कार्यान्वयरहितं स्वप्रधानं निष्पन्नरूपं सिद्धस्वभावं संसर्गादि-विवर्जितं भेदगर्भविशेषणविशेष्यभावादिरहितं वस्तुस्वरूपं ब्रह्मा-त्मैक्यं वदितुमलमिति सम्बन्धः॥ ३८१॥

नन्वभिहितान्वयवादोपि तत्र तत्र मूलग्रन्थेषु समर्थितः स कथमत्र निराक्रियत इत्याशङ्क्य नास्माभिः स निराक्रियते किन्तु कार्यान्वितवादिनं प्रत्यन्वितमात्रमेवालम्, अभिहितान्वयापेक्षया चान्विताभिधाने न्यायानुगतिरप्यस्तीत्येतावन्मात्रं प्रदर्शितमिहेत्य-भिप्रेत्याह—

**अभिहितघटनाऽथ वाऽन्वितानाम-**
**मभिहितिरस्त्वथ वा न पक्षपातः ।**
**क्वचिदपि समयेऽस्ति नः कदाचि-**
**द्बहुघटनात्मकवस्तुनिष्ठवाक्ये ॥ ३८२ ॥**

अभिहितघटनेति । अभिहितानां संसर्ग इत्यर्थः । अथवेत्यनास्थायामन्वितानामभिहितिरन्विताभिधानं वाशब्दसूचितामनास्थामेवाह न पक्षपातः । नैकतरस्मिन्नभिरुचिः क्वचिदपि समयेऽभिहितान्वयेऽन्विताभिधाने वा पक्षद्वयानास्थायां निमित्तमाह—बहुघटनात्मकवस्तुनिष्ठवाक्य इति । अभिहितघटनान्वितानामभिहितिरित्यनुषङ्गः । बहुघटना बहूनां पदार्थानां संसर्गस्तदात्मकं तत्स्वरूपं यद्वस्तु तन्निष्ठं तद्बोधकं यद्वाक्यं तस्मिन्नित्यर्थः । संसर्गपरे हि वाक्येऽन्विताभिधानमभिहितान्वयो वाऽपेक्ष्यते । न तत्त्वमादिवाक्ये तयोरसंभवादित्यर्थः ॥३८२॥

ननु ब्रह्मवाक्ये कथं पक्षद्वयासंभवः अन्यतरपक्षस्यावश्यकत्वात्तत्राह—

**अभिहितघटना न चोपपन्ना**
**परदृशि नाभिहितिस्तथान्वितानाम् ।**
**अनधिकविकलार्थगोचरत्वा-**
**न्न तदुभयं श्रुतिमस्तके पदानाम् ॥ ३८३ ॥**

अभिहितघटना न चेति । परदृशि परमात्मनि विषयेण विषयि तत्त्वमादिवाक्यं लक्ष्यते । तत्त्वमादिवाक्येऽन्विताभिधानमभिहितान्वयो वा न संभवतीत्यर्थः । कुतस्तदसंभवस्तत्राह—अनधिकेति । अधिकमतिरिक्तं विकलं न्यूनं पदद्वयस्यैकपदार्थमात्रनिष्ठत्वात्तदुभयमन्विताभिधानमभिहितान्वयो वा श्रुतिमस्तकस्थपदानां न संभवति ।

तयोः पदद्वयार्थभेदापेक्षितत्त्वादित्यर्थः । एतच्च लक्षणादशायाम् । मुख्यार्थान्वयदशायां त्वन्वयप्रतियोगिनः पदार्थद्वयस्य सत्त्वादुक्तान्यतरपक्षाङ्गीकारे न कश्चिदपि दोष इति द्रष्टव्यम ॥ ३८३ ॥

ननु यदा तत्त्वमादिवाक्यैर्वाच्यार्थान्वयबोधो जायते तदैतदन्यतरपक्षे कश्चित्प्रकारविशेषोऽस्ति किमित्याशङ्क्य वस्तुनो न कश्चिद्विशेषस्तथापि पदार्थबोधस्य पदत्वेन पदजन्यत्वतदभावावङ्गीकृत्य तत्कृतं विशेषं वक्तुं पदार्थबोधे विशेषमाह—

अभिहितघटना यदा तदानीं
स्मृतिसमबुद्धियुगं पदे विधत्तः ।
परदृशि पुनरन्विताभिधाने
पदयुगलात्स्मृतियुग्ममेव पूर्वम् ॥ ३८४॥

अभिहितघटना यदेति । स्मृतिसमबुद्धियुगं स्मृतितुल्यं पदार्थविषयं द्वयमभिहितान्वयवादिपक्षे पदार्थज्ञानस्य पदत्वेन पदजन्यत्वं वक्तव्यमन्यथा वाक्यार्थज्ञानस्य परम्परयापि शब्दमूलत्वाभावेनाशाब्दत्वप्रसङ्गादतो न स्मृतित्वं किन्त्वधिगतार्थविषयत्वात्स्मृतिसममेवेत्यर्थः । पूर्वं-वाक्यार्थज्ञानात्पूर्वम्। अन्विताभिधानपक्षे तु पदार्थज्ञानस्य सम्बन्धित्वेन पदजन्यतया स्मृतित्वमेव पदत्वेनैव पदस्य तज्जनकत्वे पदस्य विरम्य व्यापारप्रसङ्गाद्वाक्यार्थबोधेपि तस्य तेनैवाकारेण जनकत्वात्समूहितपदानामेव वाक्यत्वादतो न स्मृतिसमत्वमित्यर्थः ॥ ३८४ ॥

एवं पदार्थबोधे विशेषमुक्त्वा वाक्यार्थबोधोत्पत्तिप्रकारमाह—

स्मृतिसमपदजन्यबुद्धियुग्मा-
त्परदृशि मोहनिवर्त्तनं परेषाम् ।

परदृशि पदजन्मस्मृतिद्वये स्यात्पद-

युगलात्प्रमितेः समुद्भवो नः ॥ ३८५ ॥

स्मृतिसमेति । ननु कथं पक्षद्वयेपि साम्यमभिहितान्वयवादेऽविद्यमानानां पदार्थानां वाक्यार्थज्ञानजनकत्वायोगादित्याशङ्क्य तज्ज्ञानस्यैव जनकत्वान्न दोष इति वाह—स्मृतिसमेति । पदाज्जन्म यस्या बुद्धेः सा पदजन्मबुद्धिस्तस्या युग्मं स्मृतिसमं च तत्पजन्मबुद्धियुग्मं तस्मादभिहितान्वयवादिपक्षे पदत्वेन पदजन्यपदार्थद्वयज्ञानात्परम्परयाऽविद्यानिवृत्तिक्षमं वाक्यार्थज्ञानं भवति । न पदात्तस्य विरम्य व्यापारायोगात् । अन्विताभिधानपक्षे तु सम्बन्धित्वेन पदाभ्यां पदार्थद्वयस्मरणे जाते ताभ्यामेव पदाभ्यां परम्परया अविद्यानिवृत्तिक्षमं वाक्यार्थज्ञानं भवतीत्यर्थः । परेषां न इति च विशेषणद्वयेन स्वस्याभिहितान्वयवादे न रुचिः किन्त्वन्विताभिधानवाद इति दर्शितम् । ३८५ ॥

एवं कार्यान्विते व्युत्पत्तिं निराकृत्यान्वितमात्रे व्युत्पत्तिसाधनेन प्रवृत्तिनिवृत्तिशून्येपि ब्रह्मणि वेदान्तानां प्रामाण्यमविचलमिति दर्शितमिदानीं भट्टाभिमतभावनावाक्यार्थनिराकरणेनापि तदेवप्रामाण्यं दृढीकर्तुं तन्मतमाह—

औदासीन्यप्रच्युतिप्रापकेऽर्थे

लिङ्लोडादेर्लोकतो ज्ञातशक्तेः ।

पुंसो वेदे प्रेरकत्वेन कल्प्या

लिङ्लोडादेर्भावनैवान्यतन्त्रे ॥ ३८६ ॥

औदासीन्येति । लोकतः लौकिकप्रत्यक्षादिप्रमाणात् लिङ्लोडादेः औदासीन्यप्रच्युतिप्रापके औदासीन्यप्रच्युतिः प्रवृत्तिस्तत्प्रापकस्तद्धे-

तुप्रवर्त्तक इति यावत् । तादृशेऽर्थे आज्ञादिरूपे ज्ञातशक्तेः ज्ञाता शक्तिर्येन पुंसा स तथोक्तः। पुंस इति कर्मणि षष्ठी। एतादृशं पुमांसं प्रतीत्यर्थः। अन्यतन्त्रेऽपौरुषेये वेदे प्रेरकत्वेन प्रवर्त्तकत्वेन लिङ्लोडादेर्भावना लिङादिशब्दव्यापारात्मकशाब्दभावनैव कल्प्येति सम्बन्धः । इत्थं किल भाट्टानां प्रक्रिया लोके हि लिङादिपदश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिदर्शनात् सिद्धवाक्यश्रवणे च तददर्शनादन्वयव्यतिरेकाभ्यां लिङादिपदं प्रवर्त्तकपरमिति व्युत्पित्सुना निश्चीयते । प्रवर्त्तकपरत्वे च सलिङादेर्वेदे भावनैव प्रवर्त्तकत्वेन कल्प्या । लौकिकप्रवर्त्तकासम्भवादिति भावः ॥ ३८६ ॥

ननु किं लौकिकप्रवर्त्तकं यदसम्भवेन वेदभावनैव प्रवर्त्तकत्वेन कल्प्या स्यात्तदसम्भवात्कथं तत्राह—

**आज्ञाद्यर्थः प्रेरकः पौरुषेये**
**लिङ्लोडादेर्भावना वेदवाक्ये ।**
**पुंसोऽभावात्तद्गताज्ञाद्यभावा-**
**त्पुंसम्बन्धात्प्रेरकास्ते हि वाक्ये ॥ ३८७ ॥**

आज्ञाद्यर्थइति । पौरुषेये पुरुषतन्त्रे लौकिकवाक्ये आज्ञाद्यर्थः आज्ञानुज्ञादिरूपोऽर्थः प्रेरकः न भावना तत्र प्रमाणाभावात्प्रवृत्तेरन्यथाप्युपपत्तेर्वेदवाक्ये तु पुंसो वक्तुरभावेन तद्गताज्ञाद्यभावाल्लिङ्लोडादेर्भावनैव प्रेरिका कल्पनीयेत्यर्थः । ननु लोकानुसारेण वेदेऽप्याज्ञादिरेव प्रवर्त्तको वक्तव्य इत्याशङ्क्याह—पुंसंबन्धादिति । ते आज्ञादयः । हि यस्माद्वाक्ये पुंसंबन्धादेव प्रेरका अत इति सम्बन्धः । वक्तृपुरुषसम्बन्धो यस्मिन्वाक्ये विद्यते तत्रैवाज्ञादिः प्रवर्त्तको भवति तत्र तत्सत्वान्न हि वेदे पुरुषसम्बन्धोऽस्ति अत आज्ञादेरभावादेव न लोकानुसारेण स प्रवर्त्तक इत्यर्थः ॥ ३८७ ॥

ननु वेदे भावनायाः प्रवर्त्तकत्वे तस्या भावकभाव्यस्वरूपकरणेतिकर्त्तव्यसापेक्षत्वाच्छब्दभावनायाः को भावकः किं भाव्यं किं वा तत्स्वरूपं के वा करणेतिकर्त्तव्ये इत्याकाङ्क्षायामादावाद्यत्रयमाह—

लिङ्लोडादिर्भावकस्तत्र भाव्या-
नुष्ठेयेऽर्थे पुंस्प्रवृत्तिः प्रसिद्धा ।
लिङ्लोडादेः पुंस्प्रवृत्त्यंशनिष्ठो
व्यापारो यस्तं विदुर्भावनेति ॥ ३८८ ॥

लिङ्लोडादिरिति । आदिपदेन तव्यादेर्ग्रहः । तत्र भावकादिषु मध्ये शब्दभावनाया लिङ्लोडादिर्भावक उत्पादकः, भाव्या निष्पाद्या अनुष्ठेये कर्त्तुं योग्येऽर्थे यागादौ विषये पुंस्प्रवृत्तिः पुरुषप्रयत्नलक्षणः कर्तृव्यापारः यागादिधात्वर्थनिष्पत्त्यनुकूलः कर्तृव्यापाराख्यातार्थभावनाशब्दभावनाभाव्येत्यर्थः । पुंस्प्रवृत्त्यंशनिष्ठः अर्थभावनाख्यपुरुषप्रवृत्त्यनुकूलो यो लिङ्लोडादेर्व्यापारः प्रेरणात्मकस्तं शब्दभावनेति विदुरित्यर्थः । लिङादिश्रवणानन्तरं नियमेन पुरुषस्य प्रवृत्तेः पुरुषप्रवृत्त्यनुकूलप्रेरणाख्यो लिङादिशब्दव्यापारः शब्दभावना तज्ज्ञानादेव पुरुषप्रवृत्तेस्तस्याश्चार्थभावना भाव्या भवति । तस्यास्ततो निष्पत्तिदर्शनात्तद्भावकश्च लिङादिस्तस्या तद्व्यापारत्वाद्व्यापारस्य व्यापारिजन्यत्वादिति भावः ॥ ३८८ ॥

इदानीं शब्दभावनायाः करणेतिकर्त्तव्ये दर्शयति—

करणमिह लिङादेर्ज्ञानमेवाङ्गभागः
पुनरभिरुचिहेतुर्दृश्यते च प्रशंसा ।
विधिरयमिह तन्त्रे जैमिनीये न कार्यं
न च भवति विधिर्नः श्रेयसो हेतुरर्थः ॥ ३८९ ॥

करणमिति । इह तेषु मध्ये लिङादेर्ज्ञानं लिङादिव्यापारात्मकशब्द-भावनाज्ञानं शब्दभावनाकरणमभिरुचिहेतुः पुरुषेच्छोत्पादिका प्रशंसा-स्तुतिनिन्दार्थवादार्पितं प्रशस्तमिदं निकृष्टमिदं च ज्ञानं प्रेरणाद्यनुकूल-त्वादङ्गमित्यर्थः । स्वज्ञानकरणिका अर्थवादार्पितस्तुतिनिन्देतिकर्त्तव्य-ताका शब्दभावनेत्यर्थः । न च स्वज्ञानकरणकत्वमनुपपन्नं ततः पूर्वमेव स्वस्य सिद्धत्वादिति वाच्यम् । केवलस्य स्वस्य तदनुपपत्तावपि स्वभाव्यार्थभावनाशिरस्कस्य स्वस्य स्वज्ञानानन्तरभावितया तत्करणकत्वोपपत्तेः । सर्वत्र भाव्यद्वारेण करणस्य भावनान्वयाद्भा-व्यनिष्पादकस्यैव भावनाकरणत्वादिति भावः । एवं भावनास्वरूपं सपरिकरं दर्शयित्वा सैव लिङाद्यर्थ इत्याह—विधिरिति । विधीयते बोध्यत इति लिङाद्यर्थो विधिः अयं शब्दभावनात्मा शब्दव्यापार-स्तन्त्रे शास्त्रे जैमिनीये जैमिनीयमतानुसार्याचार्यमते श्रेयोहेतुः श्रेयः साधनत्वम् ॥ ३८९ ॥

ननु शब्दभावनाया लिङाद्यर्थत्वे कथं तया यागादीनामन्वयः न हि यागादेः शब्दभावनां प्रति भाव्यत्वेन करणत्वेनेतिकर्त्तव्यत्वेन वान्वयः सम्भवति न वा प्रत्ययार्थं प्रधानं विनान्यत्र यागादेरन्वयो युक्त इत्याशङ्क्याह—

विधिरिह गुणभूतः प्रत्ययार्थोऽपि नित्यं
भवति च पुरुषोत्था भावनाऽस्य प्रधानम् ।
भवति दशलकारप्रत्ययैः साभिधेया
विधिविहितलकारैर्भावना शब्दहेतुः ॥ ३९० ॥

विधिरिति । इहास्मिन्दर्शने विधिः शब्दभावना लिङादिप्रत्यया-र्थोऽपि नित्यं गुणभूतः उपसर्जन एव प्रेरकत्वादित्यर्थः । किं तर्हि प्रधानमिति तदाह—भवति चेति । पुरुषोत्था पुरुषजन्या पुरुषार्थ

इतिपाठे पुरुषार्थः स्वर्गादिभाव्यकत्वात्स पुरुषार्थः अस्य शब्दभावनात्मकविधेरर्थभावनायाः साध्यतया पुरुषार्थसाधनतया पुरुषार्थत्वाच्चार्थतः सैव प्रधानमतस्तयैव यागादेरन्वय इत्यर्थः । प्रत्ययार्थस्यैव प्राधान्यमिति निर्बन्धेपि तदप्यर्थभावनाया अस्तीत्याह—भवतीति । अथवा नन्वर्थभावनायाः प्रकृतिप्रत्ययाभ्यामनुपस्थिततया कथमन्येषामन्वयस्तत्रेत्यत आह—भवतीति । लकारप्रत्ययो लिङादिप्रत्ययो लडादिभिर्दशभिः प्रत्ययैः सार्थभावनाऽभिधेयेत्यर्थः तदुक्तं "भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचर" इति । तर्हि शब्दभावनाया लिङाद्यर्थत्वं गतमिति तत्राह—विधिविहितेति । विधिः प्रवर्त्तकस्तस्मिन्विहितलकारैर्लिङादिलकारैः शब्दजन्या भावना शब्दभावनाऽभिधेयेति सम्बन्धः । यद्यपि लिङादिराख्यातो भवति तथापि तस्याख्यातत्वाकारो लिङ्त्वाकारश्चेत्याकारद्वयसत्वादाख्यातत्वाकारेणार्थभावना वाचकत्वेपि लिङ्त्वाद्याकारेण शब्दभावनावाचकत्वमपि न विरुध्यत इति न शब्दभावनायाः लिङाद्यर्थत्वभङ्गः । अतोऽर्थभावनाया अपि प्रत्ययोपस्थापितत्वाद्यागादेस्तयैवान्वय इति भावः ॥ ३९० ॥

इदानीमर्थभावनाया अपि भावनात्वेन भाव्यादिनिरूपकत्वात्तत्स्वरूपं दर्शयति—

भवति च पुरुषार्थकर्मिकेयं
पुरुषनिमित्तकभावना न तद्वत् ।
भवति तु विधिशब्दकर्तृकान्या
न हि निरवद्यपुमर्थता प्रवृत्तेः ॥ ३९१ ॥

भवति च पुरुषार्थकर्मिकेति । पुरुषार्थः स्वर्गः कर्म भाव्यं यस्याः सा तथा चकारात्फलशिरस्कामर्थभावनां प्रति प्रकृत्युपात्तो यागः करणं प्रकरणपठितप्रयाजादिश्चेतिकर्त्तव्यमित्येतत्सर्वं दर्शयति ।

पुरुषनिमित्तकभावना पुरुषप्रयत्नलक्षणार्थभावना धात्वर्थकरणिका स्वर्गादिभाव्या प्रयाजादीतिकर्त्तव्या च भवतीत्यर्थः। नन्वर्थभावनेव शब्दभावनापि स्वर्गादिभाव्या किं न स्याद् व्यापारत्वाविशेषादित्याशङ्क्य किं साक्षात्स्वर्गादिभाव्यनिष्ठा किं परम्परया नाद्य इत्याह—न तद्वदिति। विधिशब्दकर्तृकान्या भावना लिङादिशब्दव्यापारात्मिका शब्दभावना तु तद्वन्न भवति। पुरुषप्रवृत्तिलक्षणार्थभावनेव स्वर्गादिभाव्या न भवति। चेतनव्यापारवदचेतनव्यापारस्यापि साक्षात्पुरुषार्थविषयत्वनियमाभावादित्यर्थः। हेत्वन्तरमप्याह—न हि निरवद्येति। हि यस्माच्छब्दभावना भाव्यत्वेनान्वयव्यतिरेकावधृतप्रवृत्तेर्निरवद्यपुमर्थता स्वर्गात्मा न तत इत्यर्थः। यद्यपि श्रेयःसाधनत्वेन सापि श्रेय एव तथापि न साऽनौपाधिकप्रीतिविषयः किन्तु स्वर्ग इत्यभिप्रेत्योक्तम्-निरवद्येति। ततश्चान्वयव्यतिरेकाभ्यां प्रवृत्तेरेव शब्दभावनाभाव्यत्वावधारणात् स्वर्गस्य तद्भाव्यत्वं साक्षाच्छब्दभावनाभाव्यत्वे वा यागाद्यनुष्ठानविलोपप्रसङ्गाच्च। तन्न साक्षात्स्वर्गादिभाव्या सेति भावः॥३९१॥

नन्वर्थभावनाया अपि पुरुषार्थस्वर्गादिभाव्यकत्वमनुपपन्नं स्वर्गकामो यजेतेत्यत्र ह्याख्याताभिधेयार्थभावनया सह प्रकृत्यर्थो यागः समानपदोपात्तस्तत्र भावनायां भाव्याकाङ्क्षिण्यां समानपदोपात्तो याग एव भाव्यत्वेन सम्बध्यते न तु भिन्नपदोपात्तस्वर्गस्तस्य विलम्बितप्रतिपत्तित्वेन तत्पूर्वमेव भावनायाः भाव्यान्तरेणावरुद्धत्वात् स्वर्गपदस्य श्रेयःसाधनवाच्यत्वेन सिद्धोपदेशस्य भाव्ययागोपदेशशेषत्वादित्याशङ्क्याह—

**अभिमतपशुपुत्रवृष्टिनाक-**
**प्रभृतिकभाव्यगता हि भावनेयम्।**
**अनभिमतसुदुष्करातिदुःखां**
**नयति तु भाव्यपदं प्रवृत्तिमन्या॥ ३९२॥**

अभिमतेति । नाकः स्वर्गः इयं भावना अर्थभावना । यद्यपि प्रकृतिप्रत्ययोरेकपदत्वेन प्रत्ययार्थभावनायाः प्रकृत्यर्थो यागः समानपदोपात्तो भवति तथापि लिङादिप्रत्ययस्तिङ्त्वाकारेणार्थभावनाभिधाय्यपि लिङ्त्वाकारेण शब्दभावनाभिधानद्वारा पुरुषं प्रवर्त्तयति च व्यापारतद्धेतोरभेदात् पुरुषप्रवर्त्तने च पुरुषेप्सितफलं विना च कुण्ठितशक्तिर्लिङादिः पुमर्थमेवार्थभावनाभाव्यत्वेनोपादत्त इति प्रत्ययार्थाकाङ्क्षितत्वाद्भिन्नपदोपात्तोपि स्वर्ग एव भाव्यत्वेन सम्बध्यते न तु यागः क्लेशात्मकस्य तस्य भाव्याकाङ्क्षापरिपूरकत्वादत एव न पूर्वं भाव्यन्तरावरोधोपि । न च स्वर्गपदं श्रेयःसाधनपरं निरतिशयप्रीतेरेव स्वर्गत्वादतः स्वर्गकामपदवैयर्थ्यपरिहाराय च स्वर्ग एव भाव्यत्वेन सम्बध्यत इत्यर्थः । ननु शब्दभावनाया अपि परम्परया स्वर्गादिभाव्यनिष्ठत्वान्नार्थभावना तद्भाव्येति द्वितीयं निराकर्त्तुमर्थभावनायास्तद्भाव्यत्वानङ्गीकारे परम्परयापि स्वर्गादिभाव्यत्वं न स्यात् फलफलस्यैव परम्परया फलत्वादित्यभिप्रेत्यार्थभावनैव तद्भाव्येत्याह—अनभिमतेति । अन्या शब्दभावना त्वनभिमतसुदुष्करातिदुःखां प्रवृत्तिं भाव्यपदं नयतीति सम्बन्धः । अनभिमता चासौ सुदुष्करा चातिदुःखा चेति । तथोक्ता स्वतो ऽपुरुषार्थत्वादनभिमता बहुवित्तव्ययायाससाध्यत्वात्सुदुष्करा बहुलदुःखतरदुःखसाध्यत्वादतिदुःखेत्यर्थः । भाव्यपदं भाव्यत्वमिति ॥ ३९२ ॥

नन्वभिहितान्वयवादिमते भावनैव लिङाद्यर्थो यदि भवेत्तदा प्रत्ययार्थो भावनापि स्वर्गादिवत्केवलपदात्प्रतीयेत न च सा तथा प्रतीयते तस्माद्धात्वर्थव्यतिरेकेण भावनैव नास्तीत्यत आह—

प्रत्ययप्रकृतिशब्दतो बहि-

र्विद्यतेऽभिहितसंगतिश्च नः ।

प्रत्ययप्रकृतिशब्दयोः पुन-

र्नित्यमन्वितधियो निमित्तता ॥ ३९३ ॥

प्रत्ययेति । न प्रत्ययः प्रकृतिशब्दतः प्रत्ययात्मकशब्दात् प्रकृत्यात्मकशब्दाच्च बहिरन्यत्राभिहितसंगतिरहितान्वयः प्रत्ययप्रकृतिशब्दयोः पुनर्लिङादिप्रत्ययथज्यादिप्रकृत्योस्तु नित्यमन्वितधियो निमित्तता परस्परार्थान्वितस्वार्थबोधकत्वमेव प्रकृतिप्रत्ययव्यतिरिक्तशब्दयोरेव स्वातन्त्र्येण भिन्नत्वात्स्वस्वार्थाभिधानाच्चाभिहितान्वयबोधो भवति । प्रकृतिप्रत्ययोस्त्वेकपदत्वात्प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकतानियमस्य प्रकृतेश्च प्रत्ययार्थान्वितस्वार्थबोधकतानियमस्य व्युत्पत्तिसिद्धत्वाच्च । प्रकृतिप्रत्ययोरन्विताभिधायित्वान्न भावनायाः केवलाया अप्रतीत्याभावो वर्णयितुं शक्यत इति भावः ॥ ३९३ ॥

नन्वर्थभावनायाः कथमाकारान्तरेण लिङादिवाच्यत्वं कल्प्यते । क्रियारूपायास्तस्याः क्रियावाचिधातुवाच्यतैव किं न स्यादित्याशङ्क्याह—

भावनाद्वयमतोऽवबोध्यते

धातुवाच्यघटितं लिङादिभिः ।

प्रत्ययार्थगुणवस्तुवाचिनो

धातवः प्रकृतयो हि धातवः ॥ ३९४ ॥

भावनाद्वयमिति । यतः प्रकृतिप्रत्ययोरन्विताभिधायित्वनियमः ततो धात्वर्थघटितं भावनाद्वयं द्वितीयार्थभावना लिङ्त्वाकारेण लिङादिभिर्बोध्यते न तु धातुना । तत्र हेतुः प्रत्ययार्थेति । धातवः प्रत्ययार्थगुणवस्तुवचिनः प्रत्ययस्य योऽर्थस्तं प्रति गुणभूतं यद्वस्तु तद्वाचिनः न तु प्रधानवाचिनः प्रत्ययार्थस्यैव प्रधानत्वादत्र हेतुमाह-

प्रकृतयो हि धातव इति । हि यतो धातवः प्रकृतयस्तत इत्यर्थः । प्रकृतेः प्रत्ययार्थगुणार्थकत्वं प्रसिद्धमित्यर्थः । अत्रैते संग्रहश्लोकाः—

भावना प्रेरणात्मा च शाब्दी सा व्यापृतिर्लिङः ।
तस्याः फलशिरस्कायाः स्वज्ञानं करणं भवेत् ॥
तस्यास्तु भाव्यं यत्नात्मा भावनाभावकोपि लिङ् ।
इतिकर्त्तव्यमेतस्याः प्रशस्तमितिधीर्भवेत् ॥
तस्यास्तु वाचको लिङ्लोट्तव्यादिर्विधिरूपतः ।
अथार्थभावना कर्तृव्यापारो यत्न एव सः ॥
भावार्थः करणं तस्यां भाव्यं स्वर्गादिरिष्यते ।
प्रयाजादीतिकर्त्तव्यं कर्त्ता भावक उच्यते ॥
लिङादिस्तस्य लिङ्त्वेन वाचकः सापि नित्यवत् ।
धात्वर्थेनान्विता वाच्या सैव वाक्यार्थ इष्यत इति ॥ ३९४ ॥

ननु लिङादियुक्तवाक्यानां भावनापरत्वेपि न तद्विधुरवाक्यानां तत्परत्वमित्याशङ्क्य भूतभव्यन्यायेन तान्यपि भावनापराण्येवेति वदन्पूर्वपक्षमुपसंहरति—

**भव्याय भूतमुपदिश्यत इत्यवोच-**
**न्पूज्यास्ततः सकलमेव तु वेदशास्त्रम् ।**
**कार्यप्रधानमिति निश्चिनुमोऽस्मदीये**
**तन्त्रे च कार्यमुदितः पुरुषप्रयत्नः ॥ ३९५ ॥**

भव्यायेति । यतो भूतं भव्यार्थमुपदिश्यते । ततः सकलमेव तु वेदशास्त्रं भव्यप्रधानमिति निश्चिनुम इति सम्बन्धः । भव्यस्य पराभिमतनियोगात्मत्वं निराकरोति—अस्मदीय इत्यादिना । पुरुषप्रयत्नोऽर्थभावनैव कार्यं भव्यमिति वार्तिककारीयाणां मतेऽभिधीयत इत्यर्थः ।

यद्यपि प्रागेवेयं शङ्का निराकृता तथापि मतभेदेन पुनरुत्थानमिति द्रष्टव्यम् ॥ ३६५ ॥

अत्रेदं वक्तव्यं कोऽयं शब्दभावनालक्षणः शब्दव्यापारः किं परिस्पदात्मा किं वा परिणामरूपः। नाद्यः। शब्दस्य गुणस्य तदनुपपत्तेः। द्रव्यत्वेपि विभुतया तस्य तदनुपपत्तेः। न द्वितीयः। निरवयवस्य तस्य तदनुपपत्तेः। ननु निरवयस्य द्रव्यपरिणामानुपपत्तावपि व्यापारपरिणामोऽनुपपन्न इति चेन्न। व्यापारस्य रूपादिष्वन्यतमत्वाभावेनागुणत्वात्। किं च न प्रेरणा शब्दभावना तथा हि-कस्येयं प्रेरणेति वक्तव्यम्। न तावद्वक्तुः प्रेरणा वेदे तदभावात्। नापि श्रोतुस्तस्य प्रेर्यस्य प्रेरणाभावात् शब्दधर्मत्वानुपपत्तेश्च। ननु वेदे शब्दधर्म एव प्रेरणेति चेन्न। तस्याज्ञादिरूपस्य पुरुषधर्मत्वादाज्ञादिव्यतिरिक्तप्रेरणाऽभावाच्च। ननु लोके आज्ञादय एव प्रेरणा न शब्दव्यापारः वेदे त्वपौरुषेये आज्ञादीनामभावादन्यैव प्रेरणा वक्तव्या। अन्यथा वैदिकप्रवृत्त्यनुपपत्तेरतः शब्दव्यापार एव कश्चित्प्रवृत्त्यनुकूलप्रेरणा वेद इति चेदेवमपि न लोकवेदयोः प्रमाणव्यापारवैरूप्यप्रसङ्गादित्याह—

अभिदधाति करोति च लिङ्पदं
श्रुतिवचःसु निजामपि भावनाम्।
न च करोति न वक्ति च तां पुन—
र्नरवचःस्विति दुःशकमुच्यते ॥ ३६६ ॥

अभिदधातीति। तां शब्दभावनां नरवचस्सु पौरुषेयवाक्येषु लिङ्पदमत्रानुकृष्य योजनीयं दुःशकं दुर्घटं लोकानुरोधेनैव हि वेदस्यापि सामर्थ्यं कल्पनीयं लोके च न शब्दभावन न वा लिङादेस्तद्बोधकत्वं

तत्कारकत्वं वा स्वीक्रियते । आज्ञादेरेव तत्र तदर्थत्वस्वीकारादतो वेदेपि सा न स्वीकर्त्तव्या । नचैवं प्रवृत्त्यनुपपत्तिस्तस्या अन्यथासिद्धत्वात्तत्स्वीकारे वा वेदस्य तद्बोधकत्वमेव न वक्तुमुचितं लोके लिङादेः स्वार्थबोधकत्वस्यैव कल्पनात् । नन्वस्तु लोकेपि लिङादेर्भावनैवार्थः आज्ञादेरननुगतस्यानुगतप्रवृत्तिकारणत्वानुपपत्तेरिति चेन्न । वाक्यार्थानन्वयिनस्तस्य पदार्थत्वानुपपत्तेः । शब्दभावनायाः प्रवर्त्तकत्वानुपपत्तेश्च । किं शब्दभावना हितसाधनत्वबोधमपेक्ष्य प्रवर्त्तयति किं वा तमनपेक्ष्य । आद्ये स एव प्रवर्त्तकोऽस्तु किमनया । किं च हितसाधनत्वबोधोपि किं मानान्तरेण जायते । उत शब्देन । नाद्यः । तस्य लोके सम्भवेपि वेदेऽसम्भवात् । न द्वितीयः । स हि न तावत्पदान्तरेण जायते । स्वर्गकामादिपदस्य तद्बोधनसामर्थ्याभावात्ततो लिङ्पदेनैव तद्बोधो वक्तव्य इति श्रेयः साधनत्वमेव तदर्थोस्तु । एकस्मिन्प्रयोगे एकस्य नियमेनार्थद्वयपरत्वानुपपत्तेः । ननु शब्दभावना स्वयमेव प्रवर्त्तयतीति चेन्न । राजादिवत्प्रसह्य प्रवर्त्तयतो वेदस्य पुरुषार्थपर्यवसानेनाप्रामाण्यप्रसङ्गात् । किं च स्वव्यापारस्य स्ववाच्यत्वे स्वस्य स्वात्मनि वृत्तिप्रसङ्गः तदिदमुक्तं निजामपीति । प्रमाणानां चात्र कारकत्वमप्यन्यत्राप्यदृष्टचरं कल्पनीयमिति भावः ॥ ३९६ ॥

नन्वस्तु लोके आज्ञादय एव प्रवर्त्तकास्तेषां प्रवृत्तौ सामर्थ्यस्यान्वयव्यतिरेकसिद्धत्वात्प्रवृत्तिवैलक्षण्यस्याप्यनुभवसिद्धत्वाल्लौकिकवाक्यस्य पुरुषार्थपर्यवसाननियमाभावादाप्तस्याभाव्यत्वेन पुरुषार्थस्याप्यन्वयात् । नचैवं लोकवेदयोरैकार्थ्यासम्भवो दोषाय वैदिकलिङामर्थान्तरासम्भवेन लोकविलक्षणार्थकल्पनस्योचितत्वादित्याशङ्क्यार्थान्तरासम्भवः तावन्नास्ति श्रेयःसाधनत्वस्यैकस्यैव लोकसाधारणस्य सत्त्वादिति वक्तुमादौ समानकार्ये सम्भवति तद्वैरूप्यमयुक्तमित्याह—

वक्तृत्वमेव घटते यदि लिङ्पदस्य
सर्वत्र नार्धजरतीयमिदं प्रशस्तम् ।
सामर्थ्यमेकरसमेव यदोपपन्नं
नानारसं न खलु तत्परिकल्पनीयम् ॥ ३९७॥

वक्तृत्वमिति । स्वार्थबोधकत्वमित्यर्थः । एवकारेण कारकत्वं व्यावर्त्तयति । यदीति निश्चये । सर्वत्र लोकवेदयोः अर्द्धजरतीयमर्द्धं कुमार्यै अर्द्धजरत्यै इति प्रार्थना । कारकत्वस्य क्वचिदङ्गीकारः क्वचिदनङ्गीकार इत्येवंरूपमित्यर्थः । इदंशब्दार्थमेवाह—सामर्थ्यमिति । एकरसमेकविषयं बोधकत्वमात्रविषयमित्यर्थः । नानारसं नानाविषयमुत्पत्तिविषयमपीत्यर्थः । बोधकत्वमात्रसामर्थ्येन लौकिकवैदिकशब्दयोः प्रामाण्योपपत्तौ वेदे भावनां परिकल्प्य तत्र शब्दस्य कारकत्वं बोधकत्वं चेति शक्तिद्वयं न कल्पनीयमित्यर्थः ॥ ३९७ ॥

किं तर्हि लोकवेदसाधारणं लिङादिवाच्यमित्याकाङ्क्षायामाह-

श्रेयोहेतुत्ववाची यदि भवति तदा संभवत्येकरूपा
शक्तिस्त्वस्याभिधाने न तु भवति तदा कारकोऽयं प्रवृत्तेः ।
श्रेयोहेतुश्च वाच्यः श्रुतिवचसि तदा पौरुषेये च तुल्यः
क्लृप्तश्चासौ न कल्प्यः श्रुतिवचसि यथा भावना लिङ्निबद्धा
॥ ३९८ ॥

श्रेयोहेतुत्ववाचीति । अयं लिङादिर्यदि श्रेयोहेतुत्ववाची भवति तदाऽस्य लिङादेः शक्तिरेकरूपा सम्भवतीति सम्बन्धः । शक्तेर्विषयमाह—अभिधान इति । स्वार्थबोध इत्यर्थः । नन्वत्रैव शक्तिः किं न स्यादित्यत्राह न तु भवतीति । तदा श्रेयःसाधनत्वस्य लिङर्थत्वपक्षेऽयं

लिङादिः प्रवृत्तेः शब्दप्रवृत्तेः शब्दभावनायाः कारको न तु भवति नैव भवतीति: सम्बन्धः। लोकवेदयोर्धात्वर्थस्य श्रेयःसाधनतायाः लिङाद्यधीनत्वाभावान्न तस्य कारकत्वमित्यर्थः। एवं लोकवेदयोः लिङादेः शक्त्यैकरूप्यमुक्त्वा तद्विषयैकरूप्यमप्याह—श्रेयोहेतुरिति। श्रेयो हेतुत्वमित्यर्थः। इष्टसाधनत्वस्य लोकसिद्धत्वान्न शब्दभावनावद्वेदे कल्प्यत्वमपीत्याह—क्लृप्त इति। असौ श्रेयोहेतुर्लिङ्निबद्धा लिङादि-प्रतिपाद्या। अयं च व्यतिरेकदृष्टान्तः। तथा चेष्टसाधनत्वस्य निर्दुष्ट-त्वात्स एव पक्षोऽङ्गीकर्त्तव्यः न भावनार्थपक्ष इति भावः। यदुक्तं वाक्यार्थभूतार्थभावनायाः पुरुषार्थभाव्यत्वाद्वेदस्य प्रयोजनपर्यवसा-यित्वमिति तदनुपपन्नम्। किं भावनायाः साक्षात्स्वर्गो भाव्यः किं वा यागद्वारा। नाद्यः। अनुपपत्तेः। न हि प्रयत्नमात्रेण स्वर्गो भवति। द्वितीये यागस्यैव सम्बन्धित्वमस्तु अवश्यमपेक्षितत्वान्न भावनाया-स्तस्य तत्सम्बन्धं विनानुपपत्त्यभावात्। नन्वर्थभावनात्मकस्य तस्य भाव्याकाङ्क्षस्य स्वर्ग एव भाव्यो वक्तव्यः अन्यस्याभावादिति चेन्न। स्वर्गकरणस्य धात्वर्थस्य समानपदोपात्तस्य कृतिसाध्यतया तद्विषयत्वोपपत्तेः। द्विविधो हि कृतिविषय एकः साक्षात्कृतिसाध्यः। यथोद्यमनादिव्यापारः। अपरः कृतिजन्यफलविशिष्टः यथा कुठारो-वृक्षादिर्वा। न च स्वर्ग उभयोरन्यतरो भवति। न च परम्परया कृतिविषयः गमिक्रियाजन्यग्रामप्राप्तिध्वंसस्य गमिक्रियाविषय-त्वानुभवाभावात्प्रकारान्तरेण यागस्य भावनान्वयानुपपत्तेश्च। न च करणत्वेनान्वयस्तज्जन्यस्य तत्कारणत्वानुपपत्तेः। नचौपचारिकं करणत्वं करणविभक्तेर्मुख्यार्थबाधायोगात्स्वर्गकरणस्यैव भावना-करणत्वाभिधाने स्वर्गं प्रत्येव यागः करणमिति न भावनां प्रति कर-णम्। किं च यजेतेत्यत्र यागस्य न भावनां प्रत्यपि करणत्वेनान्वयः सम्भवति। करणत्वोपस्थापकपदाभावात्। न च लिङादिपदेनैव तत्कारणत्वं बोध्यत इति वाच्यम्। भावनावाचकत्वानुपपत्तेः। तथा

च न परम्परयापि भावनायाः स्वर्गादिनिष्ठत्वम्। किं च यजेतेत्यत्र यागस्य करणत्वाभिधानाभावे ज्योतिष्टोमेनेति पदस्य समानार्थत्वाभावान्नामत्वं न स्यात् । तस्मात् भावनावाक्यार्थपक्षे न कथमपि यागस्य पुरुषार्थसम्बन्धबोध इति तत्र प्रवृत्त्यभावान्न वेदस्य पुरुषार्थनिष्ठतेति भावः ॥ ३१८ ॥

किं च सर्वत्र धात्वर्थव्यतिरिक्तार्थभावनैव नास्तीति न सा प्रत्ययार्थ इत्याह—

धात्वर्थतोऽन्या न च भावनास्ति
यां भावनां वक्तुमलं लकारः ।
धात्वर्थमुद्दिश्य न पुंस्प्रयत्नो
लोके यतो भाति निरूपणायाम् ॥ ३१९ ॥

धात्वर्थतोऽन्येति । न च भवनास्ति, सर्वत्रेति शेषः । कुतो, नास्तीत्याशङ्क्य सर्वत्र तदनुभवाभावादित्याह—धात्वर्थमिति । लोके सर्वत्रेत्यर्थः । यद्यपि पचति पचेदित्यादौ पाकं करोति पाकं कुर्यादिति तदर्थविवरणाद्धात्वर्थादन्या भावना विद्यते । तथापि कुर्वीत यतेतेत्यादौ धात्वर्थव्यतिरिक्तार्थभावनाभावात् धात्वर्थस्यैव प्रयत्नरूपत्वादेकस्यावच्छेद्यावच्छेदकभावानुपपत्तेरर्थभावनायाः प्रकृत्यर्थावच्छिन्नाया न तत्र वाक्यार्थत्वमिति न सा सर्वत्र वाक्यार्थस्ततस्तद्बलाद् यागस्य न श्रेयः सम्बन्धसिद्धिरिति भावः ॥ ३१९ ॥

तस्मान्नियोगवद् भावनाया अप्यप्रमाणिकत्वान्न क्रियावाक्यस्यापि कार्यपरत्वं कुतः सकलक्रियाशून्यवेदान्तवाक्यस्य तदर्थतेत्यभिप्रेत्योपसंहरति—

**न कर्मकाण्डेऽपि ततो नियोगो**
**न भावनाऽप्युक्तनयेन तस्मिन् ।**
**न तद्द्वयं वेदशिरःसु तस्मा-**
**त्ततो न कार्यार्थपराणि तानि ॥ ४०० ॥**

न कर्मकाण्डेपीति । नियोगस्य दुर्निरूपत्वं तच्छब्दार्थः । द्वयं भावना नियोगश्च कर्मकाण्डे ततो नियोगो न उक्तनयेन न भावनापि यस्मात्तस्मात्तद्द्वयं वेदशिरःसु न ततस्तानि वेदान्तवाक्यानि कार्यार्थपराणि नेति सम्बन्धः ॥ ४०० ॥

इदानीं विमतो वेदान्तः कार्यनिष्ठः वेदवाक्यत्वात् ज्योतिष्टोमादिवाक्यवदित्यनुमानस्य निषेधवाक्ये व्यभिचारात्तद्वदेव वेदान्तानामपि सिद्धपरत्वमुपपन्नमिति वक्तुमादौ प्रतिषेधवाक्ये तत्साधयति –

**अपि च प्रतिषेधचोदना-**
**विषयः स्यात्प्रतिषिद्धकर्मणः ।**
**फलगर्धिनिवृत्तिरेव सा**
**न नियोगो न च तस्य गोचरः ॥ ४०१ ॥**

अपिचेति । प्रतिषेधचोदनाविषयः न हन्यात् न पिबेदित्यादिनिषेधयुक्तवाक्यप्रतिपाद्यः प्रतिषिद्धकर्मणो ब्रह्महननादेः फलगर्धिनिवृतिः फलगर्धिः इष्यमाणफलसाधनत्वं तस्य निवृत्तिरभावः । हननादिगतश्रेयःसाधनत्वाभाव एव प्रतिषेधवाक्यार्थः नञः स्वसंबध्यभावबोधकत्वात् न च सा श्रेयःसाधनत्वनिवृत्तिर्नियोगो न वा तद्विषयः न वा भावना अतः साक्षाद्वा परम्परया वा नियोगविषया सेत्यर्थः ॥ ४०१ ॥

ननु नञः स्वसम्बन्ध्यभाव इव तदन्यतद्विरुद्धावप्यर्थौ प्रसिद्धौ ततः कथमभाव एव तदर्थ इत्युच्यते तथा च भक्षणादिविरुद्ध-संकल्पक्रियैवात्रापि नञर्थ इति चेत्तत्राह—

**नञः स्वसम्बन्धिपदार्थवस्तुनो**
**निवृत्तिरर्थः सहजः प्रसिद्धितः ।**
**अनीक्षणादौ व्रतशब्दसंगतेः**
**परप्रयुक्ता खलु मानसी क्रिया ॥४०२ ॥**

नञ इति । नञः स्वसम्बन्धिवस्त्वभावः सहज औत्सर्गिको मुख्योर्थ इत्यर्थः । तत्र हेतुः प्रसिद्धित इति । वृद्धानामभाव एव शक्त्या नञ्शब्दप्रयो-गादित्यर्थः । ननु नेक्षतेत्यादावीक्षणविरुद्ध 'नेक्षिष्ये' इति संकल्परूपक्रि-यापरत्वस्यापि दर्शनाद्विपरीतापि प्रसिद्धिरस्तीत्याशङ्क्याह—अनीक्षणा-दाविति । अनीक्षणादौ मानसक्रिया परप्रयुक्तेति सम्बन्धः । नेक्षतेत्यादौ नञ्शब्दस्य संकल्पक्रियापरत्वमन्यप्रयुक्तमित्यर्थः । परशब्दार्थमाह—व्रतशब्दसंगतेरिति । व्रतशब्दसमभिव्याहारादित्यर्थः । अथातः प्रजापति-व्रतमित्यनुष्ठेयवाचिना व्रतशब्देनोपक्रमादभावस्य चाननुष्ठेयत्वान्नेक्षे-तेत्यत्र बलवद्बाधादौत्सर्गिकमर्थं परित्यज्य लक्षणया मानसी क्रिया बोध्यते न तु मुख्यवृत्त्या ततो नञोऽभाव एव मुख्योऽर्थ इत्यर्थः ॥४०२॥

किञ्च विधिनिषेधविभागप्रसिद्धिबलादपि निषेधवाक्यस्या-भावमात्रनिष्ठत्वमभ्युपेयमित्याह—

**अपि च प्रतिषेधचोदना**
**न तु भिद्येत भवन्मते विधेः ।**
**विधिरेव तु चोदनाऽखिला**
**न हि वेदे वचनं निवर्त्तकम् ॥ ४०३ ॥**

अपिचेति । भवन्मते निषेधवाक्यस्यापि प्रवृत्तिपरत्वमते भेदाभावे-हेतुमाह—विधिरेव त्विति । हि यस्माद्वेदेऽखिलचोदनाविधिः प्रवर्त्तक एव न निवर्त्तकं निषेधनिष्ठं वचनमस्ति तत इत्यर्थः । न कलञ्जं भक्षयेदित्येवमादिवाक्यस्यापि नियोगनिष्ठत्वे निषेधनिष्ठवचना-भावान्निषेधचोदनाप्रसिद्धिः सर्वजनीना निर्विषया स्यात्ततो निषेध-वाक्यमभावमात्रनिष्ठं वक्तव्यमित्यर्थः ॥ ४०३ ।

एवं निषेधवाक्यस्याभावमात्रपरत्वं वर्णयित्वा तद् दृष्टान्तेन वेदान्तवाक्यस्यापि सिद्धवस्तुमात्रनिष्ठत्वमेवेति दर्शयति—

**प्रतिषेधवाक्यवदतः सकलं**
**विधिशून्यमेव फलवद्भवतु ।**
**वचनं त्रयीशिरसि तत्त्वमसि-**
**प्रभृति प्रतीचि तमसोऽपहतेः ॥ ४०४ ॥**

प्रतिषेधवाक्यवदत इति । यतो न वेदस्य कार्यपरत्वनियमोऽत इत्यर्थः । ननु निषेधवाक्यादभावमात्रबोधेपि निषिद्धप्रवृत्त्यभावा-त्तत्प्रयुक्तानर्थस्य परिहारः सम्भवति न चात्र ब्रह्मावगमने निषेध-प्रवृत्त्युपरमः संभवति तदवगमस्य प्रवर्त्तकेष्टसाधनत्वाभावविषय-त्वाभावान्निषिद्धप्रवृत्त्युपरमे वा तस्यान्यतः सिद्धत्वेन तस्यैव तत्फल-वत्त्वादित्याशङ्क्य सकलानर्थहेत्वविद्यानिवृत्तेरत्रैव सत्त्वाद्भवतितरां तज्ज्ञानं प्रयोजनवदित्यभिप्रेत्याह प्रतीचि तमसोऽपहतेरिति । प्रत्यग्विषय तमोपहतेरित्यर्थः ॥ ४०४ ॥

एवं सर्वेषामेव नञामभाव एव मुख्योर्थः तन्निष्ठमेव प्रतिषेध-वाक्यं न प्रवर्त्तकनिष्ठं तन्न्यायेन तत्त्वमादिवाक्यमपि सिद्धमात्र-परमित्युक्तं तत्र सर्वेषामपि नञामभाव एव मुख्यार्थ इत्युपश्रुत्य तदसहमानो भाट्टः प्रत्यवतिष्ठते—

नामधातुसहितो नञिष्यते
पर्युदासविषयो मनीषिभिः।
न प्रसक्तविनिवृत्तिवाचकोऽ—
ब्राह्मणादिषु तथोपलम्भनात् ॥ ४०५ ॥

नामधात्विति। मनीषिभिर्नाम्ना सुबन्तेन धातुना ईक्षणादिवाचकप्रकृत्या च सहितो नञ्शब्दः पर्युदासविषयः स्वसंसृष्टान्यतद्विरुद्धविषयः न प्रसक्तविनिवृत्तिवाचकः स्वसंबध्यभाववाचको नेतीष्यत इति सम्बन्धः। तत्र हेतुः-अब्राह्मणादिष्विति। आदिपदेनाधर्मादिकं गृह्यते। तथोपलम्भान्नञः पर्युदासपरत्वोपलम्भान्नञो हि स्वसंसृष्टाभाव एव मुख्योऽर्थ इति न किन्तु तदन्यतद्विरोधिनावपि। नचैवं सर्वेषां सर्वत्र प्रसक्तिः नामधातुभ्यां सहितस्य नञः पर्युदासार्थत्वाद्विधिसंयुक्तस्य प्रसक्तनिवृत्तिमात्रवाचित्वादतो व्यवस्थासंभवान्नातिप्रसङ्गः। न च लक्षणया नञः पर्युदासपरत्वमिति शङ्कनीयमुक्तव्यवस्थया तस्यापि मुख्यार्थत्वादिति भावः ॥ ४०५ ॥

नञो नामयोगेन पर्युदासपरत्वेऽब्राह्मणादिष्विति सूचितं दृष्टान्तं प्रपञ्चयति—

अब्राह्मणाधर्मगिरोर्नञेष
नामान्वयादाश्रित पर्युदासः।
अन्यं विरुद्धं च सदाऽभिधत्ते
नोद्यन्तमित्यादिषु धातुयोगात् ॥ ४०६ ॥

अब्राह्मणेति। अब्राह्मणोऽधर्मइतिशब्दयोरित्यर्थः। नामान्वयाद् ब्राह्मणो धर्म इति च नामपदाभ्यामन्वयाद्वाश्रितपर्युदासः आश्रितः

वाच्यत्वेनाङ्गीकृतः पर्युदासो येन स तथोक्तः। अब्राह्मणाधर्म-गिरोर्विद्यमान एष नञ आश्रितः पर्युदासः सन्नन्यं ब्राह्मणादन्यं ब्राह्मणाभासं क्षत्रियं वा विरुद्धं धर्मविरुद्धं पापमदृष्टंवाभिधत्त इति सम्बन्धः ॥ ४०६ ॥

धातुयोगेन नञः पर्युदासत्व उदाहरणमाह—

**नोद्यन्तमित्यत्र नञेक्षणार्थ-**
**समीपकार्यान्तरमुच्यते हि।**
**ततश्च नेक्षिष्य इतीदृशी स्या-**
**त्संकल्पना संनिहितत्त्वहेतोः ॥ ४०७ ॥**

नोद्यन्तमिति। नेक्षतोद्यन्तमित्यादिषु नञो धातुयोगादीक्षणविरुद्धं प्रतीयत इत्यर्थः। नेक्षतेत्यत्र कीदृशं विरुद्धं नञा प्रतिपाद्यते तत्राह— नोद्यन्तमिति। ईक्षणार्थसमीपकार्यान्तरं ईक्षणरूपो योऽर्थः तस्य यत्स-मीपमेकाश्रयत्वेन वेक्षणाभावपरिपालनहेतुतया वा यत्सन्निहितं तादृशं यत्कार्यान्तरमीक्षणविरुद्धसंकल्पनमित्यर्थः। फलितमाह— ततश्च नेक्षिष्य इति। यतः सन्निहितत्त्वहेतोरीक्षणविरुद्धसंकल्पक्रिया तत्र नञर्थः। तत ईदृशी संकल्पना स्यादिति सम्बन्धः। ईदृक्पदार्थमेवाह नेक्षिष्य इति ॥ ४०७ ॥

इदानीं नञो विधियोगेन निवृत्तिबोधकत्व उदाहरणमाह—

**द्विजं न हन्यान्न कलञ्जमद्या-**
**दित्यादिवाक्ये विधिनाऽस्य योगात्।**
**प्रसज्यमानार्थनिवृत्तिमात्रं**
**नञर्थ इत्याश्रितमादरेण ॥ ४०८ ॥**

द्विजं नेति । विषसंयुक्तबाणहतमृगमांसं कलञ्ज इत्याहुः । न सुरां पिबेदित्यादिरादिशब्दार्थः । अस्य नञ इत्यर्थः । प्रसज्यमानार्थनिवृत्तिमात्रं रागादिवशाद्द् प्रसज्यमानस्य प्रतीयमानस्येष्टसाधनत्वादेरभावमात्रमित्यर्थः । तथा च नञः क्वचित्क्रियापरत्वस्यापि विद्यमानत्वान्न कृत्स्ननञ्वाक्यदृष्टान्तेन तत्त्वमादिवाक्यस्य सिद्धपरत्वमुचितमिति भावः ॥ ४०८ ॥

इदानीं वेदे सर्वेषामपि नञां प्रकृत्यन्वयनियमात्पर्युदासः एवार्थ इति गुरुमतं दर्शयति—

नाद्यां न हन्यां न पिबेयमित्यपि
वाक्येषु नञ्वत्सु वदन्ति मानसीम् ।
संकल्परूपां विधिबन्धिनीं क्रियां
नोद्यान्तमित्यादिवचःस्विवापरे ॥ ४०९॥

नाद्यामिति । अपरे गुरुमतानुवर्तिनः न कलञ्जं भक्षयेत् न ब्राह्मणं हन्यात् न सुरां पिबेदित्येवमादिवाक्येषु विधिबन्धिनी विधिर्नियोगस्तत्सम्बन्धिनीं तद्विषयसंकल्परूपां क्रियां वदन्तीत्यर्थः । तत्र दृष्टान्तो नोद्यन्तमिति ॥ ४०९ ॥

ननु तत्रापि नञोऽभाव एवार्थः किं न स्यादित्याशङ्क्याह—

वाक्येषु नञ्वत्सु निवृत्तिमात्रं
प्रमेयमित्यभ्युपगम्यमाने ।
प्रत्यक्षमानेन विरुद्ध्यते हि
निवृत्तिशास्त्रं न च युज्यते तत् ॥४१०॥

वाक्येष्विति । निषेधवाक्येषु कलञ्जभक्षणाद्यभाव एव यद्यर्थः

स्यात्तदा तद्ग्राहि प्रत्यक्षमानेन निषेधशास्त्रं विरुध्येत न च तद्युज्यते वेदस्याप्रामाण्यप्रसङ्गादित्यर्थः। न कलञ्जं भक्षयेदित्यत्र कस्य निवृत्तिर्नञा बोध्यते किं कलञ्जस्य किं वा तद्भक्षणस्य उत तत्फलरागस्य। न सर्वथापि घटते तेषां सद्भावस्य प्रत्यक्षसिद्धत्वादतो निषेधवाक्यस्य प्रामाण्यसिद्धये भक्षणादिविरुद्धक्रियापरत्वमेवाङ्गीकर्त्तव्यमिति भावः ॥ ४१० ॥

शबरस्वामिवचनबलादप्येवमेव वक्तव्यमित्याह—

प्रवर्त्तकं वाक्यमुवाच चोदनां
निवर्त्तकं नैवमुवाच भाष्यकृत् ।
ततश्च विद्मो न हि चोदनास्ति सा
प्रवर्त्तिका या न भवेदिति स्थितिः ॥ ४११ ॥

प्रवर्त्तकवाक्यमिति । निवर्त्तकं निवृत्तिजनकमेवं प्रवर्त्तकवाक्यवत् भाष्यकृच्छबरस्वामी यतो न भाष्यकार एवमाह—तत इति । फलितमाह—ततश्चेति । भाष्यकारो हि चोदनेति क्रियायाः प्रवर्त्तकं वचनमित्यवोचन्न तु निवर्त्तकमपीति। अतो नूनमेवं ज्ञायते या या चोदना सा सर्वापि प्रवर्त्तिकैव न तु निवर्त्तिकेति । तथा च निषेधचोदनाया अपि चोदनात्मकत्वात्प्रवर्त्तकत्वमेवेति न तद्दृष्टान्तेन वेदान्तानां सिद्धपरत्वं वक्तुं युज्यत इति भावः ॥ ४११ ॥

तत्रादौ भट्टपक्षं दूषयति –

न नामयोगो न च धातुयोगो
लिङादियोगोऽपि न कारणं नः ।
नञः स्वसम्बन्धनिवृत्तिमात्रं
स्वतोऽभिधेयं परतोऽन्यदस्य ॥ ४१२॥

न नामेति । कारणमर्थव्यवस्थायां प्रयोजकं स्वतः मुख्यतः परतः लक्षणयेत्यर्थः । अन्यद्भावादन्यद्विरुद्धत्वादिकमस्य नञः यदुक्तं नामधातुभ्यां योगे नञः पर्युदास एवार्थः विधियोगे तु स्वसंसृष्टाभाव इति नामादिनञर्थव्यवस्थाकारणमिति तदुक्तं व्यवस्थाकारणमेव व्यभिचारादतोऽभाव एव नञो मुख्योऽर्थः । अन्यत्तु मुख्यार्थासम्भवे लाक्षणिकमिति भावः ॥ ४१२ ॥

व्यभिचारमेवादौ लौकिकवाक्ये दर्शयति—

**तथा हि नाग्रे करणीतिनाम्ना**
**गजोऽत्र नास्तीति च धातुयोगे ।**
**लिङादियोगेऽपि निवृत्तिरर्थो**
**विषं न खादेदिति नञ्पदस्य ॥ ४१३ ॥**

तथा हीति । यथा नामादिकं न नञर्थव्यवस्थाकरणं तथेत्यर्थः । नञ्पदस्याग्रे पुरो देशे करिणी नेति प्रयोगे करिणीति नामपदसम्बन्धे गजो नास्तीत्यत्रास्तिधातुयोगे विषं न भक्षयेदित्यत्र लिङादियोगेऽप्यविशेषेण निवृत्तिः करिण्याद्यभाव एवार्थो वक्तव्यः । तस्यैवानुभवादन्यस्यैवमननुभवादतो नामादिनञर्थव्यवस्थाहेतुरित्यर्थः ॥ ४१३ ॥

वैदिकप्रयोगेपि तद्व्यभिचारमाह—

**तथा श्रुतौ नेति वचःसु नाम्नि**
**नानेह नास्तीति च धातुयोगे ।**
**तथाविधानेन कलञ्जमद्या**
**न्नञोऽविशेषेण निवृत्तिरर्थः ॥ ४१४ ॥**

तथेति। यथा लोके तथा श्रुतावपि नञो नामादियोगेऽप्यभाव एवार्थ इत्यर्थः। तदेव दर्शयति—नेति वचःस्विति। न कलञ्जमद्यादित्य-त्रेत्यर्थः। नेह नानास्ति किंचन स एष नेति नेत्यात्मा न कलञ्जम-द्यादित्यादिवाक्येषु धातुनामलिङ्गादिसंयुक्तस्य नञोऽविशेषेण निवृत्तिरेवार्थ इत्यर्थः॥ ४१४॥

ननु सर्वत्राभाव एव नञर्थश्चेत्कुत्रापि पर्युदासस्तदर्थो न स्यान्नियामकाभावादतो नामादियोग एव नियामकः स्वीकर्त्तव्य इत्या-शङ्क्य नियमकाभावोऽसिद्धः। यत्र भ्रान्तिप्राप्ते प्रतियोगिनि बुद्धि-पूर्वा बुद्धिपूर्वं? भ्रान्तिपूर्वं नञ्पदप्रयोगस्तत्र नञः स्वसम्बन्धिसंसर्गा-भाव एवार्थः। यत्र तु सति विषयेऽनारोपिते प्रतियोगिनि प्रतियो-गिनैक्यमनारोप्यैव भ्रान्तिं विनैव तत्प्रयोगः तत्र स्वसंसृष्टान्यद्वि-रोधि वा तदर्थ इति प्रतियोगिभ्रान्त्यभ्रान्तिपूर्वकत्वयोरेव नियामकत्वा-दित्याह—

**औदासीन्यं पुरुषगतमेवाविशेषान्नञोऽर्थो**
**भ्रान्तिप्राप्ते सति तु विषये यत्र यत्रैष दृष्टः।**
**नौदासीन्यं पृथगिह भवेदात्मचिन्मात्ररूपात्**
**सिद्धे वस्तुन्यवसितमतो वेदवाक्यं निषेधे॥ ४१५॥**

औदासीन्यमिति। प्रवृत्तिहेत्विष्टसाधनत्वाभाव इत्यर्थः। इदञ्चाभा-वमात्रस्योपलक्षणं नञर्थ इति शेषः। पुरुषगतं कथञ्चित्पुरुषसम्बन्धि। इदं चेष्टसाधनत्वाभावापेक्षया। तुशब्दः प्रसक्तप्रतिषेधापेक्षया। पर्युदासस्याभिहितं विशेषमाह—यत्रेति। यत्र सति विषये नञ प्रयोगो दृष्टः तत्र एष पर्युदासो दृष्ट इत्यर्थः। नेक्षतेत्यादौ तथा दर्शनादिति भावः। इदं च परमतमाश्रित्योक्तम्। अस्मन्मते तु यत्र मुख्यार्थबाधकं बलवत्प्रकरणादिकं तत्रैव नञर्थः पर्युदासः। अन्यत्र तु मुख्य

एवेत्यर्थः । नन्वेवं सर्वेषामपि वेदान्तानां ब्रह्मपरत्वं न संभवति त्वयैव नेति नेति वाक्यस्य निषेधनिष्ठत्ववर्णनादित्याशङ्क्य कल्पितप्रतियोगिकाभावस्याधिष्ठानमात्रत्वादधिष्ठानब्रह्मपरता न विरुध्यत इत्याह—
औदासीन्यमिति प्रपञ्चनिषेध इत्यर्थः । इह वेदान्तसमये फलितमाह—
सिद्ध इति । अवसितं पर्यवसितं यतः प्रपञ्चाभावोऽधिष्ठानात्ममात्रस्ततः सर्वमपि वेदान्तवाक्यं सिद्धे निषेधे प्रपञ्चशून्ये वस्तुनि ब्रह्मण्यव सितमित्यर्थः । नञ्वाक्यं निषेध इव सिद्धे ब्रह्मण्यवसितमिति वा सम्बन्धः ॥ ४१५ ॥

यदुक्तं गुरुणा विधिसंसृष्टनञामपि प्रकृत्यन्वयमङ्गीकृत्य-स्वसम्बन्धिविरुद्धक्रियापरत्वमिति तदप्यसत् नाग्ने करणीत्यादावभावमात्रपरताया दर्शनात्तद्वदेव निषेधचोदनाया अभावमात्रपरत्वोपपत्तेः । नचैवं सति तदीयभाष्यकारवचनविरोधोऽपि तद्वचनस्य निषेधचोदनान्तरोपलक्षणार्थत्वादित्याह—

प्रवर्त्तकं वाक्यमुवाच चोदनां
निधाय बुद्धौ वचनं निवर्त्तकम् ।
द्वितीयसूत्रे भगवान्बहुश्रुतो
न चोदनाद्वित्वनिवारणाय तत् ॥४१६॥

प्रवर्त्तकमिति । निषेधनिष्ठं वचनं निवर्त्तकचोदनेत्यभिप्रेत्यैव चोदनेति क्रियायाः प्रवर्त्तकं वचनमित्युपक्रमपराधीन एव न तु चोदनायाः प्रवृत्तितदभावनिष्ठत्वाकारेण द्वित्ववारणाय नञो निवृत्तिमात्रपरत्वस्यापि लोके दृष्टत्वात्तेनापि तथैव वक्तुमुचितत्वादिति भावः ॥ ४१६ ॥

एवं निषेधवाक्यस्य नञर्थीभूताभावमात्रनिष्ठत्वमुपश्रुत्य तदसहमानः प्राभाकरः प्रहतोरगवत् स्वविषमाशयमाविष्कर्त्तुमुपक्रमते—

ननु निवृत्तिपरत्वमुदीरितं
विघटयामि निषेधगिरामहम् ।
न हि कलञ्जमिति प्रतिपाद्यते
यदि तदा नयनेन विरुद्ध्यते ॥४१७॥

ननु निवृत्तीति । निवृत्तिपरत्वमभावमात्रनिष्ठत्वमित्यर्थः । ननु न कथनमात्रेण विघटनं भवतीत्याशङ्क्य विघटनप्रकारमाह—न हीत्यादिना । किं नञः कलञ्जपदेनान्वयः । किं वा धातुना । अथवा लिङादिप्रत्ययेन । अथान्येन केन चित् । तत्राद्यमनूद्य प्रत्यक्षविरोधेन दूषयति । न हीति । यदिदं भक्ष्यमाणं कलञ्जं न भवतीति प्रतिपाद्यते । तदा तस्य कलञ्जत्वावगाहिप्रत्यक्षेण तद्वचनं विरुद्ध्येत हीति सम्बन्धः ॥ ४१७ ॥

द्वितीयपक्षमनूद्य तत्राप्येतद्दूषणमाह—

अथ कलञ्जपदार्थगभक्षणं
न हि तदाप्यसुनैव विरुद्ध्यते ।
अथ तदीयफलस्पृहयाऽन्वयो
न हि तदप्यनुभूतिपराहतम् ॥ ४१८ ॥

अथेति । यदि कलञ्जपदार्थगभक्षणं—कलञ्जपदार्थगतभक्षणं नेतीति प्रतिपाद्येत तदपि नेति सम्बन्धः । तत्र हेतुमाह—नहि तदप्यसुनैवेति । हि यतोऽमुनैव प्रत्यक्षेणैव विरुद्ध्यते तत इत्यर्थः । कलञ्जभक्षणस्यापि प्रत्यक्षतोऽनुभूयमानत्वादित्यर्थः ॥ ४१८ ॥

तृतीयेपि पक्षे प्रत्ययार्थः किमिच्छा किं वा नियोग उतेष्टसाधनत्वमिति विकल्प्याद्यमुक्तदूषणेनानूद्य दूषयति—

अथ तदीयनियोगनिवर्त्तनं
भवतु भक्षणमस्ति तदिच्छया ।
न हि नियोगनिवृत्तिनिवेदने
सति कलञ्जमभक्ष्यमितीङ्ग्यते ॥ ४१९॥

अथ तदीयेति । यदि नञर्थस्य कलञ्जभक्षणसाध्यसुखेच्छयाऽन्वय इत्युच्येत तदपि न यतस्तदपि अनुभूतिपराहतं तज्जन्यसुखेच्छाऽभावे तत्र प्रवृत्त्यनुपपत्तेश्चेत्यर्थः । द्वितीयमनूद्यातिप्रसङ्गेन दूषयति—अथ तदीयेति । तदीयनियोगनिवर्त्तनं कलञ्जभक्षणविषयनियोगस्य निवारणं नञा प्रतिपाद्यते । यदि कलञ्जभक्षणे विधिर्नास्तीति प्रतिपाद्यत इत्यर्थः । अस्मिन्पक्षे प्रत्यक्षविरोधाभावेपि भक्षणाभावो न सिद्ध्येदिति दूषयति—भवत्विति । कलञ्जभक्षणनियोगनिवर्त्तनं भवत्वित्यर्थः । अस्ति स्यादित्यर्थः । तदिच्छया भक्षणेच्छया । ननु तद्विषयनियोगनिषेधे कथं तदिच्छया तत्र प्रवृत्तिर्भवेत्तस्यैव प्रवर्त्तकत्वादिति चेत्तत्राह—न हि नियोगेति । इङ्ग्यते ज्ञायते न हि सर्वापि प्रवृत्तिर्नियोगजन्या तं विनापि भोजनादिप्रवृत्तेर्दर्शनात्तत्र फलेच्छया प्रवृत्तौ प्रकृतेऽपि तदुपपत्तेः । इष्टसुखस्यात्रापि सत्त्वादतः कलञ्जभक्षणस्य नायौगिकत्वनिषेधेऽपि न तद्भक्षणनिवृतिः सम्भवति न च तद्युज्यते तस्य विगीतत्वादित्यर्थः ॥ ४१९ ॥

इष्टसाधनत्वनिषेधपक्षमुपरिष्टात् दूषयिष्यनन्येन केनचिदिति पक्षमप्रसिद्ध्या दूषयति—

इह कलञ्जपदेन नञन्वयो
भवति वाऽस्य नञोऽदिसमागमः ।

आदिगतेन लिङादिपदेन वा

सह समेति नञत्र गतिस्त्रयी ॥ ४२० ॥

सह—न कलञ्ज भक्षयेदितिवाक्ये कलञ्जपदे न नञन्वयो भवति अथवा—तस्य नञोऽदिसमागमः भक्षणवाची धातुनान्वयः । यद्वा आदिगत्वेन लिङादिना धातुगतेन लिङादिपदेन वा स नञ्शब्दः समेति अन्वेति । अत्र वाक्ये नञस्त्रयी त्रिप्रकारैव गतिः सम्बन्धः न प्रकारान्तरेणान्यस्यान्वीयमानार्थस्यास्मिन्वाक्ये अप्रतीते-रित्यर्थः ॥ ४२० ॥

तर्हि निषेधवाक्यस्य का गतिः गत्यन्तराभावान्निवृत्तिनियोग-निष्ठतैवेत्याह—

उदितपक्षपरिग्रहकारिणां

न च निषेधगिरामुपपादने ।

भवति शक्तिरतस्तु निषेधगी-

रपि नियोगपराऽभ्युपगम्यताम् ॥ ४२१ ॥

उदितेति । पूर्वोक्तपक्षेष्वन्यतमपक्षस्वीकारिणामित्यर्थः । उपपाद-नेऽभाववाचकत्वोपपादने यतो न शक्तिस्तत इति सम्बन्धः । च शब्दोऽवधारणे निषेधगीरपि नियोगपरैव निवृत्तिनियोगपरैवाऽ-भ्युपगम्यतामित्यर्थः । निषेधवाक्यस्य नियोगपरत्वे चोदनात्वादिति हेतुर्वा चकारेण समुच्चीयते । अपिशब्देन प्रवृत्तिचोदनावदिति दृष्टान्तः सूच्यते ॥ ४२१ ॥

नन्वयं नियोगः किंविषयः न तावद्धननादिप्रकृत्यर्थविषयः तस्य रागादिप्रापितत्वान्नञोऽनन्वयप्रसङ्गात्, नापि नञर्थविषयः तस्य

प्रकृतेऽऽरोपितप्रतियोगित्वेन मुख्यार्थबाधकाभावेन च पर्युदासानुपपत्तेः। उक्ततयाऽभावत्वमेव वक्तव्यम्। एवं सति भक्षणपानादिनिवृत्तेः सर्वस्याभावरूपतया स्वतःपरस्परवैलक्षण्याभावात् तदेकत्वे चानुबन्धभेदाभावात्तद्विषयशास्त्रभेदो नियोगभेदोऽपि न सिद्ध्येत्। तथा चाभक्षणनियोगसिद्ध्येव पाननियोगोऽपि सिद्ध्येदित्याशङ्क्याह—

यथा च यागाद्यनुबन्धभेदा-
द्भिन्नेषु शास्त्रेषु नियोगभेदः।
निवृत्तिभेदादपि तद्वदस्य
निवृत्तयोऽपि ह्यनुबन्धभूताः॥ ४२२॥

यथा चेति। यथा यागदानाद्यनुबन्धविषयस्य भेदाच्छास्त्रभेदो विधिभेदो नियोगभेदश्च तद्वन्निवृत्तिभेदादस्य निवृत्तिनियोगस्य भेद इत्यर्थः तत्र हेतुः—निवृत्तयोऽपीति। अस्येत्यत्राप्यनुषञ्जनीयं हि यतोऽस्य निवृत्तयोऽनुबन्धभूतास्तत इत्यर्थः। साध्यानुबन्धाधिकारादिभेदैर्हि शास्त्रं भिद्यते। नियोगश्च निवृत्तीनां प्रतियोगिभेदाद्भिन्नानां नियोगानुबन्धत्वादभक्षणादिनियोगोऽपि भिद्यत इत्यर्थः॥ ४२२॥

ननु निषेधवाक्यस्य निवृत्तिनियोगमात्रनिष्ठत्वे कलञ्जभक्षणादेरनर्थहेतुत्वं न सिद्ध्यति। तत्र प्रमाणाभावात्तथाहि किं योनिहन्त्सहस्रेण यातयादित्यादिसहस्रयातनावाक्यं ब्राह्मणहननादेरनर्थहेतुत्वे प्रमाणं किं वा न हन्यादित्यादिनिषेधचोदनैव। नाद्यः। अर्थवादतया तस्य स्वातन्त्र्येण प्रमितिजनकत्वायोगात्। न चायं सहस्रयातनाविधिः। तस्याः फलतया स्वर्गादिवद्विधेयतानर्हत्वाद्वैवस्वतस्य कर्मविद्ध्यनर्हत्वाच्च। ननु न हन्यादिति निषेधविधिशेषोऽयमर्थवादः। प्रतिष्ठावाक्यवदतो विधिशेषतयाऽनर्थहेतुत्वप्रतिपादक इति

चेन्न—प्रतिष्ठात्राक्यवद्विधिसम्बन्धिफलाप्रतिपादकतया तस्य तच्छे-षत्वाभावात् । ननु तद्वाक्यार्थस्य निधिफलत्वाभावेपि रुद्ररोदनादि-वद्विध्यनुकूलत्वमस्त्येवेति तच्छेषतया तद्वाक्यस्यानर्थसाधनता-प्रतिपादकत्वं सम्भवतीति चेन्न—शब्दतात्पर्यागम्यस्य मानान्तर-सम्वादाभावेऽसत्त्वेन रुद्ररोदनादेरिव सहस्रयातनादेरप्यसत्त्वेन तत्प्र-तिपाद्यत्वानुपपत्तेः । असता तेन निषेधनियोगस्तुत्युपपत्तेश्च । वस्तुतस्तु तद्वाक्यं निषेधचोदना सामर्थ्यसिद्धयाननाद्यनुवादेन सहस्रादिसंख्याविधायकमेवोभयपरत्वे गौरवात् न च तत्त्वत्पक्षे सम्भवति अन्यतोऽप्राप्तेः । न द्वितीयः । निषेधचोदनायास्त्वया निवृत्तिनियोगनियोगमात्रतत्परत्वाङ्गीकारात्ततः प्रयोजनाभावान्नि-वृत्तिर्न स्यादित्याशङ्क्य माभूत्तर्हि निषद्धक्रियातोऽनर्थप्राप्तिः । नियोगसिद्धये नित्यप्रवृत्तिवन्निवृत्त्या भवितव्यमिति निरुद्धगतिक आह—

**निवृत्तिसिद्ध्याऽपि नियोगसिद्धिः**
**प्रवर्त्तमानस्य न गर्तपातः ।**
**निषिद्धचेष्टा निरयस्य हेतु-**
**र्नियोगतो नाध्यवसीयते हि ॥ ४२३ ॥**

निवृत्तिसिद्ध्याऽपीति । कलञ्जभक्षणनिवृत्त्यापि निवृत्तिनियोगः सिद्ध्य तीति तदर्थमेव निवृत्तिः साधनीया न त्वनर्थपरिहारायातो भक्षणादौ प्रवर्त्तमानस्य न गर्त्तपात्तः न निरयपातः । प्रमाणाभावादित्यर्थः । ननु किमिति तत्र प्रमाणाभावः । निवृत्तिनियोगादेव निषिद्धप्रवृते-रनर्थसाधनत्वसिद्धेरिति चेन्नेत्याह—निषिद्धचेष्टेति । कलञ्जभक्षणादि-प्रवृत्तिर्निरयस्यानर्थस्य हेतुरिति नियोगतोऽध्यवसीयते—नहीति + सम्बन्धः । नियोगो हि स्वसिद्ध्यनुकूलमेव बोधयति । यथा स्ववि-

षयस्य हितकरणत्वादिनिषिद्धचेष्टाया निरयसाधनत्वबोधस्य च स्वजन्यफलकरणत्वादन्यत्वेन निवृत्तिनियोगाननुकूलत्वान्न निवृत्तिनियोगस्तत्साधयतीत्यर्थः ॥ ४२३ ॥

ननु निवृत्तिनियोगः स्वसिद्धये स्वविषयनिवृत्तेरनर्थपरिहारहेतुत्वं बोधयतीति वक्तव्यं फलहेतोर्नियोगविषयत्वेन तस्य स्वसिद्ध्यनुकूलत्वात्तथा च निषिद्धनिवृत्तेरनर्थपरिहारहेतुत्वान्यथानुपपत्त्या निषिद्धप्रवृत्तेरनर्थहेतुत्वं सिद्धयतीत्याशङ्क्याह—

नियोग एवैष पुमान्नियुज्यते
नियोगसिद्ध्यै तु पुनर्नियुज्यते ।
परत्र कर्मस्वथ वा निवृत्तिषु
स्थितिः प्रसिद्धेति नियोगवादिनाम् ॥ ४२४ ॥

नियोगइति । नित्यवाक्ये हि एव नियोज्यो नियोग एव नियुज्यते । नियोगत्वाकारेण नियोगमेव कार्यतया जानाति ममेदं कार्यमिति । एवकारेण तस्य फलसाधनत्वाकारेण कार्यत्वं निराक्रियते । तदनन्तरं च स एव नियोज्यः । नियोगस्याभावार्थतया साक्षात्कृतिसाध्यत्वाभावात्तेन तद्विषये परत्र नियोगादन्यत्र कर्मसु प्रवृत्तिषु निवृत्तिषु वा नियुज्यते। नियोगनिष्पत्त्यर्थं प्रवृत्तिं निवृत्तिं वा कार्यत्वेनावगच्छतीति प्राभाकराणां स्थितिः । अतो नित्यनियोगवन्निवृत्तिनियोगस्यापि नियोगत्वाकारेण कृतिसाध्यत्वसम्भवान्न निवृत्तेः स्वविषयतायै अनर्थपरिहारहेतुत्वं नित्यनियोग इव स्वविषयस्य हितकारणत्वं नावेदयति । अत एव फलाभावे कथमस्य निवृत्तिरित्यपि नाशङ्कनीयम् । निवृत्तिनियोगसिद्धेरेव नित्यनियोगवत्पुरुषार्थत्वादतो न कथमपि निषिद्धचेष्टाया अनर्थहेतुत्वं सिद्धयति तद्बोधकाभावादित्यर्थः । नचैवं सति प्रायश्चित्तादिशास्त्रं व्यर्थं स्यादिति वाच्यम् । तस्य

कलञ्जभक्षणादिनैमित्तिकत्वेनाप्युपपत्तेः लोकविगर्हापरिहारार्थत्वाद्वा न तद्वैयर्थ्यमिति द्रष्टव्यम् ॥ ४२४ ॥

ननु निवृत्तेः प्रागभावरूपाया अनादिसिद्धाया नियोगं विनापि सिद्धत्वात्किमर्थं तत्र पुरुषो नियुज्यते—ननु न निवृत्तिः प्रवृत्तिविरहः किंत्वन्यैव अन्यथा वैपरीत्यस्याप्यापत्तेरिति चेन्न—प्रवृत्तिविरहव्यतिरिक्तनिवृत्तिकल्पने गौरवात् । न च वैपरीत्यं सुषुप्तौ तद्विरहसत्त्वेन प्रवृत्तिकार्यापातात् । न च तत्र निवृत्तिविरहासिद्धिः । तत्कारणद्वेषाद्यभावेन तत्सत्त्वादित्याशङ्क्याह--

**प्रवृद्धरागस्य निवृत्तयोऽस्थिरा-**
**स्ततः स्थिरत्वाय नियुज्यते पुमान् ।**
**निवृत्तिदेशेषु नियोगबुद्धितो**
**निवृत्तिमूर्ध्वं परिपालयिष्यति ॥ ४२५ ॥**

प्रवृद्धरागस्येति । यतः प्रवृद्धः उत्कटरागो यस्य पुरुषस्य स प्रवृद्धरागस्तस्य अस्थिरा नश्वराः निवृत्तयो भवेयुरिति शेषः । ततः स्थिरत्वाय निवृत्तेः स्थैर्याय निवृत्तिदेशेषु निवृत्तिरूपविषयेषु । निवृत्तिभेदेष्विति पाठे तत्तन्निवृत्तिष्वयं पुमान्नियुज्यते । किमर्थमित्यत आह—नियोगेति । अयं नियुक्तः पुमान् नियोगबुद्धितः निवृत्तिनियोगबुद्धितः ऊर्ध्वमुत्कटरागानन्तरमपि निवृत्तिं परिपालयिष्यति । कालान्तरावस्थानयोग्यां करिष्यतीति कृत्वेत्यर्थः । निवृत्तेः स्वभावसिद्धत्वेपि भक्षणादिरागोल्वणे सति प्रवृत्त्या तद्ध्वंसप्रसक्तौ नियोगबुद्ध्या तत्परिपालनार्थमेव तत्र नियुज्यत इति न नियोगवैयर्थ्यमित्यर्थः ॥ ४२५ ॥

ननु भवत्पक्षे भावातिरिक्ताभावाभावान्निवृत्तेरेवासत्त्वात्कथं

निवृत्तिविषयो नियोगो निषेधवाक्येन प्रतिपाद्यते निवृत्तेरक्रियात्वेन कथं तद्विषयो नियोगः प्रतिपाद्यतामित्याशङ्क्याह—

अनाद्यजग्धेश्च निवृत्तिरिष्टा
विशिष्टदन्तौष्ठनिविष्टसंवित् ।
अनन्यसंसर्गिपदार्थसंवि-
न्निवृत्तिरित्येष हि राजमार्गः ॥ ४२६ ॥

अनाद्यजग्धेश्चेति । अदनानर्हमनाद्यं कलञ्जाद्यभक्ष्यमिति यावत् । तस्य जग्धिर्भक्षणं तस्याः अविशिष्टदन्तोष्ठनिविष्टसंवित् अविशिष्टं परस्परासम्बद्धं निर्व्यापारं यद्दन्तोष्ठं तन्निविष्टा तद्विषयिणी या संविद्भक्षणाद्यनुकूलव्यापारशून्यदन्तोष्ठज्ञानमेव भक्षणादिनिवृत्तिरिति द्रष्टव्यमित्यर्थः । तत्र हेतुमाह—अनन्यसंसर्गीति । अधिकरणव्यतिरिक्तं प्रतियोग्यन्यदन्यसंसर्गी न भवतीत्यनन्यसंसर्गी स चासौ पदार्थस्तद्विषयसंवित्प्रतियोगिमदधिकरणातिरिक्ताधिकरणज्ञानमित्यर्थः । अतिरिक्तत्वं च भिन्नत्वं भावस्वरूपमेवेति नातिरिक्ताभावप्रसक्तिरित्यर्थः । प्राभाकरपक्षे प्रतियोगिमद्भिन्नाधिकरणज्ञानस्यैवाभावत्वात्केवलदन्तोष्ठज्ञानमेव भक्षणादिनिवृत्तिः तत्प्रवाहपरिपालनाय च तदनुकूलव्यापारे पुरुषो नियुज्यत इति निवृत्तिनियोगो निषेधवाक्येन प्रतिपाद्यत इत्यर्थः ॥ ४२६ ॥

ननु लशुनभक्षणादिगतश्रेयःसाधनत्वमेव लिङ्वाच्यं भवतीति तदभावमेव नञ् बोधयतीत्याशङ्क्य पूर्वोक्तदूषणपरौ श्लोकौ—

ननु समीहितसाधनता लिङो
लशुनगृञ्जनभक्षणसंश्रया ।

भवति वाच्यतयाऽभिमताऽस्य नो
नञपि तद्विनिवृत्तिनिवेदकः ॥ ४२७ ॥
तदसदिष्टफलोद्भवदर्शना-
ल्लशुनगृञ्जनपर्युषिताशनात् ।
न हि निषिद्धपदार्थनिमित्तकः
सुखलवः पुरुषस्य न विद्यते ॥ ४२८ ॥

नन्वित्यारभ्य न विद्यत इत्यन्तौ स्पष्टार्थौ। गृञ्जनं रक्तमूलविशेषः सुखलवस्तादात्विकं सुखं तस्मात्सर्वमपि निषेधवाक्यं निवृत्तियोग-निष्ठमेवेति भावः ॥ ४२७ ॥ ४२८ ॥

एवं पूर्वपक्षिते यदुक्तं प्राभाकरेण नञ इष्टसाधनत्वेनान्वयेपि प्रत्यक्षविरोध इति तद् दूषयति—

अदृष्टदोषं परिहृत्य शंसतः
कलञ्जमास्वाद्य सुखित्वमात्मनः।
पुमानबोधोपहतः समीहते
तदीहिताभावपरा निषेधगीः ॥ ४२९ ॥

अदृष्टदोषमिति । निषेधगीर्नञ्शब्दः कलञ्जमास्वाद्य भक्षयित्वा आत्मनः स्वस्यादृष्टदोषं परिहृत्य पारलौकिकं दुःखं परिहृत्य वर्ज-यित्वा सुखित्वं शंसतः कथयतः कलञ्जभक्षणादिना बलवदनिष्टा-ननुबन्धीष्टं मे भवत्विति कथयत इत्यर्थः । ईहिताभावपरा ईहित-मिच्छाविषयो बलवदनिष्टाननुबन्धीष्टसाधनत्वमिति यावत् तदभाव-परेत्यर्थः। न कलञ्जं भक्षयेदिति नञा कलञ्जभक्षणादेः बलवदनिष्टा-ननुबन्धीष्टसाधनत्वमेव निषिद्ध्यते नेष्टसाधनत्वमात्रम् । नचैवं

सति प्रत्यक्षविरोधः तादृशेष्टसाधनत्वस्य प्रत्यक्षविषयत्वात्। नचैवं तर्हि कथमप्रसक्तं निषिध्यत इति वाच्यम्। प्रसक्तिपूर्वमेव निषेधात्। न च तत्र मानाभावः। तद्व्यवहारस्यैव मानत्वात्तदिदमुक्तमदृष्टदोषं परिहृत्य सुखित्वमात्मनः शंसत इति। नन्वेवं तत्कथनं परस्यैव एतत्प्रसक्तौ मानमस्य तु सा प्रसक्तिः केनेति वाच्यं—प्रत्यक्षातिरिक्तमानान्तरेणेति चेन्न—प्रमाणतः प्रसक्तस्य प्रतिषेधानुपपत्तेरित्याशङ्क्याह—पुमानिति। यत एवं पुमानबोधोपहतः कलञ्जभक्षणगतेष्टसाधनत्वस्य ज्ञानेन बलवदनिष्टानुबन्धित्वापरिज्ञानेनोपहतः सन् समीहते। कलञ्जभक्षणादिना तादृशं सुखं वाञ्छति तत्तस्मादित्यर्थः। तथा च तत्प्रसक्तेर्भ्रान्तित्वान्न तन्निषेधानुपपत्तिरिति भावः॥ ४२९॥

पूर्वश्लोकोक्तमदृष्टदोषमेव विशदयति—

**नरकपातविवर्जनवर्त्मना**
**भवतु विप्रवधात्परमार्थतः।**
**मम सुखित्वमितीच्छति यत्पुमा-**
**न्न तदितीह निषेधगिरोच्यते॥४३०॥**

नरकपातेति। नरकपातं विनेत्यर्थः। परमार्थतो वस्तुत इह न हन्यादित्यादिवाक्ये ब्रह्महननादिना नरकपातं विनैव मम सुखित्वं भवत्विति यद्ब्रह्महननादेर्बलवदनिष्टाननुबन्धीष्टसाधनत्वमिच्छति तद्धननादेस्तादृशेष्टसाधनत्वं परमार्थतः नञा निषिध्यत इत्यर्थः॥४३०॥

परमार्थत इत्येतत् विवृण्वन्निषेधप्रकारमेवाह प्रमाणत इत्यादिना सार्द्धश्लोकेन—

**प्रमाणतो नास्ति निषिद्धकर्मणः**
**फलस्पृहाऽदृष्टभयं विना तव।**

**भ्रमादबोधप्रभवात्प्रवर्त्तसे**

**न तात मानेन फलस्पृहाऽत्र ते ॥४३१॥**

**इति श्रुतिः शास्ति निषिद्धकर्मणि**

**प्रवृत्तिमन्तं पुरुषं नञन्विता ।**

**नचायमर्थोपहतः प्रमान्तरैः**

**न हि प्रमाणैरपरैर्विरुध्यते ॥ ४३२ ॥**

प्रमाणात इति । निषिद्धकर्मणि प्रवृत्तिमन्तं पुरुषं प्रति नञन्विताश्रुतिर्निषेधवाक्यं तत्र निषिद्धकर्मणः कलञ्जभक्षणादेः फलस्पृहा फलसाधनत्वं प्रमाणतो न प्रमाणविषयो भवतीति शास्तीति सम्बन्धः । नन्विदं श्रेयःसाधनं कलञ्जभक्षणादित्वात्पूर्वमनुभूतकलञ्जभक्षणादिवदित्यनुमानविषयत्वात्कथं तस्य प्रामाणिकत्वं निषिद्धयते तत्राह—अदृष्टभयं विनेति । नरकदुःखं विना यद्यपि कलञ्जभक्षणस्य फलसाधनत्वं प्रमाणतोऽनुभूयते । तथापि तस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वं न प्रमाणतोऽनुभूयत इति तन्निषेद्धुं शक्यत इत्यर्थः । ननु बलवदनिष्टाननुबन्धीष्टसाधनत्वप्रमितेः प्रवर्त्तकत्वादत्रापि सास्तीति वक्तव्यमन्यथा प्रवृत्त्यनुपपत्तेरिति चेन्न—यथार्थप्रवृत्तौ हि तादृशी कारणमयथार्थप्रवृत्तौ तद्भ्रान्तिरेव हेतुः । सा चात्राप्यस्तीत्याह—भ्रमादबोधप्रभवादिति । नन्वियमपि प्रवृत्तिर्यथार्था किं न स्यात्तत्राह—न तात मानेनेति । अत्र कलञ्जभक्षणादौ फलस्पृहा विवक्षितफलसाधनत्वं न मानेन विषयीक्रियते न विद्यत इत्यर्थः । कलञ्जभक्षणादेर्हि तत्र तत्र श्रुतौ स्मृतौ च नरकहेतुत्वमवगम्यते । अतोऽस्य बलवद् दुःखाननुबन्धीष्टसाधनत्वाभावान्न तत्साधनत्वमस्येति यतोऽतोऽबोधप्रभवात्तस्य बलवदनिष्टननुबन्धीष्टसाधनत्वभ्रमात्प्रवर्त्तसे ततो-

ऽस्य प्रामाणिकत्वनिषेधो युज्यत इत्यर्थः। यद्यपि निषेधवाक्यं कलञ्जभक्षणादिबलवदनिष्टाननुबन्धीष्टसाधनं न भवतीत्येव निषेधति न तु तत्प्रामाणिकत्वमपि तस्य प्रत्ययेनानुपस्थितत्त्वात्तथापि श्रुति-निषेधार्थसिद्धानुवादोयमिति द्रष्टव्यम्। ननु बलवदनिष्टाननुबन्धी-ष्टसाधनत्वाभावो नञर्थो न भवति लाघवात्तद्विशेषणीभूतेच्छाभावस्यैव नञर्थत्वेन तत्सिद्धौ विशिष्टाभावस्यार्थासिद्धत्वादितिचेत्तत्राह-न चेति। अयं वर्णितेष्टसाधनत्वाभावोऽर्थोपहृतः अर्थात् विशेषणीभूतेच्छाभावा नुपपत्त्योपहृतः आनीतः सिद्धः प्रमान्तरैरिच्छाभावविषयज्ञानान्तरैः। अथवा अर्थः अपहृत इतिच्छेदः। अर्थो वर्णितेष्टसाधनत्वाभावरूपोऽर्थः अपहृतो बाधितः नञर्थत्वेनेति शेषः। प्रमान्तरैरर्थापत्त्यादिप्रमा-णान्तरैः प्रमाणान्तरसिद्धत्वे ह्यस्य नञर्थता न स्यात्तदेव नास्तीत्यर्थः। यदीच्छाभावो नञर्थो भवेत्तदा तद्विशिष्टेसाधनत्वाभावोऽर्थसिद्धो भवेत् न त्वेदस्ति केवलायाः प्रार्थनायाः प्रत्ययार्थत्वाभावेनानुप-स्थिततया नञर्थस्य तयान्वयाभावात्। ननु प्रार्थनापि प्रत्ययार्थ-विशेषणतया प्रत्ययेनोपस्थितेति चेन्न—तथापि तस्या विशेषणत्वे-नोपसर्जनतया नञस्तदन्वयानुपपत्तेः। ननु निषेधवाक्ये इच्छैव लिङर्थ इति चेन्न - अन्यत्रेष्टसाधनत्वस्यैव लिङर्थत्वात्तस्यैवात्राप्य-नुवादार्हत्वात्प्रयोगभेदेन चार्थभेदकल्पनायां वाक्यार्थाव्यवस्थाप्रस-ङ्गात्। ननु पञ्चपादिकायां सनन्दनाचार्यैः प्रतिपाद्यधर्मः प्रतिषिध्य-मानक्रियाफलः प्रार्थनाप्रतिषेधवाक्ये लिङाद्यर्थस्तेन तदभावः प्रति-षेधार्थ इति प्रतिपाद्योऽधिकारी तद्धर्मः प्रार्थनेच्छानिषेधवाक्ये लिङर्थस्तदभावश्च नञर्थ इत्युक्तमिति चेन्न। तत्रापि प्रतिपाद्य धर्मोनुष्ठेयधात्वर्थधर्मः प्रतिषिध्यमानक्रियाफलो निवर्त्यमानक्रिया-फलः प्रार्थ्यत इति प्रार्थना फलसाधनत्वमित्यर्थ इति तद्व्याख्या-तृभिस्तद्ग्रन्थस्य व्याख्यातत्त्वात्तस्मादिष्टसाधनत्वैनैव प्रत्ययोपस्था-पितेन नञोऽन्वयात्तदभाव एव नञर्थ इत्यर्थः। अस्मिन्पक्षे न पूर्वोक्त-

प्रत्यक्षविरोधोऽप्यस्तीत्याह—न हि प्रमाणैरिति । बलवदनिष्टाननुबन्धीष्ट-साधनत्वांशस्य प्रत्यक्षाद्यगोचरत्वादतो नञ्वाक्यमभावमात्रनिष्ठ-मित्यर्थः ॥ ४३१ ॥ ४३२ ॥

ननु विध्यन्वितनञ्वाक्यस्य नियोगपरत्वे तूदाहरणमस्ति । न निषेधपरत्वे तूदाहरणमित्याशङ्क्योदाहरणमाह—

भुजङ्गभोगं सुकुमारशीतलं
निदाघसंतापनिवृत्तये शिशुम् ।
प्रमादुपादित्सुमुदीक्ष्य कातरा
निवर्त्तयेत्तज्जननी यथा तथा ॥४३३॥

प्रमादनर्थस्य निदानमादरा-
त्कृतार्थतायै लशुनादिभक्षणम् ।
नञन्विता वैदिकचोदनाप्यसौ
विधित्सुमालक्ष्य निवर्त्तयिष्यति॥४३४॥

भुजंगभोगमिति । सुकुमारशब्दो मृदुपर्यायः । दार्ष्टान्तिकमाह—तथेत्यादिना । कृतार्थतायै कृतः प्राप्तो बलवदनिष्टाननुबन्धी सुखलक्षणो ऽर्थो येन तस्य भावस्तत्ता तदर्थं तादृशसुखप्राप्तय इत्यर्थः । विधित्सुं चिकीर्षुं यथा लोके मालादिबुद्ध्या सर्पमुपादित्सुं स्वशिशुमिरीक्ष्य जननी सर्पोपादानेन पुत्रस्य महाननर्थः स्यादिति बुद्ध्या मैनं गृहाण वत्स सर्पोऽयमनर्थकारीति निवृत्तिमात्रमभिप्रेत्याह यथा वा तं हस्तेन वारयति न किंञ्चित्कारयति तथा श्रुतिरपि केवलं निषेधतीत्यर्थः ॥ ४३३ ॥ ४३४ ॥

एवं स्वमतेन नञो विध्यन्वयेन प्रसक्तप्रतिषेधपरत्वमुपपाद्य पराभिमतनियोगनिष्ठत्वमपि दूषयति—

क्रियानुप्रवेशं विना प्रागभावः
प्रसक्तक्रियाया न निर्वोढुमीशः ।
गुणद्रव्यवन्नित्यनिष्पन्नभावा-
त्पदत्वं नियोगस्य भावार्थवद्धः ॥४३५॥

क्रियानुप्रवेशं विनेति । निवृत्तिप्रयोगविषयः प्रवृत्तिप्रागभाव एव स चाक्रियात्वान्न भावार्थवत् स्वतो नियोगविषय भावार्थविषयत्वा-त्तस्य । नन्वक्रियात्वेपि दध्यादिद्रव्यवदारुण्यादिगुणवच्च नियोग-विषयत्वं किं न स्यादिति चेन्न । दध्यादेरक्रियात्वेपि क्रियोपरक-त्वाकारेण तद्विषयत्वं तस्य क्रियासाधनत्वात् । न च प्रागभावस्या-क्रियासाधनस्य क्रियानुप्रवेशोऽस्ति । ततो नित्यनिष्पन्नभावान्नियोगं विनापि सिद्धत्वाद्दध्यादिवत् क्रियानुप्रवेशाभावाच्च प्रसक्तिक्रियायाः प्रवृत्तेः प्रागभावो नियोगस्य पदत्वं विषयत्वं निर्वोढुं स्वस्मिन्स-म्पादयितुं नेशो न समर्थः । नित्यनिष्पन्नेत्यनेन भावार्थवैलक्षण्यमुक्तं क्रियानुप्रवेशेत्यनेन दध्यादिवैषम्यमिति द्रष्टव्यम् ॥ ४३५ ॥

ननु नञ्वाक्यस्य परिपाल्यमाननिवृत्तिनियोगनिष्ठतया तदनु-कूलपरिपालनात्मकभावार्थोपि प्रतीयत एवेति तस्य नियोगविषयत्वं दध्यादिवत्संभवतीत्याशङ्क्याह—

न पाल्यत्वयोगादलंभूष्णुभावो
यतः पालनं श्रूयते नात्र वाक्ये ।
न खल्वश्रुतं गृह्यते न्यायहाना-
द्यथा न श्रुतं त्यज्यते तद्वयेन ॥ ४३६ ॥

न पाल्यत्वयोगादिति। परिपालनक्रियासम्बन्धादित्यर्थः। अलंभूष्णुभाव-अलंभूष्णुता नियोगविषयता समर्थत्वमिति यावत्। निवृत्तेरिति शेषः। ननु पालनक्रियासम्बन्धे कथं न नियोगविषयत्वसामर्थ्यमित्याशङ्क्य तत्सम्बन्धाभावादेव तदसामर्थ्यमिति विवक्षन् तत्सम्बन्धाभावे हेतुमाह—यत इति। अत्र वाक्ये न कलञ्जं भक्षयेदित्यादिवाक्ये पालनस्यापदार्थत्वादवाक्यार्थत्वाच्चेत्यर्थः। यतः पालनं न श्रूयते ततः प्रमाणाभावेन तदभावात्पाल्यत्वयोगादपि निवृत्तेरलंभूष्णुभावो नेति सम्बन्धः। नन्वश्रूयमाणत्वेपि लक्षणया तत्परत्वं नञ उपवर्णयितुं शक्यत इत्याशङ्क्याह—खल्वश्रुतं गृह्यत इति। यथाश्रुतहानिप्रसङ्गादिति न्यायभयेन श्रुतं न त्यज्यते तथाऽश्रुतमपि न गृह्यते। श्रुतोपपत्तावश्रुतकल्पना न न्याय्येति न्यायविरोधादित्यर्थः॥ ४३६॥

निषेधवाक्यस्य निवृत्तिनियोगनिष्ठत्वेऽश्रुतकल्पनावच्छ्रुतहानिरपि स्यादित्याह—

उदासीनता च श्रुता नञ्पदार्थो
नियोगे सति त्याज्यतां याति सद्यः।
अतद्योग्यभावादयोग्यः पदार्थो
न वाक्यार्थभागिष्यते जैमिनीयैः॥ ४३७॥

उदासीनतेति। उदासीनता औदासीन्यं प्रवृत्त्यभावः। तत्प्रयोजकेष्टसाधनत्वाभाव इति यावत्। नाग्नें करिणीत्यादौ नञः स्वसंसृष्टाभावबोधित्वादत्रापि प्रत्ययार्थीभूतेष्टसाधनत्वाभाव एव नञा श्रूयते। स च नियोगे सति अनुष्ठेयार्थविषयनियोगे प्रतिपाद्ये सति त्याज्यतां याति परित्यक्तो भवति। कुतोऽतद्योग्यभावात्तद्योग्यत्वस्य नियोगविषयतायोग्यत्वस्याभावादित्यर्थः। नन्वतद्योग्यत्वेपि तस्य नियोज्यवन्नियोगेनान्वयस्तत्राह—अयोग्यः पदार्थ इति। वाक्यार्थो

नियोगः तद्भाक् तदन्वयीत्यर्थः। नियोज्यातिरिक्तस्य विषयस्यैव तैर्नियोगान्वयाङ्गीकारादिति भावः। नचास्मत्पक्षे केवलाधिकरणज्ञानस्यैवाभावात्तस्य साध्यतया नियोगविषयत्वयोग्यत्वान्न श्रुतत्याग इति वाच्यम्। केवलाधिकरणज्ञानस्य नियोगं विनापि सिद्धतया तद्विषयत्वायोग्यत्वादधिकरणज्ञानस्याभावत्वाप्रसिद्धेश्चेति भावः॥ ४३७॥

किञ्च निषिद्धक्रियायाः प्रत्यवायहेतुत्वसिद्ध्यर्थमस्मदुक्तमेव नञ्वाच्यम्। न च निषिद्धक्रियायाः प्रत्यवायहेतुत्वमेव नास्तीति शङ्क्यम्। नास्तिकतापातात्। न च तत्र प्रमाणाभावो ऽविगीतवृद्धप्रसिद्धेरेव तत्र प्रमाणत्वादिति तावदाह—

निषिद्धक्रिया प्रत्यवायाय नेति
स्वकर्णौ जनः प्रोर्णुते पापभीरुः।
समाकर्ण्य दुर्भाषितं पार्श्ववर्त्ती
न पापात्परं किञ्चिदेतादृगन्यत्॥ ४३८॥

निषिद्धक्रियेति। पापभीरुर्जनो निषिद्धानुष्ठानात्प्रत्यवायो नास्तीति दुर्भाषितं दुर्भाषणमाकर्ण्यैतादृक्पापाक्षरं पापजनकमतोऽन्यत्किञ्चिन्नास्तीति कराभ्यां स्वकर्णौ प्रोर्णुते पिधत्त इति सम्बन्धः। ननु वृद्धप्रसिद्धेः प्रत्यक्षाद्यन्यतमत्वाभावात्कथं तया वस्तुसिद्धिरिति चेन्न—स्मृतिश्रुतिमूलवत्तया तस्याः प्रमाणत्वादिति भावः॥ ४३८॥

सुखदुःखवैचित्र्यान्यथानुपपत्तिरपि निषिद्धक्रियायाः पापहेतुत्वे प्रमाणमित्यभिप्रेत्याह—

निषिद्धक्रिया प्रत्यवायाय नो चे-
त्तदा दुःखमाकस्मिकं सर्वपुंसाम्।

**सुखं पुण्यमूलं यथा सर्वपुंसां**

**तथा दुःखमप्यस्तु वः पापमूलम् ॥ ४३६ ॥**

निषिद्धक्रिया प्रत्यवायाय नो चेदिति । आकस्मिकमहेतुकं स्यादिति शेषः । लोके हि दृष्टहेतुसाम्येऽपि कस्य चित्सुखं कस्यचिद् दुःखमिति वैचित्र्यं दृश्यते । तच्चासाधारणकारणवैचित्र्यं विनानुपपन्नम् । अन्यथा निर्हेतुकत्वापातात्कारणं चासाधारणं सुखस्य पुण्यमिव दुःखस्य पापादृष्टमेव । पापे च यदि निषिद्धक्रिया न कारणं तदा पापाभावात् दुःखं न स्यात्तस्माद्दुःखान्यथानुपपत्तिरपि तत्र प्रमाणमित्यर्थः । ननु दुःखे पापव्यतिरेकेणान्यदेव किञ्चिद्व्याध्यादिकं कारणमस्तु तत्राह पापमूलमिति च बहुव्रीहिः । पापव्यतिरेकेण श्रुतौ स्मृतौ च दुःखहेत्वप्रसिद्धेर्व्याध्यादेरपि तन्मूलकत्वात्पापमेव तन्मूलमित्यर्थः ॥ ४३६ ॥

ननु दुःखं पापहेतुकं भवतु पापं तु निषिद्धक्रियाहेतुकं मा भूत् न चैवं पापस्याकस्मिकत्वं विहिताकरणादेव तदुपपत्तेरित्याशङ्क्याह—

**निषिद्धक्रियां चोदितस्याक्रियां वा**

**विना नास्ति पापस्य निष्पत्तिहेतुः ।**

**ततस्तद्द्वयं पापनिष्पादकत्वा-**

**द्भवेत्प्रत्यवायस्य नित्यं निदानम् ॥४४०॥**

निषिद्धेति । चोदितस्य विहितस्याक्रियाऽकरणम्, एतच्च दृष्टान्तार्थम् विनिगमनाभावाद्विहिताकरणवन्निषिद्धकरणस्यापि पापहेतुत्वमित्यर्थः । ननु विहिताकरणस्य पापहेतुतायाः सर्वसम्प्रतिपन्नत्वात् तत एव दुःखजन्मोपपत्तेः किं निषिद्धकरणस्यापि तत्कल्पनयेत्याशङ्क्य न वयं कल्पयामः किन्तु कपूयचरणाः कपूयां योनिमापद्यन्त इत्यादिश्रुतिसिद्धं तदित्यभिप्रेत्याह— तत इति । निषिद्धक्रिया

कपूयः। तस्य दुःखहेतुत्वं श्रूयते। ततः पापनिष्पादकात्पापशब्देन दुःखमुच्यते। दुःखोत्पादकत्वाद्विहिताकरणवत्प्रत्यवायस्य नित्यं निमित्तमित्यर्थः॥ ४४०॥

ननु कपूयचरणा इत्यादिश्रुतेः निषिद्धाचरणनिन्दाद्वारा रमणीयचरणप्रशंसापरत्वादर्थवादव्यतिरिक्तप्रमाणान्तरस्याभावाद्विहिताकरणमेव प्रत्यवायकारणमित्याशङ्क्य भवन्मते विहिताकरणस्य पापहेतुत्वमेव नास्तीत्याह—

निषिद्धक्रिया दुःखनिष्पत्तिहेतु-
र्भवेल्लक्षणं चोदितस्याक्रियाऽस्य।
अभावान्न भावस्य निष्पत्तिरिष्टा
भवेल्लक्षणं ज्ञायमानस्त्वभावः॥४४१॥

निषिद्धक्रियेति। चोदितस्याक्रियाऽकरणमस्य प्रत्यवायस्य लक्षणं ज्ञापकं न तु निष्पादकमित्यर्थः। तत्र हेतुः—अभावादिति। यतोऽभावाद्भावोत्पत्तिर्मीमांसकैर्नेष्यते। विशेषतश्च प्राभाकरेण त्वया नित्याकरणस्य प्रत्यवायहेतुत्वमङ्गीकर्त्तुमशक्यं तथा सति नित्यानामपि प्रत्यवायनिवृत्तिफलत्वप्रसङ्गान्निवृत्तेस्तुच्छत्वेनाफलत्वे वाऽकरणस्यापि तत्त्वेनाहेतुत्वात्तथा च निषिद्धक्रियैव पापहेतुर्वक्तव्या। नित्याकरणन्तु तत्कालानुष्ठिताविहितक्रियान्तरेण तदङ्गीकारेण विगीतेन प्रत्यवायो भविष्यतीति ज्ञापयतीति भावः। तदुक्तं "स्वकाले यदकुर्वन्नकरोत्यदन्यदचेतनः?। प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यत" इति। ननु कथं तर्हि लक्षणमपि भवेत्तत्राह-ज्ञायमानस्त्वभाव इति। नित्याकरणस्याभावत्वेपि ज्ञायमानतया ज्ञापकत्वं न विरुध्यते। कारणत्वे हि तस्य सत्त्वमपेक्ष्यते। ज्ञापकत्वं त्वसत्त्वोऽपि सम्भवति।

अविद्यमानस्यापि धूमस्य स्मर्यमाणस्य वह्निज्ञापकत्वात्सर्वस्य वस्तुनो विनाशादूर्ध्वमसत्त्वाच्चेत्यर्थः ॥ ४४१ ॥

ननु निषिद्धकरणस्य प्रत्यवायहेतुत्वे प्रमाणाभाव इति चेन्न । उक्तश्रुतेरेव मानत्वात् । नचार्थवादतया तस्या अमानत्वम् । अस्मन्मते प्रमाणान्तराविरुद्धेऽर्थवादस्य प्रामाण्याङ्गीकारात् । नचार्थवादस्य स्वातन्त्र्यानुपपत्तिः निषेधविध्यनुपपत्तिपरिगृहीतत्वाद्विध्यनुपपत्तेरपि विधित्वादित्यभिप्रेत्याह--

निवृत्तिनिष्ठे तु निषेधवाक्ये
निषिद्धकर्माचरणादनर्थः ।
प्रतीयतेऽर्थादिति तत्र युक्तं
दुःखं नृणां दुश्चरितैकमूलम् ॥ ४४२ ॥

निवृत्तिनिष्ठे त्विति । तु शब्दो नियोगपक्षादस्य वक्ष्यमाणं विशेषमाह– अनर्थः स्यादिति शेषः । अर्थादनुपपत्त्या तत्र निषेधवाक्यस्याभावपरत्वपक्षे दुश्चरितैकमूलं निषिद्धकर्मैकजन्यं न तु नित्याकरणजन्यमित्यर्थः । निषेधवाक्येन कलञ्जभक्षणादेः सुखसाधनस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वे निषिद्धे विशिष्ये सति विशिष्टाभावस्य विशेषणाभावं विनानुपपत्तेः । विशेषणस्य बलवदनिष्टाननुबन्धित्वस्याभावो बलवदनिष्टानुबन्धित्वं कलञ्जभक्षणादेः सिध्यति । तच्च प्रत्यवायहेतुत्वं विना तस्य न भवतीति भावः । प्रायश्चित्तविध्यनुपपत्तिश्च निषिद्धक्रियायाः पापहेतुत्वे प्रमाणम् । न च नैमित्तिकं तत्प्रत्यवायनिवृत्तिफलश्रवणान्मरणान्तप्रायश्चित्तानुपपत्तेश्चेति द्रष्टव्यम् ॥ ४४२ ॥

एवं लिङ्गादेर्नियोगपरत्ववादिमतेन निषेधवाक्यस्य निवृत्ति-

नियोगनिष्ठत्वं दूषितं संप्रतीष्टसाधनत्वं लिङर्थः नञः पर्युदासा-श्रयणेनानिष्टसाधनत्वं निषेधवाक्यार्थ इति मतं प्रसङ्गाद् दूषयति—

समीहितोपायतया लिङन्वया-
त्प्रतीयमानस्य तु भक्षणादिनः ।
न पर्युदासाश्रयणेन नञ्पदा-
दनिष्टहेतुत्वमतिर्भविष्यति ॥ ४४३ ॥

समीहितोपायतयेति । लिङन्वयात्समीहितोपायतया प्रतीयमानस्य भक्षणादिन कलञ्जभक्षणहननादेः तुशब्दोऽवधारणे हननादेस्तु पर्युदासवृत्त्या नञ्पदादनिष्टहेतुत्वमतिर्नैव भविष्यतीति सम्बन्धः । अभावस्यैव नञो मुख्यार्थत्वादित्यर्थः ॥ ४४३ ॥

ननु कोऽयं निर्बन्धोऽभाव एव नञर्थ इत्यन्यत्रापि प्रयोगदर्शना-दित्याशङ्क्य तदेवोपपादयति—

तथा हि सम्बन्ध्युपमर्दबुद्धये
समर्थमुत्सर्गमपेक्ष्य नञ्पदम् ।
न पर्युदासाय विनाऽपवादकं
ततो निवृत्त्यर्थपरं तदिष्यते ॥ ४४४ ॥

तथा हीति । यथा नञोऽभाव एवार्थः तथा नञ्पदमुत्सर्गमपेक्ष्यो-त्सर्गतः स्वसम्बन्ध्युपमर्दस्याभावस्य बुद्धये समर्थं तथैवावगीतप्रयो-गप्रत्यययोर्दर्शनादन्यथानेकार्थत्वप्रसङ्गाच्चेत्यर्थः । नन्वस्त्वभाव एव नञो मुख्योऽर्थो लक्षणयानिष्टसाधनत्वपरः किं न स्यात् न हि लोके लाक्षणिकोऽर्थो नास्ति तत्राह—न पर्युदासायेति । अपवादकं विना पर्यु-

दासाय न समर्थमिति सम्बन्धः । तच्चात्र नास्ति । यतस्ततो नञ्पदम-भावमात्रपरमेवेष्यतामित्यर्थः । तन्नञ्पदम् ॥ ४४४ ॥

नन्वनिष्टसाधनताज्ञानस्य लोके निवर्त्तकत्वदर्शनादत्रापि तद् वक्तव्यम् । न च तल्लक्षणां विनापि सिध्यतीत्युत्सर्गस्यापवादसत्वा-त्पर्युदासनिष्ठत्वमेव नञ इत्याशङ्क्याह—

**अतः प्रसज्यप्रतिषेधसंभवा-**
**न्न पर्युदासाश्रयणं प्रशस्यते ।**
**न पर्युदासाश्रयणं विना भवे-**
**दनिष्टहेतुत्वनञर्थकल्पना ॥ ४४५ ॥**

अतः प्रसज्येति । अतः शब्दार्थमाह—प्रसज्यप्रतिषेधेति । प्रसक्तप्रतियो-गिकनिषेधस्याभावस्य संभवादित्यर्थः । यज्ज्ञानं प्रवर्त्तकं तदभाव-ज्ञानमेव निवर्त्तकं प्रवर्त्तकज्ञानं चेष्टसाधनत्वविषयमिति तदभावज्ञानमेव निवृत्तौ कारणं न त्वनिष्टसाधनताज्ञानं निवर्त्तकमिति न पर्युदास-बीजमस्तीति भावः । ननु माभूत्पर्युदासाश्रयणं का क्षतिरित्या-शङ्क्यानिष्टसाधनत्वस्य नञर्थत्वमेवाक्षतमित्याह—न पर्युदासाश्रयणमिति । अनिष्टहेतुत्वनञर्थकल्पनानिष्टहेतुत्वस्य नञर्थत्वकल्पनेत्यर्थः ॥४४५॥

ननु बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थः नञ्शब्दश्च तदभावं बोधयन् सति विशेष्ये सविशेषणे हीति न्यायेन विशेषणी-भूतबलवदनिष्टाननुबन्धित्वाभावं बलवदनिष्टानुबन्धित्वमेव विषयी-करोति । तथा च विनापि पर्युदासं नञ्शब्दोऽनर्थसाधनत्वपर इति चेत्तत्राह—

**अभीष्टहेतुत्वलिङर्थपृष्ठतो**
**ह्यनर्थहेतुत्वनञर्थकल्पना ।**

न पर्युदासं परिहृत्य कल्प्यते
न पर्युदासः प्रतिषेधसंभवात् ॥ ४४६ ॥

अभीष्टेति। प्रतियोगिवाचिना तदभावो लक्ष्यते। यतो बलवद-निष्टाननुबन्धीष्टसाधनत्वाख्यलिङर्थाभावबोधानन्तरमेवानर्थहेतुत्वनञ-र्थकल्पना—अनर्थहेतुत्वाख्यभवदभिमतनञर्थस्य कल्पना प्रतीति-स्ततस्तस्य तत्त्वं पर्युदासं परिहृत्य लक्षणां विना न कल्प्येत। स च न सम्भवति। असति बाधके मुख्यार्थपरित्यागायोगादित्यर्थः। एतदुक्तं भवति नञ्शब्दो हि स्वसम्बन्धिपदार्थाभाववाचको लिङा-दिसंसृष्टः तदर्थभूतबलवदनिष्टाननुबन्धीष्टसाधनत्वस्याभावमेव बोधयति न तु बलवदनिष्टानुबन्धित्वं तस्य प्रत्ययार्थतया नञस्त-दन्वयाभावात्। न च सविशेषेण हीति न्यायेन तस्य तद्विषयत्वं स हि न्यायो वाक्यार्थीभूतविशिष्टाभावं सति विशेष्ये विशेषणाभावे-नोपपादयति न तु विशेषणाभावमेव वाक्यार्थतया कल्पयति। विशेषणाभावस्य विशिष्टाभावादन्यत्वादतो बलवदनिष्टाननुबन्धि-त्वाभावो बलवदनिष्टानुबन्धित्वं स्वार्थीभूतविशिष्टाभावान्यथानुपप-त्त्यैव सिद्ध्यति। न तु शब्दान्मुखतः सिद्ध्यति। अतस्तस्य शाब्दत्व-कल्पनं लक्षणां विना न निर्वहतीति ॥ ४४६ ॥

तस्मान्निषेधवाक्यस्याभावमात्रपरत्वात्तस्य च कार्यविलक्षण-त्वान्न सर्वस्यापि वेदस्य कार्यपरत्वनियम इत्युपसंहरति—

प्रमाणमिच्छन्प्रतिषेधचोदनां
समस्तवेदस्य न कार्यगोचरम्।
प्रमाणभावं प्रतिपत्तुमीश्वरो
निषेधवाक्ये तदसंभवाद्यतः ॥ ४४७ ॥

प्रमाणमिति । प्रतिवक्तुं प्रतिज्ञातुं यतो नञ्शब्दस्याभाव एव मुख्योऽर्थ इति पर्युदासं विना न नियोगपरत्वमर्थान्तरपरत्वं वा । पर्युदासश्च मुख्यार्थबाधे स च न प्रकृते ततो निषेधवाक्ये तस्य कार्यपरत्वासंभवात्प्रतिषेधचोदनां प्रमाणमित्यङ्गीकुर्वन् समस्तस्य वेदस्य कार्यगोचरं प्रमाणभावं न प्रतिवक्तुमीश्वर इति सम्बन्धः ॥ ४४७ ॥

परमप्रकृतं कैमुतिकन्यायेनोपसंहरति—

अतो न वेदान्तवचःसु विद्यते
विधिर्नियोगो न च शब्दभावना ।
न कर्मकाण्डेऽपि नियोगतोऽस्त्यसौ
यतो निषेधेषु न विद्यते विधिः ॥ ४४८ ॥

अतो नेति । विधिरित्यस्यैव विवरणं नियोग इत्यादि । चशब्दादिष्टसाधनत्वमपीत्यर्थः । यतो निषेधवाक्येषु विधिर्न विद्यते अतः कर्मकाण्डेऽपि नियोगतो नियमतोऽसौ विधिर्नास्ति किं पुनर्विधिविरोधिवेदान्तवचःसु विधिर्नास्तीत्यत्रेति सम्बन्धः ॥ ४४८ ॥

अस्तु वा निषेधवाक्यस्य कार्यपरत्वं तथापि न वेदान्तानां कार्यपरत्वं संभवतीत्यभिप्रेत्याह—

उपेत्य वादं परिगृह्य चोच्यते
नियोगनिष्ठाऽस्तु निषेधगीरपि ।
तथापि वेदान्तवचःसु विद्यते
विधेर्न गन्धोऽपि विरोधकारणात् ॥ ४४९ ॥

उपेत्य वादमिति । अभ्युपगम्य वादमित्यर्थः । परिगृह्याश्रित्येत्यर्थः ।

अभ्युपगममेवाह—नियोगानिष्ठेति। गन्धोपि संभावनापीत्यर्थः। उक्तेऽर्थे हेतुः—विरोधकारणादिति। विरोधादसंभवादित्यर्थः॥ ४४९।

विरोधमेव वदन्विध्यभावमेवोपपादयति—

ज्ञानं विधातुं न हि शक्यमेत-
न्न शक्यते कर्त्तुमकर्त्तुमेतत्।
अतोऽन्यथा कर्त्तुमशक्यमेत-
त्प्रमाणमेयैकनिबन्धनत्वात्॥ ४५०॥

ज्ञानमिति। वेदान्तानां क्रियानियोगपरत्वमुच्यते। किं वा ज्ञाननियोगपरत्वम्। नाद्यः। तदप्रतीतेरित्यभिप्रेत्य द्वितीयं दूषयति—ज्ञानं विधातुमिति। कृतिसाध्येष्टसाधनत्वेन बोधयितुं तत्र हेतुमाह नहीत्यादिना। हि यत एतज्ज्ञानं कर्त्तुमिच्छया निष्पादयितुं न शक्यं यतश्चैतदिच्छयाऽकर्त्तुमप्यशक्यम् यतश्चैतदन्यथा कर्त्तुं विपरीततया वा कर्त्तुमशक्यं तत इत्यर्थः। यद्धि विधिजन्यपुरुषेच्छया नियमेन निष्पाद्यते तदभावे च न निष्पाद्यते स्वेच्छया अन्यथा वा निष्पाद्यते यथा षोडशिग्रहणमग्रहणं वा यथा वा स्वेच्छया अश्वेन गमनमगमनमन्यथा वा पद्भ्यां गमनं तदेव विधेयं ज्ञानं तु न तथा। अर्थेन्द्रियसंप्रयोगादौ सति पुरुषेच्छाधीनत्वस्य ज्ञानेऽदर्शनादतो विधेयत्वव्यापकपुरुषतन्त्रताभावे तद्व्याप्यं विधेयत्वं विरुद्धमित्याह—प्रमाणमेयैकनिबन्धनत्वात्। एकपदेन कर्तृतन्त्रत्वं वारयति॥४५०॥

किं च किं शाब्दज्ञानं विधेयमुतापरोक्षरूपम्। नाद्यः। तस्याध्ययनकाल एव वृत्तत्वात्। द्वितीये विधेः पूर्वं तद्विषयब्रह्मज्ञानं ज्ञायते। उत न। तत्र चरमं विध्यसंभवेन दूषयन् ज्ञातपक्षे दोषकथनाय तं पक्षं परिशेषयति—

ब्रह्मज्ञानं जानता ब्रह्मबुद्धेः
कर्त्तव्यत्वं शक्यते ज्ञातुमेतत् ।
न ह्यज्ञात्वा ब्रह्मबुद्धिं तदीयं
कर्तव्यत्वं कश्चिदीष्टे ग्रहीतुम् ॥ ४५१॥ ॥

ब्रह्मज्ञानमिति । हि यतस्तदीयं ज्ञानसम्बन्धीष्टे समर्थो भवति ब्रह्मज्ञानज्ञानाभावे ब्रह्मज्ञानं कर्त्तव्यमिति बुद्धिर्न संभवति विशेषणमज्ञात्वा विशिष्टबुद्ध्यनुपपत्तेरित्यर्थः ॥ ४५१ ॥

नन्वस्तु ज्ञानं ज्ञायमानमेव विधेयं ततः किमापन्नमित्याशङ्क्य ब्रह्मज्ञानज्ञाने ज्ञानविशेषणीभूतब्रह्मणोऽप्यवश्यज्ञेयत्वादन्यथा विशिष्टज्ञानस्यैवाभावात्तज्ज्ञाने च सति सकलपुरुषार्थसिद्धेर्व्यर्थ एव विधिः स्यादित्याह—

ब्रह्मज्ञानं ब्रह्मणि ज्ञायमाने
ज्ञातुं शक्यं नान्यथा तच्च तद्वत् ।
विज्ञातं चेद्ब्रह्मणस्तत्त्वमस्य
प्राप्ता मुक्तिर्नास्ति कृत्यं विधीनाम् ॥ ४५२ ॥

ब्रह्मज्ञानमिति । नान्यथाऽज्ञायमाने ब्रह्मणि तज्ज्ञानं ज्ञातुमशक्यमित्यर्थः । तद्वत् ज्ञानवद्ब्रह्मणस्तत्त्वमपि विज्ञातं चेदस्य विदुषो मुक्तिरनर्थनिवृत्तिरूपा मुक्तिः प्राप्नोति विधीनां कृत्यं प्रयोजनं नास्तीत्यर्थः ॥ ४५२ ॥

ननु कथं ज्ञानमात्रेणानर्थनिवृत्तिरूपा मुक्तिः सिद्ध्यति । धर्मज्ञानमात्रेण पुरुषार्थादर्शनादित्याशङ्क्यानर्थस्याविद्यकत्वाद्विद्ययाऽ-

विद्यानाशे तत्कार्यसमष्टिव्यष्ट्यात्मकानर्थस्य निवृत्तिः संभवतीत्यभिप्रेत्याह—

दृशो विराट्सूत्रशरीरगोचरं
परस्पराध्यासमबोधसम्भवम् ।
अनर्थमाहुः श्रुतिमस्तके स्थिता-
स्ततोऽस्य विद्यासमये विमुक्तता ॥ ४५३ ॥

दृशइति । आत्मन इत्यर्थः । विराट्सूत्रशरीरगोचरं विराट्समष्टिस्थूलप्रपञ्चाभिमानिचैतन्यं सूत्रं सूत्रमिव कुसुमेषु सकलसूक्ष्मप्रपञ्चेष्वनुस्यूतं समष्टिसूक्ष्मप्रपञ्चाभिमानि चैतन्यम् । एतच्च व्यष्टिजीवानामप्युपलक्षणम् । तयोः शरीरं स्थूलसूक्ष्मप्रपञ्चः तद्गोचरं तद्विषयमबोधसंभवमज्ञानसमुत्थं परस्पराध्यासं तादात्म्याभिमानं तद्विषयं च शरीरादिकं श्रुतिमस्तके स्थिता वेदान्तिनोऽनर्थमाहुः । अनर्थहेतुत्वादनर्थः ततः किं तत्राह—तत इति । यतः सकलोऽप्यनर्थोऽविद्याहेतुकस्ततोऽस्य विदुषो विद्यासमये विमुक्ततेति सम्बन्धः ॥ ४५३ ॥

नन्वस्त्वनर्थस्याविद्याकृतत्वात् ज्ञाननिवर्त्यत्वं तथापि न तस्य ज्ञानमात्रेण निवर्त्यत्वमनाद्यज्ञानजन्यस्य चिरकालानुवर्तिनः सन्मात्रेण निवृत्त्यनुपपत्तेस्ततो ज्ञानसहकारित्वेन तदभ्यासोऽप्यपेक्षणीयः तथा च ज्ञातेऽपि ब्रह्मणि ज्ञानाभ्यासार्थं विधिरनर्थवानिति चेत्तत्राह—

अनाद्यविद्यापटनेत्रबन्धनं
प्रसह्य वेदान्तनिबन्धना मतिः ।
स्वजन्ममात्रेण दृढात्मगोचरा
समूलदाहं दहतीति हि श्रुतिः ॥ ४५४ ॥

अनाद्यविद्येति । अनाद्यविद्यैव पटवत्पटः आच्छादकत्वात्स एव नेत्र-वन्नेत्रस्य प्रकाशस्यात्मनः बन्धनमाच्छादनमित्यर्थः वेदान्तनिबन्धना वेदान्तजन्या आत्मगोचरा प्रत्यक्‌ब्रह्मभावविषया मतिर्दृढा सती असंभावनादिरहिता सती स्वजन्ममात्रेणानाद्यविद्यापटनेत्रबन्धनं प्रसह्य समूलदाहं यथा दहति तथा सवासनमज्ञानं निवर्त्तयति हीति श्रुतिः । ब्रह्मवेद ब्रह्मैव भवति, तरति शोकमात्मविदित्यादिश्रुति-र्दर्शयतीत्यर्थः । तथा चानर्थस्य चिरकालानुवृत्तत्वेपि ज्ञानस्वभावात् दृढब्रह्मात्मैक्यसाक्षात्कारस्याभ्यासं विनैव प्रौढालोकस्येव चिर-कालानुवृत्ततमसो निवर्त्तकत्वोपपत्तेः । श्रुत्या च तथैव प्रतिपादनाच्च ब्रह्मज्ञाने सति तदभ्यासविधिरर्थवानित्यर्थः । ननु माभूत्साक्षात्कारा-नन्तरं विधिस्तदर्थन्तु शब्दादवगते ब्रह्मणि किमिति न ज्ञानं विधीयत इति चेन्न—प्रमाणज्ञानस्याभ्यासाजन्यत्वादिति भावः ॥ ४५४ ॥

तस्माद् ब्रह्मणो ज्ञातत्वाज्ञातत्वाभ्यां ज्ञानतदभ्यासविध्यनुप-पत्तेः । अन्यस्य विधेर्वेदान्तेष्वप्रतीतेर्वेदान्तानां स्वप्रधानब्रह्मनिष्ठतैवे-त्युपसंहरति—

**विज्ञाते ब्रह्मणि स्याद्विधिरयमफलः प्रत्यये तस्य तद्व-**
**च्चाज्ञातब्रह्मकर्मा विधिविषय इति प्रत्ययो बुद्धियोग्यः ।**
**ब्रह्मात्मप्रत्ययेऽतो विधिरनवसरः सर्वथा चिन्त्यमान-**
**स्तस्माद्ब्रह्मात्मवस्तुन्यवमितमखिलं विद्धि वेदान्तवाक्यम्**
**॥ ४५५ ॥**

विज्ञाते ब्रह्मणीति । ब्रह्मणि विज्ञाते तस्य ब्रह्मणः प्रत्यये विषयेऽयं विधिरफलः निष्प्रयोजन इति कृत्वा न सम्भवति । यद्वत् ब्रह्मणि ज्ञाते निष्फलत्वाद्विधिर्न सम्भवति । तद्वदज्ञातब्रह्मकर्मा अज्ञातं ब्रह्म कर्म विषयो यस्य प्रत्ययस्य स प्रत्ययो विधिविषय इति बुद्धियोग्यो ज्ञातुं

योग्यो न भवतीत्यर्थः। ब्रह्मण्यज्ञाते तद्विषयस्य ज्ञानस्य बोद्धुमशक्यत्वाद् ब्रह्मज्ञानं विधेयमिति ज्ञातुं न शक्यमित्यर्थः। अतो ब्रह्मणि ज्ञाते विधिवैफल्यादज्ञाते वा तदवगमासम्भवाद् ब्रह्मात्मज्ञाने विधिरनवसरः सर्वथा प्रकारद्वयेन चिन्त्यमानो विचार्यमाणोऽसम्भवी यतः तस्मादखिलं वेदान्तवाक्यं स्वप्रधानब्रह्मात्मवस्तुन्यवसितं तात्पर्येण पर्यवसन्नमिति विद्धि जानीहीत्यर्थः ॥ ४५५ ॥

इदानीं प्रकारान्तरेणापि ज्ञानविधिं निराकरोति—

**विरुद्धत्रिकस्य त्रयापत्तिदोषा-**
**न्न शक्यं विधीनां धियः संग्रहीतुम् ।**
**यथा वाजपेये गुणस्येह तद्व-**
**त्ततो नास्ति वेदान्तवाक्ये विधानम् ॥ ४५६ ॥**

विरुद्धत्रिकस्येति विरुद्धानां त्रयाणां सङ्घो विरुद्धत्रिकं तस्य त्रयापत्तिदोषेण विध्यनङ्गीकारे दृष्टान्तमाह—यथा वाजपेयइति । वाजपेयसंज्ञके यागे यथा विरुद्धत्रिकत्रयापत्तिदोषेण वाजपेयाख्यगुणस्यान्नमयसुराद्रव्यस्य गुणस्य विधिर्निराकृतः गृह्यते तद्वद्वेह वेदान्ते धियो विधानं नेति सम्बन्धः। पूर्वतन्त्रे हि वाजपेयशब्दस्य नामत्वं वक्तुं विरुद्धत्रिकत्रयापत्त्या गुणविधिर्निराकृतः। निराकरणप्रकारश्चाग्रे वक्ष्यत इत्यर्थः। ततो विध्यङ्गीकारस्याशक्यत्वाद्वेदान्तवाक्ये विधानं नास्तीति फलितमाह—तत इत्यादिना ॥ ४५६ ॥

किं तद्विरुद्धत्रिकमिति तदाह—

**उद्दिश्यमानत्वमनूद्यमान**
**भावप्रधानत्वमितीदमेकम् ।**

तथाप्युपादेयविधेयशेष-

भावप्रभेदं त्रिकमन्यदत्र ॥ ४५७ ॥

उद्दिश्यमानत्वमिति । अत्रात्मनीदमेकं त्रिकमस्तीति सम्बन्धः । इदं शब्दार्थमाह—उद्दिश्यमानत्वमित्यादिना । उद्दिश्यमानत्वं सिद्धवन्निर्दिश्यमानत्वमनूद्यमानभावश्च प्रधानत्वं चेत्यनूद्यमानभावप्रधानत्वमनूद्यमानभावोऽनूद्यमानत्वं तच्च ज्ञातस्य पुनरभिधीयमानत्वं, प्रधानत्वं शेषित्वम् । इतिशब्दः प्रकारपरामर्शी इतरत्रिकमाह—तथेति । यथा आत्मन्युद्दिश्यमानत्वादिकमस्ति । तथाऽन्यदपि त्रिकमस्तीति सम्बन्धः । तदेवान्यपदार्थमाह-उपादेयविधेयशेषभावप्रभेदमिति । द्वन्द्वान्ते श्रूयमाणभावशब्द उपादेयादिषु प्रत्येकं योजनीयः उपादेयत्वविधेयत्वशेषत्वरूपेण प्रभेदो यस्मिन् त्रिके तत्तथोक्तमुपादेयत्वमनुष्ठेयत्वं विधेयत्वमज्ञातस्य प्रमेयत्वमितरत्स्पष्टमन्यत्पूर्वोक्तादुद्देश्यादित्रिकादन्यत्तथाह्युपादेयेति पाठेऽस्तीतिपदमध्याहृत्य योजनीयम् अत्रोद्देश्यत्वोपादेयत्वयोः परस्परं विरोधः सिद्धत्वसाध्यत्वयोरेकदैकत्रानुपपत्तेरनूद्यमानत्वविधेयत्वयोरन्योन्यं विरोधः ज्ञातज्ञाप्यत्वाज्ञातज्ञाप्यत्वयोरेकदैकत्रायोगाच्छेषत्वशेषित्वयोश्च स्पष्ट एव विरोधः । अत्र यद्यपि ब्रह्मणः स्वतोऽनुष्ठेयत्वं नास्ति तथाप्यनुष्ठेयज्ञानविशेषणत्वेन ज्ञानजन्यातिशयविशिष्टत्वाकारेण वानुष्ठेयत्वमिति द्रष्टव्यम् ॥ ४५७ ॥

ननु वाजपेयादौ विरुद्धत्रिकद्वयापत्तौ वाक्यभेदः स्यादिति स एव दोषाय भवति । स चात्र नास्ति । वाक्यान्तरसिद्धब्रह्मानुवादेन तज्ज्ञानविधानादित्याशङ्क्याह—

एकेन वाक्येन धियो विधानं

प्रत्यक्प्रमित्सा च यदि प्रतीचि ।

त्रिकं द्वयं तत्र विरुद्धमेत-

त्प्रसज्यते कष्टमतः किमन्यत् ॥ ४५८ ॥

एकेनेति । प्रत्यक्प्रमित्सा प्रत्यञ्चं ज्ञातुमिच्छेष्यमाणप्रत्यगात्मज्ञानमिति यावत् भवतीति शेषः । यदीत्यावश्यके । वाक्यान्तरसमन्वयस्य विधिसंसर्गादन्यत्र प्रामाण्यस्य तवाऽनभिमतत्वात्तदङ्गीकारे वा समन्वयादेव सिद्धं ब्रह्मेति कृतं तज्ज्ञानार्थं विधिना । ननु शब्दावान्तरतात्पर्यगोचरो मानान्तराविरुद्ध एव शब्दप्रमेयः यथा विग्रहवती देवता अद्वैतब्रह्म मानान्तरविरुद्धं नावान्तरतात्पर्यकशब्दादेव प्रमीयते प्रतीतिस्तु भवत्येव तथा चावान्तरतात्पर्यकशब्दावगतब्रह्मानुवादेन ज्ञानविधाने विधिपरादेव शब्दाद् ब्रह्मापि प्रमीयत इति न विरुद्धत्रिकद्वयापत्तिर्न वा ज्ञानविधानं व्यर्थमिति चेन्न—विधिसंसर्गविकलसत्यादिवाक्ये ब्रह्मनिश्चयानङ्गीकारे तत्संसर्गवाक्यैरेव तन्निश्चय इत्येकस्यैव वाक्यस्योभयपरत्वाङ्गीकार इति विरुद्धत्रिकद्वयापत्तेर्वज्रलेपत्वादित्यर्थः । ननु शब्दस्तु विधिमात्रनिष्ठः ब्रह्मसिद्धिस्त्वद्वितीयब्रह्मज्ञानविधानान्यथानुपपत्त्या प्रमाणान्तरेण सिद्ध्यतीति चेन्न । ब्रह्मणः प्रमाणान्तरागोचरत्वात्प्रत्यग्ब्रह्मणोऽनिश्चितौ तज्ज्ञानस्याप्यनिश्चितस्यानूद्य विधानान्यथानुपपत्तेश्चेति भावः । नन्वस्तु विरुद्धत्रिकद्वयापत्तिः ततः किं दूषणमित्याशङ्क्यैकदैकत्र विरुद्धविशेषणद्वयावगाहिप्रत्ययानुदयादितः परं दूषणं नास्तीत्याह – कष्टमिति । अतो विरुद्धत्रिकद्वयापत्तेः । अन्यत् किं कष्टं दूषणं न किमपीत्यर्थः ॥४५८॥

ननु कस्य त्रिकस्य कुत्रापत्तिरित्याकाङ्क्षायामाह--

उद्दिश्यमानं तदनूद्यमान-

भूतं प्रधानं च धियो विधाने ।

प्रमीयमाणं पुनरात्मवस्तु
तदास्पदं स्यादितरत्रिकस्य ॥ ४५९ ॥

उद्दिश्यमानमिति। तद् ब्रह्म अनूद्यमानभूतमनूद्यमानमित्यर्थः। आस्पदं विषयः इतरत्रिकस्य–उपादेयत्वादित्रिकस्य, परमपुरुषार्थरूपं प्रत्यगात्मानमुद्दिश्यात्मानं जानीयादिति ज्ञानविधाने परमपुरुषार्थतया आत्मनः उद्देश्यत्वं ब्रह्मज्ञानमनूद्य तत्कर्त्तव्यताविधानेऽनूद्यज्ञानविशेषणत्वेन ब्रह्मणोऽप्यनूद्यत्वं विधेयक्रियाजन्यफलवत्त्वेन प्रधान्यमित्यात्मन उद्देश्यत्वादिकं स्यात्तथानुष्ठेयज्ञानविशेषणत्वेन ज्ञानजन्यातिशयविशिष्टत्वेन वाऽनुष्ठेयत्वमुद्देश्यत्वविरुद्धं तथा विषयज्ञानप्रमेयत्वे अज्ञातज्ञाप्यत्वमनूद्यत्वविरुद्धं तथा विधेयतयाऽप्रधानीभूतज्ञानविशेषणत्वेन शेषित्वविरुद्धं शेषत्वलक्षणमप्राधान्यं चेति विरुद्धत्रिकद्वयापत्तिरित्यर्थः ॥ ४५९ ॥

एवं दार्ष्टान्तिके विरुद्धत्रिकद्वयापत्तिमुपवर्ण्य दृष्टान्ते वाजपेये कस्मिन्नंशे कस्य त्रिकस्यापत्तिरित्याकाङ्क्षायामाह—

प्रथमत्रिकं यजिनिगद्यगतं
गुणसंगतेरवगमे भवति।
चरमत्रिकं यजिनिगद्यगतं
फलसंगतेरवगमे तु पुनः ॥ ४६० ॥

प्रथमत्रिकमिति। गुणसंगतेरवगमे यागोद्देशेन वाजपेयाख्यगुणसम्बन्धविधाने यजिनिगद्यगतं यजिशब्दवाच्ययागनिनिष्ठं प्रथमत्रिकमुद्देश्यत्वादि त्रिकं भवति। फलसङ्गतेरवगते तु स्वाराज्यकामो यजेतेति यागस्य फलसम्बन्धबोधने यजिनिगद्यगतं चरमत्रिकमुपादेयत्वादि त्रिकं भवतीत्यर्थः ॥ ४६० ॥

ननु स्वाराज्यकामो यजेत तच्च वाजपेयेनेति ज्ञानद्वयेन त्रिकद्वयस्य प्रतीतौ न विरुद्धत्रिकतेत्याशङ्क्याह—

सकृदुच्चरन्यजतिरेष गुणं
न फलं च संगमयितुं क्षमते ।
कथितत्रिकद्वयविरोधवशाद्
यजिवस्तुनीति ननुनीतिविदः ॥ ४६१ ॥

सकृदुच्चरान्निति । सकृदेव ज्ञापयन्नित्यर्थः । यजतिर्यजिशब्दः गुणं वाजपेयाख्यं गुणं फलं स्वाराज्यफलं सङ्गमयितुं सम्बन्धयितुं विधातुमित्यर्थः । यजिवस्तुनि यागे । नन्विति निश्चये । नीतिविद आहुरिति शेषः । स्वाराज्यकामो वाजपेयेन यजेतेत्यत्र यदि स्वाराज्यकामो यजेत तच्च वाजपेयेनेत्यन्वयो भवेत्तदा वाक्यभेदापत्तिः । नन्वेतद्यजिपदं तन्त्रेण गुणफलान्वये हि साध्यसाधनोभयावस्थं यागमुपस्थापयति अतो न वाक्यभेदो न वा विरुद्धत्रिकद्वयापत्तिः तद्दूषणताबीजस्य वाक्यभेदस्य तन्त्रेण परिभूतत्वादिति चेन्न—एवमपि साधनत्वेनोपस्थितस्य तस्य फलेनान्वयानुपपत्तेरेकदैकत्र विरुद्धविशेषणद्वयप्रतीत्यनुपपत्तेरपरिहाराच्च । नात्र तन्त्रावकाशोपि सारूप्याभावात्तदुक्तं सारूप्ये हि तन्त्रतेति । तथा च सकृद्बोधकादेव यजिपदाद् गुणफलविध्यङ्गीकारे ज्ञानद्वयाभावाद्विरुद्धत्रिकद्वयापत्तिरस्त्येवेत्यर्थः ॥ ४६१ ॥

तदेवं ज्ञानविधेरसम्भवात्सर्वेषां वेदान्तानां निर्विशेषे ब्रह्मण्येव समन्वय उपपन्न इत्युपसंहरति—

इति वाजपेयगतनीतिवशा-
दपि नाऽऽत्मवस्तु विषयावगतौ ।

**विधिरस्ति तेन विधिशून्यतया**

**परमात्मवस्तुविषयोपनिषत्॥ ४६२॥**

इतिवाजपेयेति । वाजपेयगतनीतिविरुद्धत्रिकद्वयापत्त्या विधिनिराकरणम् । अपिना पूर्वोक्तविध्यसम्भवं समुच्चीयते ॥ ४६२ ॥

नन्वेवमपि न सर्वेषां वेदान्तानां निर्विशेषे ब्रह्मणि समन्वयो वर्णयितुं शक्यते उपासनानियोगपराणामपि हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिवाक्यानां सत्वान्न हि तद्वाक्यं निर्विशेषं ब्रह्म प्रमापयितुमलं गुणविशिष्टब्रह्मण एव तदर्थत्वात् । न च लक्षणया निर्विशेषं ब्रह्म तद्बोधयतीति वाच्यम् उपासनामात्रोच्छेदप्रसङ्गात् । न च तत्तन्महते फलाय विधीयमानान्युपासनान्यविवक्षितानीति वक्तुं शक्यम्—तत्परत्वेपि वा लक्षणावैयर्थ्यात् तया विनापि प्रयोजनवदर्थसिद्धेरित्याशङ्क्याह —

**सगुणवाक्यमपीह समन्वितं**

**भवति निर्गुणवस्तुनि सर्वशः ।**

**न खलुनिर्गुणवस्तु समन्वयं**

**न सहते सगुणस्य समन्वयः॥ ४६३ ॥**

सगुणवाक्यमपीति । सर्वशः सर्वमपि सगुणवाक्यं सगुणब्रह्मप्रतिपादकं इह निर्गुणवस्तुनि समन्वितं भवतीति सम्बन्ध इत्यर्थः । ननु सगुणप्रतिपादकं कथं निर्गुणपरं स्यान्न हि कलशप्रतिपादकं शरावपरं स्यादित्याशंक्यान्यप्रतिपादकमप्यन्यपरमर्थवादादिकं दृष्टमित्यभिप्रेत्याह–न खल्विति । सगुणस्येति कर्मणि षष्ठी । सगुणेऽस्य समन्वय इति पाठेऽस्य सगुणवाक्यस्य सगुणविषय इत्यर्थः । सगुणविषयः

समन्वयो निर्गुणसमन्वयं न संहत इति न संहत एव खलु यस्मात्तस्मादिति सम्बन्धः । निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थं हि सगुणवाक्यैः प्रपञ्चोऽनूद्यते प्रशस्तनियोगप्रतिपत्त्यर्थं क्षेपिष्ठत्वादिकमिवार्थवादेन । न च पूर्वप्राप्त्यभावान्नानुवाद इति शङ्क्यं सृष्टिश्रुतिसामर्थ्यसिद्धत्वाद् ब्रह्मसप्रपञ्चत्वस्य । न चानुवादः प्रतीतिं विरुणद्धि तदर्थत्वादनुवादस्य । न चैवमुपासनोच्छेदः आरोपिततद्भावेनापि तदुपसत्तेः । अत एवोपासनानां च विधानमपि निष्प्रपञ्चशेषभूतसप्रपञ्चमाश्रित्य गोदोहनविधानवदाश्रित्य विधानं भवतीति । न चैवं सति दर्शपूर्णमासाधिकारिण एव गोदोहनानुष्ठानवन्मुमुक्षोरेवोपासनानुष्ठानं स्यात् न च तत्सम्भवति तस्य तत्फलत्वाद्विरक्तत्वादिति वाच्यम् । अप्प्रणयनस्य तदाश्रयस्य नियताधिकारसम्बन्धवदाश्रयस्य प्रपञ्चस्य शब्दात्प्रतीयमानस्य सर्वसाधारणतया मुमुक्ष्वैकसम्बन्धाभावादिति भावः ॥ ४६३ ॥

इदानीं प्रकारान्तरेण विरोधं दर्शयति—

**सत्यासत्यवपुस्तथाहि सगुणं ब्रह्माऽस्य विद्या तथा**
**तद्वत्तद्विषयस्य वेदवचस्तात्पर्यमेवंविधम् ।**
**तेनावान्तरमस्य वेदवचसस्तात्पर्यमन्यादृशं**
**चान्यन्निर्गुणवस्तुतत्त्वविषयं संकीर्त्यते भागशः॥४६४॥**

सत्यासत्येति । यथा सगुणविषयः समन्वयो निर्गुणसमन्वयविरोधी न भवति तथा सगुणवाक्यविषयः सगुणं ब्रह्म सत्यासत्यवपुः सत्यानृतात्मकम् । ततः किं तत्राह— अस्य विद्या तथेति । सगुणब्रह्मविषयज्ञानमपि तथा सत्यासत्यात्मिका सत्यासत्यविषयिणीत्यर्थः । ततोपि किं तत्राह— तद्वदित्यादिना । सगुणब्रह्मविद्यावत्तद्विषयस्य सगुणब्रह्मविषयस्य वेदान्तवाक्यस्य तात्पर्यमप्येवंविधं सत्यासत्यविषयं न

केवलसगुणविषयमित्यर्थः । वस्तुतोऽनवच्छिन्नमेव ब्रह्म स्वाविद्याकृ-तत्तदुपाधिभिस्तत्तद्गुणैश्चान्योन्याध्यासेनावच्छिद्यमानं न ब्रह्मणो वस्त्वन्तरम् । तथात्वे तदुपासनस्याब्रह्मोपसनत्वप्रसङ्गात्सगुणब्रह्मणः सत्यासत्यात्मकत्वे तद्विषयज्ञानमपि सत्यासत्योभयविषयं भवत्येव विशिष्टज्ञानस्य विशेषणविशेष्योभयविषयत्वनियमाज्ज्ञानस्य चोभयविषयत्वे तज्जनकशब्दतात्पर्यमपि तदुभयविषयमेव फलवच्छाब्दज्ञानविषयस्य शब्दतात्पर्यविषयत्वात्तथा च सगुणवाक्यस्य वस्तुतो निर्गुणब्रह्मतदारोपितगुणविषयत्वान्न विरोध इत्यर्थः । नन्वेवं विषयभेदे तात्पर्यभेदाद्वेदान्तवाक्यं भिद्येतेत्याशङ्क्याह-तेनेति । अथवा-नन्वेवमपि सगुणवाक्यस्य गुणविषयत्वमपि विद्यते तत्कथं तदभावविशिष्टनिर्गुणमात्रपरत्वमित्याशङ्क्याह-तेनेति । येन सत्यासत्यात्मकवस्तुविषयत्वं तेनास्य सगुणवाक्यस्यान्यादृशं तात्पर्यमिति सम्बन्धः । अन्यादृशशब्दार्थमेवाह—अवान्तरमिति । परम्परया पुरुषार्थसाधनप्रमितिजनकत्वादवान्तरतात्पर्यमित्यर्थः । निर्गुणवस्तुविषयं त्वन्यत् परमतात्पर्यमिति भागशो विभज्य सङ्कीर्त्यत इति सम्बन्धः । गुणस्य गुणिब्रह्मणो वा परमपुरुषार्थत्वाभावाच्छुद्धिद्वारा तदनुगुणत्वाच्च सगुणवाक्यस्य गुणपदस्य तद्विषयं तात्पर्यमवान्तरमेव महातात्पर्यं तु निर्गुणब्रह्मविषयमेवेत्यर्थः ॥ ४६४ ॥

ननु सत्यासत्यविषयं ज्ञानं किमुभयं उतैकम् । नाद्य । ज्ञानद्वयस्य युगपदुत्पत्त्यनुपपत्तेः । शब्दस्य क्रमकारित्वायोगाच्च । न द्वितीयः । सत्यासत्ययोः परस्परविरुद्धयोः अन्यतरस्यान्यतरज्ञानविषयत्वानुपपत्तेस्ततः कथं सगुणवाक्यस्योभयपरत्वं सम्भवतीत्याशङ्क्य यथा शुक्तिरूप्यस्यासत्यस्य सत्यशुक्तितादात्म्यापन्नतया सत्यस्य चैकानुभवविषयत्वम् एवं गुणतदाश्रयब्रह्मणोरपि सत्यासत्ययोरेकज्ञानविषयत्वं सम्भवतीति सगुणवाक्यजन्यं ज्ञानमेकमेवोभयं विषयीकरोतीति सदृष्टान्तमाह—

रूप्यज्ञानं रजतमिदमित्येवमुत्पद्यमानं
सत्यासत्यं विषयमपृथग्दर्शयत्येकमेव ।
तद्वन्मानं सगुणविषयं सत्यमिथ्यावभासं
संसृष्टार्थद्वयमिति दृढं दर्शयत्येकमेतत् ॥४६५॥

रूप्यज्ञानमिति । एवमुत्पद्यमानं रूप्यज्ञानमेकमेव सत्यासत्यविषयं सत्याधिष्ठानासत्यारोप्यात्मकं विषयमपृथग् दर्शयति अविभिन्नं यथा भवति तथा दर्शयति । एवंपदार्थमाह— रजतमिति । इदंरजतमितिज्ञानं सत्यासत्यात्मकवस्त्ववभासयति यद्वत्तद्वत्सत्यमिथ्यावभासं सत्यं गुणाधिष्ठानं ब्रह्म मिथ्या तदारोपिता गुणास्तद्द्वयमवभास्यते ऽनेनेति तत्तथा सगुणविषयं मानं सगुणब्रह्मविषयं वाक्यजन्यज्ञानमेकमेवार्थद्वयं गुणं तदवच्छिद्यमानं ब्रह्म च संसज्यैकीकृत्य दृढं निसन्दिग्धं दर्शयतीत्यर्थः ॥ ४६५ ॥

ननु किमिदं तात्पर्यं न तावद्वक्तुरिच्छा, अपौरुषेये वेदे तदभावात् नापि प्रतीतिजनकत्वं वपोत्खननादिवाक्यस्यापि स्वार्थपरत्वप्रसङ्गात्, नापि फलतत्साधनविषयज्ञानजनकत्वं समिदादिवाक्यस्य स्वार्थपरत्वाभावप्रसङ्गादतो विधिशेषत्वमेव तात्पर्यमिति न तद्विधुरे ब्रह्मणि वेदान्तसमन्वय इति कुतः पुनः सगुणवाक्यस्य तत्र तात्पर्यमित्याशङ्क्याह—

तद्बुद्धिमात्रफलतैव च तत्परत्वं
वेदान्तवादिसमये न तु शेषभावः ।
शेषत्वमक्षरकलापगताप्तिमात्रं
प्रत्येव नाध्ययनमर्थधियो विशेषः॥ ४६६॥

तद्बुद्धिमात्रेति । तत्तद्वस्तुविषयबुद्धिरेव फलं यस्य वाक्यस्य तस्य भावस्तत्ता फलवदर्थप्रतीतिजनकत्वमिति यावत् । शेषभावो विधि प्रतीतिशेषः । वेदान्तवादे हि यस्य वाक्यस्य यदर्थविषयफलवत्प्रतीतिजनकत्वं तस्य तदेव तात्पर्यं न तु विधिशेषत्वं तत्राप्यस्यैव प्रयोजकत्वात्तादृशप्रतीतिफलकत्वं च निर्गुणवाक्यस्याबाधितं सगुणवाक्यस्य च गुणोपहितब्रह्मणि सगुणवाक्यस्थगुणवादानां गुणांशे च परम्परया पुरुषार्थपर्यवसायिनि विद्यत इति वेदान्तगतसगुणनिर्गुणवाक्यं निर्गुणब्रह्मपरं भवतीत्यर्थः । न चैवं सति प्रयाजादिवाक्यस्य तत्परत्वाभावप्रसङ्गः । स्वार्थज्ञानेन तेषां फलवत्वाभावादिति वाच्यम् । अङ्गानामाङ्गिफलेन फलवत्वात्तत्प्रतीतेरपि फलवत्वादत एव वपोत्खननवाक्यस्य न स्वार्थपरत्वं कथंचिदपि तत्प्रतीतेः प्रयोजनवत्वाभावादित्यर्थः । ननु माभूद्विधिशेषत्वं तात्पर्यं तथापि न फलवत्प्रमितिजनकत्वमात्रं तत्किन्त्वर्थावबोधशेषत्वमेव अध्ययनस्यर्थवबोधफलकतया तेन स्वाध्यायस्य तच्छेषत्वेन विनियुक्तत्वादित्याशङ्क्यार्थावबोधजनकत्वमात्रेण तस्य तच्छेषत्वेऽस्माकमपीष्टमेव प्रकान्तरेणेति चेतन्नेष्यते । तत्र मानाभावात्किन्त्वध्ययनविधिरपि नार्थावबोधफलः किन्त्वक्षरावाप्तिफल एवेत्यभिप्रेत्य प्रसङ्गादाह–

शेषत्वमिति । शेषत्वं कारणत्वमित्यर्थः । अक्षरकलापगताप्तिमात्रमक्षरगता या अवाप्तिः अक्षराणामध्येतृपुरुषाधीनोच्चारणक्षमत्वं तन्मात्रं प्रत्येवाध्ययनस्येति शेषः । मात्रचो व्यावर्त्यमाह–नाध्ययनमिति । नन्वक्षरावाप्तेरेव फलत्वे किं मानमिति चेदुच्यते स्वाध्यायोऽध्येतव्य इति विधिर्हि कर्मप्रधानः कर्मकारकसमवाय्यतिशयफल एव भवति । तच्च फलं स्वाधीनोच्चारणक्षमतालक्षणोऽक्षरधर्माऽवाप्तिरेव सैव तत्फलम् । ननु साङ्गाध्ययनान्तरं नियमेनार्थबोधो दृश्यते । तत्कथं तस्य फलत्वं निराक्रियत इति चेन्न–तद्दर्शनस्य परम्परया फलत्वे-

ध्ययने दर्शनादिति चेन्न—आवृत्तिविशिष्टाध्ययनात्तत्सिद्धेः । नन्वध्ययनावृत्तिः कथं सिद्ध्यति विधित इति चेन्न—विधेयतदुपकारकव्यतिरिक्तस्य तत्प्रयुक्तानुष्ठानाभावादिति चेन्न—अवाप्तिलक्षणफलप्रयुक्ततण्डुलनिष्पत्तिप्रयुक्तावहननावृत्तिवत्तदुपपत्तेः । तस्मादक्षरावाप्तेरेवाध्ययनाव्यवहितफलत्वादर्थावबोधस्य तद्व्यवहितफलत्वान्नार्थाध्ययनं स्वाध्यायो वार्थावबोधशेषः किन्त्वक्षरावाप्तिशेष एवेत्यर्थः ॥ ४६६ ॥

ननु तच्छेषत्वाभावे परम्परयापि कथं तत्फलत्वं तत्राह—

**तच्छेषभावमनपेक्ष्य च तत्फलं स्या-**
**दाधानवन्न हि तदङ्गमिह क्रतूनाम् ।**
**अग्न्यङ्गमेव हि तदिष्टमथापि तस्य**
**सर्वक्रतुष्वधिकृतिः फलमभ्युपेतम् ॥ ४६७॥**

तच्छेषभावमिति । तमर्थावबोधं प्रति शेषत्वमित्यर्थः । तत्फलं—स अर्थावबोधः फलं यस्य तदध्ययनमिति शेषः । तच्छेषत्वमन्तरेणापि तत्फलकत्वे दृष्टान्तमाह—आधानवदिति । तदेवोपपादयति । न हीति । तदाधानमिह कर्मकाण्डे क्रतूनां दर्शपूर्णमासादिक्रतूनामाधानं न क्रत्वङ्गं श्रुतिलिङ्गाद्यन्यतमप्रमाणाभावादित्यर्थः। नन्वाधानस्य क्रत्वङ्गत्वाभावे किमिति तत्क्रत्वारम्भकाले नियमेनानुष्ठीयत इत्याशङ्क्य क्रत्वङ्गाग्निशेषत्वादित्याह-अग्न्यङ्गमेवेति । तदाधानमाहवनीयाद्यग्न्यङ्गमिष्टमेव हीतिसम्बन्धः । फलितमाह-अथापीति । क्रतुशेषत्वाभावेपि तस्याध्यानस्य सर्वोत्तरत्र क्रतुष्वधिकृतिरधिकारस्तत्तत्क्रत्वनुष्ठानं फलमभ्युपेतमित्यर्थः । वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यनारभ्याधीतमाधानं न कस्यचिदपि क्रतोरङ्गं भवति । तत्प्रकरणे पाठाद्यभावादग्नीनादधीतेत्याहवनीयादीन्प्रति शेषत्वागमाच्च । न च प्रकरणपाठाद्यभावेपि गम्य-

क्रत्वङ्गजूहूद्वारापर्णतायाः क्रतुशेषत्वं वाक्यप्रामाण्यात् तद्वदाधान-स्यापि क्रत्वङ्गाग्निद्वारा क्रतुशेषत्वं किं न स्यादिति वाच्यम् । दृष्टान्त-वैचित्र्याज्जुह्वा ह्याकारद्वयमस्ति । लौकिकाकारो ऽलौकिकाकारश्चेति । तत्र परिदृश्यमानाकारो लौकिकः अलौकिकस्त्वपूर्वीयाकारः । तत्र यदि पर्णता तस्या लौकिकाकारमात्रे पर्यवस्येद्व्यर्था भवेत्काष्ठान्तरेणापि लौकिकाकारस्य सुसंपादत्वात्ततः पर्णताया वैयर्थ्यपरिहार्थमेवापूर्वी-याकारशेषत्वेन क्रत्वङ्गत्वमेव वक्तव्यमिति वाक्यप्रमाणेन क्रतुशेषत्वेन विनियुज्यते । अग्नेस्त्वपूर्वीयत्वाकारोपि क्रतुशेषत्वं विनाप्याधानेनैव भवतीति न कथमप्यस्य क्रतुशेषत्वम् । तथा च यथा क्रत्वनङ्गमेव सदा-धानं क्रत्वङ्गाग्निशेषतयाग्न्यधीनोत्तरक्रत्वनुष्ठानफलकमित्यभ्युपगतं तथार्थावबोधं प्रत्यशेषमप्यध्ययनं स्वफलावाप्तिविशिष्टस्वाध्याय-जन्यार्थावबोधकफलकं भवतीत्यर्थः ॥ ४६७ ॥

इदानीं तद्बुद्धिमात्रफलतैवेत्यत्र यथाश्रुतमर्थमादाय मन्त्रार्थ-वादानामपि स्वार्थबोधजनकत्वात्स्वार्थपरता स्यादित्याशङ्क्य फल-वत्तद्बुद्धिमात्रफलकत्वमेव तात्पर्यमिति विवक्षितमित्यभिप्रेत्य परि-हरति—

**मन्त्रार्थवादगतमध्ययनं तदर्थ-**
**मात्रप्रतीतिफलमित्यपि नाभ्युपेतम् ।**
**विध्यर्थबुद्धिमनुसृत्य फलावसानां**
**सा तद्वतीति तदतत्परतोपपत्तिः ॥ ४६८ ॥**

मन्त्रार्थवादगतमिति । मन्त्रार्थवादविषयमित्यर्थः । तदर्थमात्रप्रतीतिफलं तेभ्यो मन्त्रार्थवादेभ्यः साक्षात्प्रतीयमानो योऽर्थस्तन्मात्रविषयणी या प्रतीतिः सैव फलं यस्य तत्तथा वायुक्षेपिष्ठत्वादिप्रतीतेः फलवत्त्वा-[illegible] वेदस्य फलवत्प्रतीति-

जनकत्वाभावान्न तात्पर्यमित्यर्थः । यद्वा अर्थावबोधशेषतायाः तात्पर्यत्वे किमर्थावबोधशेषत्वमात्रमुत फलवदर्थावबोधशेषत्वम् । नाद्यः । अर्थवादादेर्मुख्यार्थपरत्वप्रसङ्गान्मुख्यार्थप्रतीतिं प्रत्यपि तस्य जनकतया शेषत्वादित्यभिप्रेत्य द्वितीये तच्छेषस्यैव तत्फलकत्वमिति पक्षेऽर्थवादादेः स्वार्थप्रतीतिशेषत्वाभावात्ततो वायुक्षेपिष्ठत्वाद्यर्थो नावगम्येतेत्यभिप्रेत्याह — मन्त्रेति । अध्ययनफलं प्रत्येव स्वाध्यायस्य शेषत्वादध्ययनाफलमर्थवादादिमुख्यार्थप्रतीतिं प्रति स्वाध्यायस्य शेषत्वं निराकर्तुमध्ययनस्यातत्फलत्वमुक्तमिति द्रष्टव्यम् । किंतर्ह्यर्थवादाध्ययनफलमित्याकाङ्क्षायां विधिशेषतया फलवद्विध्यनुकूलप्रशंसादिज्ञानमेवेत्याह—विध्यर्थबुद्धिमिति । कर्त्तव्यार्थविषयां बुद्धिं भूतिकामः श्वेतमालभेतेत्यादिरूपां बुद्धिमनुसृत्य प्रशंसादिबोधनद्वारानुष्ठेयस्मृत्या वार्थवादादिविषयमध्ययनं फलावसानं फलपर्यवसायीत्यर्थः । तदुपपादयति - सेति । सा विध्यर्थबुद्धिः तद्वती फलवतीति कृत्वा तच्छेषतयाऽर्थवादाद्युत्थज्ञानं फलवदित्यर्थः । फलितमाह—तदतत्परतोपपत्तिरिति । इतिशब्दोऽत्राप्यनुषञ्जनीयः । यतोऽर्थवादादेर्मुख्यार्थविषये फलवद्बुद्धिजनकत्वन्न ततस्तस्य मन्त्रार्थवादादेरतत्परताया मुखतः प्रतीयमानार्थपरत्वाभावस्योपपत्तिरित्यर्थः ॥ ४६८ ॥

फलवद्बुद्धिजनकत्वमेव तात्पर्यं न तु तदर्थबुद्धिशेषत्वमित्यत्र विद्वदङ्गीकारमपि दर्शयति--

**सप्रयोजनकबुद्धिकारणं वाक्यमाहुरिह तत्परं बुधाः ।**

**सप्रयोजनकबुद्धिशेषधीहेतुमन्यपरमाश्रयन्ति च ॥४६९॥**

सप्रयोजनकेति । इह कर्मकाण्डे तत्परं फलवद्विज्ञानविषयपरमित्यर्थः । सप्रयोजनकबुद्धिशेषधीहेतुं फलवद्बुद्धिशेषधीहेतुं वाक्यमन्यपरं येनान्विता सती स्वजन्यप्रतीतिः फलवती भवेत्तत्परमित्यर्थः।

विद्वांसो हि फलवद्विज्ञानजनकत्वेन विधिवाक्यं स्वार्थपरं तदभावे-नार्थवादादेः तदभावं वदन्तीति फलवद्बुद्धिजनकत्वमेव तात्पर्यं न तु शेषत्वमतिप्रसङ्गाद् गौरवाच्चेति भावः । फलवद्बुद्धिजनकत्वमेव तात्पर्यं न तु बुद्धिजनकत्वमात्रमित्यत्रैव पूर्वश्लोकार्थे वा विद्वङ्गी-कारमाह—सप्रयोजनेति ॥ ४६६ ॥

एवं सर्वेषामर्थवादादीनां स्वार्थे तात्पर्याभावमाश्रित्य तत्राप्य-स्मदुक्ततात्पर्यं नास्तीत्युक्तं सम्प्रति भगवद्बादरायणमतानुसारेणार्थ-वादादेर्यत्र स्वार्थे मानान्तरविरोधस्तत्र तात्पर्याभावेपि यत्र न स्वार्थे प्रमाणान्तरविरोधः तत्र तस्य तात्पर्यमस्त्येव कर्माङ्गतयोपासनाशेष-तया वा तदंशेपि वाक्यस्य फलवद्बुद्धिजनकत्वस्य सत्त्वादित्यभि-प्रेत्याह —

> मन्त्रार्थवादवचसामपि गोचरेषु
> सौवेष्ववान्तरमुशन्ति च तत्परत्वम् ।
> केचित्त्रयीशिरसि खिन्नधियो मुनीन्द्रा-
> स्तद्धियो विधिषु शेषतया निवेशात् ॥ ४७० ॥

मन्त्रार्थवादवचसामपीति । सौवेषु स्वकीयेषु । ननु मन्त्रार्थवादादेरपि स्वार्थपरत्वे विधिशेषता न स्यात्तत्राह — अवान्तरमिति । तथा च विधौ महातात्पर्यं युज्यते इत्यर्थः । त्रयीशिरसि खिन्नधियो वेदार्थविचार-दक्षा इत्यर्थः । अर्थवादादेः स्वार्थतात्पर्ये तस्यामुख्यत्वे च हेतुमाह— तत्तद्धिय इति । तत्तद्वाक्यजन्यवज्रहस्तत्वादिज्ञानस्य विधिषु वषट्करि-ष्यन् ध्यायेदिति विधिषु शेषतया ध्यानादिविषयत्वेनानुप्रवेशा-दित्यर्थः । ध्येयरूपज्ञानाभावे ध्यानासम्भवात्तज्ज्ञानस्य तच्छेषतया प्रधानफलवत्त्वात्तद्वाक्यस्य तात्पर्यममुख्यत्वं च युज्यत इत्यर्थः । तस्मा-

न्सर्वाण्यपि सगुणब्रह्मविषयाणि वाक्यानि गुणापवादद्वारा गुणोपहितस्य वस्तुगत्या निर्गुणस्य प्रमितिजनकत्वाद्वाऽऽशयशुद्धिद्वारेणापि निर्गुणब्रह्मप्रमितिजनकत्वाद्वा निर्गुणब्रह्मपराण्येव प्राणाद्युपासनावाक्यान्यपि चित्तशुद्धिद्वारा तथेति न सर्ववेदान्तानां ब्रह्मपरताबाध इति भावः ॥ ४७० ॥

एवं तावत्सर्वेषां वेदान्तानामद्वितीयब्रह्मात्मन्येव समन्वयो न तु नियोगे न वा भावनायामित्युक्तं लिङ्वाक्यस्य नियोगादिनिष्ठत्वेपि कर्मकाण्डस्यापि सर्वस्य न नियोगादिपरत्वनियमः निषेधवाक्ये व्यभिचारादित्यप्युक्तमिदानीं श्रेयःसाधनताया लिङ्वाच्यत्वे पूर्वतन्त्राभियुक्तानां वचनविरोधमपरिहृतं परिहर्त्तुं वृत्तमनुकीर्त्तयति-

**श्रेयःसाधनता लिङर्थ इति च प्रागुक्तमत्यादरा-**
**च्छ्रेयः साधनयागदानहवनाद्यर्थैकनिष्ठं ततः ।**
**सर्वं कर्मवचो नियोगपरता तस्यापि नाऽऽलोचने**
**वक्तव्यं किमुतास्य वेदशिरसः सा नेतिभूयोऽपि नः॥४७१॥**

श्रेयःसाधनतेति । प्रागुक्तमिति । ब्रजति तदिह श्रेयो हेतुर्लिङादिपदार्थतामित्यत्रेत्यर्थः । श्रेयःसाधनयागदानहवनाद्यर्थैकनिष्ठं हवनं होमः श्रेयःसाधनीभूतयागादिनिष्ठं यागादिगतश्रेयःसाधनत्वनिष्ठमित्यर्थः । यतः श्रेयःसाधनत्वमेव लिङर्थ इति प्रागुक्तं ततः प्रत्ययार्थस्यैव प्रधानतया वाक्यार्थत्वात्सर्वं कर्मवचः कर्मप्रतिपादकं वचनं श्रेयःसाधनयागदानहवनाद्यर्थैकनिष्ठं यतश्च कर्मवचः सर्वं श्रेयःसाधननिष्ठमित्युक्तं ततस्तस्य कर्मवचसोऽप्यालोचने विचारे क्रियमाणे न नियोगपरता किमुत्त वक्तव्यं वेदान्तवचस्सु सा नियोगपरता नेत्यप्युक्तमतो न वेदान्तवचःस्वित्यत्रेत्यर्थः ॥ ४७१ ॥

नन्वथातो धर्मजिज्ञासा चोदना लक्षणोऽर्थो धर्म इति धर्मस्य

जिज्ञास्यत्वं चोदनाप्रमाणकत्वं च वदता जैमिनिना नियोगस्यैव श्रेयसाधनधात्वर्थव्यतिरिक्तस्य धर्मत्वं लिङर्थत्वं चोक्तमतः श्रेयः साधनत्वस्य लिङर्थत्वं तद्वचनविरुद्धमित्याशङ्क्याह—

**श्रेयःसाधनयागदानहवनाद्यर्थेषु कार्यात्मसु-**
**सर्वं कर्मवचः प्रमाणमिति तु ग्राह्यं वचो जैमिनेः।**
**भाष्यं पश्यत शाबरं स्फुटतरं यो यागमित्यादिकं**
**श्रेयसाधनयागमात्रवचनं धर्माभिधानं वदत् ॥ ४७२ ॥**

श्रेयःसाधनयागेति। जैमिनेर्वच उक्तं सूत्रं कार्यात्मसु श्रेयःसाधनयागदानहवनाद्यर्थेषु कृतिसाध्यश्रेयःसाधनत्वे सर्वं कर्मवचः प्रमाणमित्यस्मिन्नर्थे ग्राह्यमिति सम्बन्धः। जैमिनीयवचोऽपि चोदनालक्षणोऽर्थो धर्म इत्येवमादिकं न श्रेयःसाधनव्यतिरिक्तस्य लिङर्थत्वं धर्मत्वं वा बोधयति किन्तु श्रेयःसाधनयागादेरेव श्रेयसाधनत्वाकारेण लिङाद्यर्थत्वं धर्मत्वं चेति बोधयतीत्यर्थः। तत्र प्रमाणमाह—भाष्यं पश्यतेति। स्फुटतरं स्पष्टार्थं भाष्यमेवाह—यो यागमित्यादिकमिति। धर्माभिधानं धर्म इतिपदं श्रेयःसाधनयागमात्रवचनं वाचकमिति स्फुटतरं वदत् यो यागमित्यादिशाबरभाष्यं पश्यतेति सम्बन्धः। भाष्यकारो हि धर्मजिज्ञासासूत्रे धर्मशब्दं व्याचक्षणो यो यागमनुतिष्ठति तं धार्मिकमिति समाचक्षत इतिवदत् श्रेयःसाधनयाग एव धर्म इति धर्मशब्दार्थं व्याचकार। अतस्तस्यैव जिज्ञास्यत्वमिष्टसाधनत्वाकारेण लिङादिचोदनाप्रमाणकत्वं चेति जैमिनेर्मतमिति भावः॥ ४७२ ॥

ननु सूत्रस्थधर्मशब्दस्य क्रतुवाचित्वे नपुंसकलिङ्गताप्रसङ्गः। अपूर्ववाचिन एव तस्य पुल्ँलिङ्गत्वात् क्रतुवाचिनस्तस्य तन्नियमात्तनि

धर्माणि प्रथमान्यासन्निति क्रतुवाचिनो धर्मशब्दस्य नपुंसकलिङ्गत्व-दर्शनाच्चेति चेत्तत्राह—

पुल्ँलिङ्गतापि घटते क्रतुगामिनोऽस्य
सूक्ष्मात्मना भवति हि क्रतुरप्यपूर्वम् ।
तेन क्रतोरुपचरन्नभिदां पुमान्स्यात्
क्लीबस्तु धर्ममिति हि क्रतुवाचकत्वे ॥ ४७३ ॥

पुल्ँलिङ्गतेति । क्रतुगामिनः क्रतुविषयस्यास्य धर्मशब्दस्य पुल्ँलिङ्गतापि घटते कुत इति चेत्तत्राह—सूक्ष्मात्मनेति । यतः क्रतुरपि सूक्ष्मात्मनाऽपूर्वं भवति । तेनापूर्वेण सह क्रतोर्यागस्याभिदामुपचरन्नुपचारवृत्त्या बोधयन् धर्मशब्दः पुमान्स्यात्पुल्ँलिङ्गः स्यादित्यर्थः । कदापि तर्हि नपुंसकलिङ्गो न भवेत्तत्राह क्लीब इति । अभेदमविवक्षित्वा यदा क्रतुमात्रवाची स्यात्तदा नपुंसकलिङ्गो भवेदित्यर्थः । यद्यपि धर्मशब्दस्य क्रतुवाचित्वे नपुंसकलिङ्गतैव युक्ता तथाप्यपूर्वस्य क्रतोरेव सूक्ष्मरूपत्वात्क्रतोस्तद-भेदविवक्षया तस्य पुल्ँलिङ्गत्वमपि घटते । अभेदविवक्षा च क्रतोः स्व-र्गादिकं प्रत्यव्यवधानत्वज्ञापनार्थमिति भावः ॥ ४७३ ॥

ननु श्रेयःसाधनस्य वाक्यार्थत्वे तस्य प्रधानतया प्रधानाकाङ्क्षा-नुरोधेनैवाप्रधानानामन्वयात्प्रधानीभूतस्य श्रेयःसाधनयागादेः क्रिया-त्वेन प्रथमं कस्य क्रियेति कर्त्राकाङ्क्षितत्वात्स्वर्गयागयोश्च साध्यसाधन-त्वेनान्वयादन्यस्य चाभावात्स्वर्गकाम एवादौ कर्तृत्वेनान्वयं प्रतिपद्य कर्तु-रेव फलभोक्तृतायामभेदं फलसाधनं कर्मेति स्वामित्वलक्षणाधिकारा-न्वयं स्वस्यावगच्छतीति वक्तव्यम् । एतच्च स्वर्गकामधिकरणविरुद्धं तत्राधिकारिविशेषणस्यैव स्वर्गस्य कर्तृविशेषणतया स्थितत्वात्तच्च नियोगस्य वाक्यार्थत्वे संगच्छते । तत्र हि नियोगस्य प्रत्ययार्थतया प्रधानत्वेन तदाकाङ्क्षानुरोधेनैवान्येषामन्वयस्य वक्तव्यत्वात्तस्य च

कस्य नियोग इतिनियोज्याकाङ्क्षात्वात्प्रथममेव स्वर्गकामो ममायं नियोग इति नियोज्यत्वेनान्वीयते ममायं नियोग इति स्वामितया-न्वयित्वमेव वाधिकारित्वमपि तदनन्तरं च सनियोगस्वर्गकामकृति-साध्यतयाऽवगतः स्वस्याभावार्थतया साक्षात्कृतिसाध्यत्वानुपपत्तेः। नियोगनिर्वृत्तिक्षमे धात्वर्थे नियोज्यस्य कर्तृत्वेनान्वयमाक्षिपतीत्य-धिकारिविशेषणस्य सतः स्वर्गस्य कर्तृविशेषणत्वं सिद्ध्यति। तथा च तदधिकरणविरोधपरिहारार्थं नियोग एव वाक्यार्थः स्वीकर्त्तव्य इत्याशङ्क्याह—

**इष्टाभ्युपायवचनौ लिङितिस्थितौ च**

**स्याद्भावनावचनताऽस्य यदा तदा च।**

**कर्त्तुर्भवेदधिकृतिस्तु नियोगवादे**

**स्वाम्ये स्थिते सति भवेदथ कर्तृभावः॥ ४७४॥**

इष्टाभ्युपायवचन इति। इष्टसाधनवाचक इत्यर्थः। अस्य लिङः, निदर्शनार्थमाह—स्याद्भावनावचनतेति। यदाऽस्य भावनावचनता तदा यथा कर्त्तुरेवाधिकारस्तथेष्टाभ्युपायवचनो लिङितिस्थितावपि कर्तुरेवाधिकारो नियोगवादे तु स्वाम्यधिकारे स्थित एवार्था-नन्तरं कर्तृत्वमित्यर्थः। एतदुक्तं भवति। यद्यप्यधिकारान्वयपुरस्सर-कर्त्रन्वयो नियोगवादे भवति अस्मन्मते च न सम्भवति तथापि नैतावताऽस्मन्मते तदधिकरणविरोधो भवति। भावनावादस्योपपत्ते-रिति। एतच्च यागादेः क्रियारूपस्य लिङर्थस्य श्रेयःसाधनस्य श्रेयो-रूपार्थविशेष्यतया प्रधानस्याकाङ्क्षानुसारेणोक्तम्। वस्तुतस्त्वस्म-न्मते साधनस्वरूपप्रतिपत्त्यर्थं श्रेयसोपेक्षितत्वादभिलषितत्वाच्च श्रेयस एव प्राधान्यात्तदाकाङ्क्षानुरोधेन भोक्तृत्व एव प्रथमं भवतीति स एवान्वयः। पश्चाद्धात्वर्थविषयविधिसामर्थ्याद्धात्वर्थे अधिकारिणः

कर्त्रन्वय इत्याधिकारान्वयपुरस्सर एव कर्त्रन्वय इति न तदधिकरणविरोधशङ्कापीति द्रष्टव्यमिति ॥ ४७४ ॥

नन्वन्वयव्यतिरेकाभ्यामिच्छैव प्रवर्त्तिका लोकेऽनुभूयते इष्टसाधनत्वज्ञानस्यापि तद्वारेणैव प्रवर्त्तकत्वान्न हि ज्ञानं प्रसह्य प्रवर्त्तयति साक्षात्प्रवर्त्तक एव लिङाद्यर्थ इतीच्छैव लिङर्थः नत्विष्टसाधनत्वमितीच्छाप्रत्ययार्थवादिमतमपाकरोति —

इष्टाभ्युपायो विधिरात्मनीच्छा-
मुत्पादयन्प्रेरकतामुपैति ।
इष्टाभ्युपायेऽवगते लिङादे-
रिच्छाफलादेनमुपैति सद्यः ॥ ४७५ ॥

इष्टाभ्युपाय इति । इष्टसाधनत्वेन ज्ञायमानो यागादिरित्यर्थः । विधिर्विधीयत इति विधिः । मानान्तरेणाज्ञातो लिङादिना श्रेयःसाधनत्वेन ज्ञायमानो यागादिरेवात्मनि स्वस्मिन्यागादौ लोके हि स्वेष्टसाधनत्वप्रकारकज्ञानमेव स्वविषयधात्वर्थविषयेच्छामुत्पादयत्तद्द्वारा प्रवृत्तिकारणं न त्विच्छामात्रं तस्या ज्ञानपरतन्त्रायाः स्वतन्त्रकारणत्वाभावात् न हीच्छा स्वसमानविषयज्ञानं विना क्वचित्प्रवर्त्तिका दृष्टा । नन्विच्छाया उत्पत्तावेव ज्ञानमपेक्ष्यते न तु स्वकार्ये तद्व्यतिरेकाभावादिति चेत्सत्यं तथापि ज्ञाते विषये इच्छा नत्वन्यथेति सिद्धं ज्ञानं च स्वविषयेष्टसाधनत्वविषयमेव चिकीर्षायाः कारणमुदासीनज्ञाने सति चिकीर्षादर्शनात्ततश्च यागचिकीर्षार्थं यागेष्टसाधनत्वज्ञानं न प्रत्यक्षेणानुमानेन वा सम्भवति । तस्य तदगोचरत्वादन्यत्रागमेतरन्मानं नियतविषयत्वान्न तत्र प्रवर्त्तते । तथा च तस्य शाब्दत्वस्य वक्तव्यत्वात्तत्र च पदान्तरस्य तत्राशक्तेर्लिङादिपदादेव तदुपस्थितिर्भवतीत्यावश्यकत्वात्तदेव

लिङर्थः । न च साक्षात्प्रवर्त्तक एव लिङर्थ इत्यभिलषितसाधनत्वज्ञानं विना सा भवति । नन्विच्छाविधानानुपपत्त्या श्रेयः साधनत्वज्ञानात्तत्रेच्छा भवतीति चेत्तर्हि नियमेनापेक्षितत्वेन श्रेयः साधनत्वमेव लिङादिवाच्यमस्तु। नन्विच्छा ज्ञानमप्यपेक्षत इति चेन्न–प्रवृत्ताविच्छामात्रस्यैवोपयोगात्तज्ज्ञानापेक्षायामपि तस्यान्यतः सिद्धत्वेन लिङादेस्तत्र कारणत्वानुपपत्तेः इच्छायाः विषयसौन्दर्यलभ्यत्वेन विधातुमशक्यत्वाच्चेति भावः । नन्विच्छायाः स्वर्गविषयिण्याः कथं क्लेशात्मकयागविषयत्वमित्याशङ्क्य स्वर्गादौ फलत्वेन प्रथममिच्छायामपि यागादावपि लिङादिनेष्टसाधनत्वेनावगते इच्छा भवत्येव । तस्याः फलविषयत्ववत्फलसाधनविषयतौचित्यादित्यभिप्रेत्याह–इष्टाभ्युपाय इति । एनमिष्टाभ्युपायं साधनेच्छाया इष्यमाणफलप्रयुक्तत्वात्फलादित्युक्तम्। मानन्तर्यपञ्चमी वा । फलेच्छानन्तरमित्यर्थः ॥ ४७५ ॥

ननु माभूदिच्छायाः लिङाद्यर्थत्वं तथापीष्टसाधनत्वं कुतस्तदर्थो भवेत्प्रवर्त्तकं हि विध्यर्थः, नत्विष्टसाधनत्वज्ञानं प्रवर्त्तकं तस्य चिकीर्षायामेव हेतुत्वात्प्रवृत्तिपर्यन्तेच्छाजनकत्वेन ज्ञानस्य प्रवर्त्तकशब्दाभिधेयत्वोपपत्तेश्च, अतो नियोग एव प्रवर्त्तकस्तत्रेच्छाया अनपेक्षितत्वादतः स एव लिङाद्यर्थो भवतीत्याशङ्क्य नियोगसहस्रेणापीच्छां विना दुःखहेतुयागे प्रेक्षावत्प्रवृत्त्यनुपपत्तेः, सत्यां त्विच्छायां तदुपपत्तेर्नियोगोपीच्छामुत्पाद्यैव प्रवर्त्तयेत्ततः समानो दोषः, न वा नियोगादिच्छा भवति, तस्या इष्टसाधनत्वज्ञानजन्यत्वादित्यभिप्रेत्याह—

**नियोगकोट्याऽपि नरो न कश्चि–**
**दिच्छां विना दुःखनिदानभूतम् ।**
**करोति कर्मेह पुमर्थरागा–**
**त्प्रवृत्तिरेवेति हि राजमार्गः ॥ ४७६ ॥**

नियोगकोट्येति । नियोगसहस्रेणापीत्यर्थः । इह जगति । हिः प्रसिद्धौ । अत एवेच्छया सामान्यतः फलसाधने प्रवृत्तत्वादिष्टसाधनत्वस्य लिङर्थत्वपक्षे विधेरप्रवृत्तप्रवर्त्तकत्वं न स्यादित्यपि नियोगपक्षे तुल्यम् । तत्रापीच्छा तदधीनसामान्यप्रवृत्तेस्तुल्यत्वात् । अत एव ज्ञानस्य प्रवर्त्तकत्वप्रसिद्धिरप्यौपचारिकीति न कल्प्यमिच्छाया द्वारत्वादिति भावः ॥ ४७६ ॥

नन्विष्टसाधनत्वज्ञानस्य प्रवर्त्तकत्वमनुपपन्नं सुधामरीचिमण्डलादाविष्टसाधनत्वज्ञाने सत्यपि प्रवृत्त्यदर्शनात्कर्त्तव्यताबुद्धिस्तु कार्यविषयिणी तत्र नेति तद्व्यतिरेकादेव प्रवृत्तिव्यतिरेक इति कथं प्रसिद्ध्युपन्यासेन तस्य प्रवर्त्तकत्वं प्रमाणसिद्धमपह्नूयते ततो न श्रेयःसाधनत्वं लिङर्थ इति तत्राह—

इष्टाभ्युपायस्य च कार्यभावः
प्रयत्ननिष्पाद्यतयोपपन्नः ।
स चावसेयो वचनाल्लिङादेः
प्रत्यक्षतो रागनिबन्धनस्तु ॥ ४७७ ॥

इष्टाभ्युपायस्येति । यदि धात्वर्थव्यतिरिक्तं किञ्चित्कार्यं नाम कामिकर्त्तव्यबुद्धिविषयः स्यात्तदा तद्व्यतिरेकात्प्रवृत्तिव्यतिरेकः क्वचित्स्यान्न त्वेदस्ति हि यतः इष्टाभ्युपायस्य श्रेयःसाधनधात्वर्थस्य कार्यभावः कामिकर्त्तव्यत्वमुपपन्नं तत्र हेतुः प्रयत्ननिष्पाद्यतयेति । कृतिसाध्यत्वादित्यर्थः । तथा च कृतिसाध्यतया श्रेयःसाधनयागस्यैव कर्त्तव्यतोक्त्या कृतिसाध्येष्टसाधनताज्ञानं प्रवर्त्तकमित्युक्तम् । अतस्तद्व्यतिरेकादेव प्रवृत्तिव्यतिरेक इति कृतिसाध्यश्रेयःसाधनत्वमेव लिङर्थ इत्याह—सचेति । स कृतिसाध्येष्टाभ्युपायः, अवसेयो—निश्चेयः । चश-

ब्दोऽवधारणे । ननु कृतिसाधनत्वेन यागस्य कार्यत्वेपि कृत्युद्देश्यता-लक्षणं कार्यत्वं नियोगस्यैव स एव प्रवर्त्तको लिङर्थ इत्याशङ्क्य तदपि यागस्यैव तच्च प्रत्यक्षेणावसीयत इति न लिङर्थ इत्याह— प्रत्यक्षत इति । रागनिबन्धनो—रागविषयत्वघटित इत्यर्थः ॥ ४७७ ॥

ननु क्लेशात्मकस्य यागस्य कथं कृत्युद्देश्यत्वमित्याशङ्क्य श्रेयः-साधनत्वेन कृतिजनकचिकीर्षाविषयत्वाख्यं कृत्युद्देश्यत्वं तस्य सम्भवतीत्याह—

कार्यत्वमिच्छावशवर्त्ति किञ्चि-
दिष्टाभ्युपाये निजमस्य किञ्चित् ।
निजं लिङादेरवसेयमस्य
साक्षिप्रमादादितरप्रतीतिः ॥ ४७८ ॥

कार्यत्वमिति । इष्टाभ्युपाये इच्छावशवर्त्तीच्छाधीनं किञ्चिच्चिकीर्षा-विषयत्वलक्षणं कृत्युद्देश्यत्वाख्यं कार्यत्वमस्ति । अस्येष्टाभ्युपायस्य निजं स्वाभाविकं किञ्चित्कृतिसाध्यत्वलक्षणं कार्यत्वम् । तच्च लिङादेः सकाशादवसेयं न तु कृत्युद्देश्यत्वाख्यं कार्यत्वं तस्येच्छाविषयत्वस्य साक्षिणैव सिद्धत्वात् कृतिसाध्यश्रेयःसाधनत्वस्य शब्दैकगम्यत्वा-त्तदेव लिङाद्यर्थ इत्यर्थः । ननु माभूत्कृत्युद्देश्यत्वाख्यं कार्यत्वं लिङर्थः कृतिसाध्येष्टसाधनत्वापेक्षया लाघवात्कृतिसाध्यत्वाख्यं कार्यं लिङर्थः प्रवर्त्तकं च भवत्विति चेत्तर्हि स्वशिरश्छेदादौ किमिति न प्रवर्त्तेत । नन्विष्टसाधनताज्ञानजन्यं कार्यताज्ञानं प्रवर्त्तकमिति चेत्तर्हि तुल्यं गौरवम् । तर्हि विनिगमनाभावात्कस्य प्रवर्त्तकत्वं निर्द्धा-र्यत इति चेदुच्यते । यदवच्छेदेन यस्य प्रवृत्तित्वावच्छिन्नं प्रति नियतपूर्ववर्तित्वं तस्य तद्धेतुत्वं ह्युचितमनुगते कारणे संभवत्य-ननुगततत्कल्पनाऽयोगात्कृतिसाध्येष्टसाधनताज्ञानं च तथा न तु

श्रेयः साधनत्वज्ञानजन्यकार्यताज्ञानं वैदिक्यां प्रवृत्तौ तदभावात्तत्र कार्यताज्ञानस्य शब्दैकजन्यस्येष्टसाधनताज्ञानजन्यत्वाभावात् । नन्विष्टसाधनविषयकार्यताज्ञानं प्रवर्त्तकं तच्च तत्राप्यस्तीति चेद्यदीष्टसाधनत्वमज्ञायमानमेव प्रवर्त्तकज्ञानावच्छेदकमित्युच्येत तदसद्वस्तुगत्येष्टसाधनेपि कदल्यादौ तदज्ञानदशायां प्रवृत्त्यदर्शनादन्यथोपेक्षाज्ञानादपि प्रवृत्त्यापाताद्यदि चप्रवर्त्तकज्ञानविषयं सदेव तत्तदवच्छेदकमिति ब्रूषे तर्हि वैदिककार्यताज्ञानस्य तदविषयत्वात्तत्र प्रवृत्त्यनुपपत्तिस्तदवस्थैव तस्मात्कृतिसाध्येष्टसाधनत्वज्ञानस्य प्रवृत्त्यव्यभिचारेण प्रवर्त्तकत्वात्कृतिसाध्येष्टसाधनत्वमेव लिङर्थ इति भावः ॥ ४७८ ॥

स्वोक्ते लिङर्थ आचार्यवचनं प्रमाणयति—

**जानात्यर्थे लिङ्पदं गौणमाहु-**
**र्जानात्यर्थः कर्तृतन्त्रो न हीष्टः ।**
**यागाद्यर्थे कर्तृतन्त्रे हि मुख्यो**
**लिङ्लोडादिः श्रेयसो हेतुभूते ॥४७९॥**

जानात्यर्थ इति । प्रमाणज्ञान इत्यर्थः । लिङ्पदं पश्येदित्यादिकमाहुराचार्या इति शेषः । तत्र हेतुः जानात्यर्थः कर्तृतन्त्रो नचेष्ट इति । चो हेतौ यतः प्रमाणज्ञानं पुरुषेच्छाधीनकृतिनिष्पाद्यतया नेष्टं तत इत्यर्थः । आचार्याः लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्तीत्यादिभाष्ये इष्टसाधनेपि ज्ञाने श्रूयमाणं पश्येदित्यादिलिङ्पदं गौणमेव न मुख्यमित्याहुः । तत्र बीजं ज्ञानस्य पुरुषतन्त्रत्वाभावेनविधिजन्यपुरुषेच्छाधीनप्रयत्नानिष्पाद्यतया तद्विषयलिङादेः स्ववाच्यैकदेशेष्टसाधनत्वमात्रबोधकत्वमेव वक्तव्यम् । तथा च कृतिसाध्येष्टसाधनत्वमेव लिङर्थो इति तेषां संमतमित्यर्थः । ननु ज्ञाने विधेर्गौणत्वे कुत्र तर्हि विधेर्मुख्यत्वं कृतिसाध्यत्वश्रेयसाधनत्वोभयरूपवति

यागादावित्याह—यागाद्यर्थ इति। हिः प्रसिद्धौ। यद्वा ज्ञानस्याकर्तृतन्त्रत्वे लिङ्पदं किमिति मुख्यं न भवेत्तत्राह—यागाद्यर्थ इति। हि यतः कर्तृतन्त्रे विधिजन्यपुरुषेच्छानिष्पाद्य एव श्रेयः साधने यागादौ लिङादिर्मुख्यस्तस्यैव विधेयतायोग्यत्वादतो न श्रेयः साधनमात्रे ज्ञाने लिङादिर्मुख्य इत्यर्थः ॥ ४७९ ॥

नन्वेवं ज्ञानस्येष्टसाधनत्वमपि न स्यात् कृतिसाध्यस्यैव श्रेयःसाधनत्वदर्शनात्तत्राह—

**जानात्यर्थे श्रेयसो हेतुभाव-**
**भागोऽबुद्धो बोध्यते लिङ्पदेन।**
**यागाद्यर्थे श्रेयसो हेतुभावो**
**मुख्यो बोध्यः कर्तृतन्त्रो न गौणः ॥४८०॥**

जानात्यर्थे श्रेयस इति। आत्मसाक्षात्कारे भागः कृतिसाध्येष्टसाधनत्वलक्षणलिङर्थैकदेशः श्रेयसो हेतुभावो ह्यबुद्धो मानान्तरेणानधिगतो लिङादिपदेन बोध्यते। अतो न तदभावो न हि साधनस्य साधनत्वे कृतिसाध्यत्वं प्रयोजकं न वा कृतिसाध्यत्वं तत्र प्रमाणम्। आसाध्यस्यात्मादेरपि श्रेयोहेतुत्वात् ज्ञानादिगतस्य तस्य लिङादिनैव बोध्यत्वाच्च। यद्यपि श्रेयःसाधनत्वमेव न लिङर्थस्तथापि लिङ्पदं तत्र प्रवर्तमानं स्ववाच्यैकदेशं श्रेयःसाधनत्वमादायैव प्रवर्तते निर्बीजपदप्रवृत्तेरयोगात्। अन्यस्य च स्वार्थाविनाभावादेरभावादतो यस्तु मुमुक्षुर्मोक्षसाधनं न जानाति तच्च जिज्ञासते तं प्रत्यात्मन्येवात्मानं पश्येदित्यादिवाक्यं ज्ञानस्याधिकारिविशेषणमोक्षाख्येष्टसाधनतां बोधयति ज्ञानं मोक्षसाधनमिति न चायमर्थः प्रमाणान्तरेणापोद्यत इति भावः। नन्वेवं यागादावपि लिङर्थो मुख्यो न भवेत्तस्य कृतिसाध्यत्वेऽपि मोक्षसाधनत्वाभावेन निरतिशयश्रेयः-

साधनत्वाभावात्तत्राह—यागाद्यर्थ इति । अमुख्य इतिच्छेदः । व्युत्पत्तिकाले हि लिङादिपदं कृतिसाध्यश्रेयःसाधनत्वमात्रे व्युत्पद्यते न मोक्षसाधनत्वे तस्य तदानुपस्थानात् । ततः स्वर्गादेः सुखाभासस्यापि पुरुषविशेषं प्रतीष्टत्वाद्यागादेरमुख्यश्रेयःसाधनत्वस्य सत्त्वात्कृतिसाध्यत्वाच्च तत्र लिङादिर्मुख्य एव न गौणो न कृतिसाध्यत्वमात्रपर इत्यर्थः ॥ ४८० ॥

तर्हि किं भाष्यकारस्य न वेदान्तेषु कुत्रापि संमतो विधिः ? क्वचित्संमत एवेत्याह —

याकाद्यर्थे मुख्यता यद्वदस्य
ब्रह्मज्ञानस्यान्तरङ्गेषु तद्वत् ।
तर्कादीनां कर्तृतन्त्रत्वहेतो-
र्ज्ञानादर्वाग्गौणताहेत्वभावात् ॥४८१॥

यागाद्यर्थ इति । अस्य विधेर्यद्वद्यागाद्यर्थे मुख्यता तद्वद् ब्रह्मज्ञानस्यान्तरङ्गेषु विविदिषानन्तरमपि यावज् ज्ञानमनुष्ठेयेषु श्रवणादिसाधनेष्वपीत्यर्थः । ननु श्रवणादेर्ज्ञानरूपतया पुरुषप्रयत्नानिष्पाद्यत्वात्कथं तत्र विधिर्मुख्यार्थ इति तत्राह—तर्कादीनामिति । तर्कादिः प्रमाणप्रमेयसंभावनादिविषयश्रवणादिः । लोके हि व्रह्यादिविषयतर्कस्य प्रमाणप्रमेयपारतन्त्र्यं विना पुरुषेच्छाधीनत्वं दृश्यते । अतः श्रवणादेरपि तर्कात्मकत्वात्तस्य च पुरुषतन्त्रत्वान्न तस्य विधेयत्वं विरुद्धमित इत्यर्थः । ननु लोके तर्कस्य पुरुषप्रयत्ननिष्पाद्यत्वेपि न श्रवणादेस्तथात्वं युज्यते । अद्वैतिमते नियोगनियोज्यादेर्भेदाभावात्तं विना धात्वर्थस्य कृतिसाध्यत्वाभावादित्याशङ्क्य नियोगादेर्वास्तवभेदाभावेपि ज्ञानात्प्राक्कल्पितभेदस्य यागादाविव संभवाद्यागादिविधि-

वत्तद्विधिरपि संभवतीत्याह—ज्ञानादीति। आत्मसाक्षात्कारात्प्राक् गौणताहेतोर्नियोगादिभेदाभावस्याभावादित्यर्थः ॥ ४८१ ॥

ननु वेदान्तेषु विधिसंभवे तत्प्रतिपाद्यस्य भूतस्य ब्रह्मणो भव्यशेषत्वेन स्वप्राधान्यं न स्यादित्याशङ्क्याह—

भूतस्य भव्याय यथोपदेशः
क्रियापरे वस्तुपरे तु काण्डे।
न हीष्टमेवं विपरीतमस्मि-
न्भव्यस्य भूताय सदोपदेशः ॥ ४८२ ॥

भूतस्येति। यथा क्रियापरे काण्डे कर्मकाण्डे भूतस्य यूपादेरुपदेशो भव्याय एवं वस्तुपरे काण्डे नहीष्टं नैवेष्टं किन्तु विपरीतमित्यर्थः। वैपरीत्यमेवाह—अस्मिन्भव्यस्येति। भव्यस्य श्रवणादेरुपदेशो भूताय भूतब्रह्माभिव्यक्तय इत्यर्थः। यद्यपि भव्याय भूतमित्यत्रायमर्थ उक्तस्तथापि विध्यङ्गीकारे ब्रह्मणोपि विधिशेषत्वं स्यादित्याक्षिप्य समर्थ्यते। प्रतिज्ञामात्रं च तत्र कृतम् अत्र तु तदुपपादनमपीति न पौनरुक्त्यम् ॥४८२॥

ननु वैपरीत्याङ्गीकारे किं बीजमित्याशङ्क्याह—

भव्यप्रतीतावुपयोगभाजो
भवन्ति कार्त्स्न्येन च सिद्धवादाः।
क्रियाप्रधाने न तथाऽत्र किन्तु
भूतप्रतीतौ खलु भव्यवादाः ॥ ४८३ ॥

भव्यप्रतीताविति। क्रियाप्रधाने काण्ड इति शेषः। अत्र ब्रह्मकाण्डे भूतप्रतीतौ ब्रह्मप्रतीतौ भव्यवादाः श्रवणादिविधयः यद्धि यदपेक्षित-

मर्थं तदर्थमेव बोधयति तत्तच्छेषमिति वक्तव्यम्। यथा यूपादि। न च तत्त्वमादिवाक्यानि श्रवणविधिसाध्यज्ञानविषयमात्मानं तदर्थमेव बोधयन्ति स्वार्थावगमादेव परमपुरुषार्थसिद्धेस्तथा च श्रवणादि विधेरेव तत्त्वमादिवाक्यार्थब्रह्माविचाल्याभिव्यक्तिहेतुतया तच्छेषत्व-मित्यर्थः ॥ ४८३ ॥

ननु वेदान्तानां श्रवणादिविधिपरत्वे ब्रह्मणोऽसिद्धिप्रसङ्गः। तत्र प्रमाणान्तराभावाद्वेदान्तानां ब्रह्मण्यपि तात्पर्ये वाक्यभेदप्रसङ्गात्। न चावान्तरतात्पर्याद्वेदान्तादद्वैतब्रह्मसिद्धिरिति वाच्यम्। प्रमाणा-न्तरविरोधे ततस्तदसिद्धेः। न च ब्रह्मणि वेदान्तानां महातात्पर्यं विधौ त्ववान्तरतात्पर्यमिति वाच्यम्। अन्यत्र विधावेव महातात्प-र्यस्य क्लृप्तत्वादित्याशङ्क्याह—

भव्यप्रतीतौ न हि कश्चिदर्थो
भूतप्रतीतौ पुनरस्ति मुक्तिः।
श्रोतव्य इत्यादि ततो विधानं
भूतोपदेशानुगुणं समस्तम् ॥ ४८४ ॥

भव्यप्रतीताविति। हि यतो भव्यस्य श्रवणादेः कश्चिदर्थो न स्वा-तन्त्र्येण प्रयोजनं नास्ति भूतस्य ब्रह्मात्मनः प्रतीतौ साक्षात्कारे तु मोक्षः प्रयोजनं विद्यते। ततः श्रोतव्य इत्यादि समस्तं विधानं भूतोपदेशानुगुणमेव न स्वप्रधानं तथा च स्वातन्त्र्येण परमपुरुषार्थ-साधने ब्रह्मण्येव महातात्पर्यं विधेरपि महातात्पर्यविषयत्वे तस्यैव प्रयोजकत्वादतो वेदान्तैरवान्तरमुख्यतात्पर्यभेदेन विधिब्रह्मोभय-विषयैरुभयसिद्धेर्नान्यतरस्याप्यसिद्धिरिति भावः ॥ ४८४ ॥

ननु कर्मकाण्डे सिद्धबोधिवाक्यानि मुख्यगुणलक्षणान्यतमया

वृत्त्या भव्यवाक्यशेषतां भजन्ते । अत्र भव्यवाक्यानि तु कया वृत्त्या भूतवाक्यशेषतां भजेरन् मुख्यार्थस्य सर्वत्रासंभवादित्याशङ्क्य तद्वदेवेत्याह—

**आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-**
**र्भव्यप्रतीतिजनकैः सह भूतवादाः ।**
**सम्बन्धिनो विधिवचःसु तथाऽत्र सर्वे**
**भव्यार्पणाः परिवृढप्रतिपादकेन ॥ ४८५ ॥**

आदायेति । यथा विधिवचःसु विधिवाक्येषु विधिप्रकरणेषु भूतवादाः भूतं वदन्तीति यूपादिवाक्यानि मुख्यगुणलाक्षणिक-प्रवृत्तीरादाय भव्यप्रतीतिजनकैः यूपे पशुं बध्नीयादित्यादिविधिपदैः सह सम्बन्धिनो भवन्ति । तथाऽत्र ब्रह्मकाण्डे सर्वे भव्यार्पणाः शब्दाः श्रवणादिविधयः परिवृढप्रतिपादकेन स्वप्रधानब्रह्मप्रतिपादकेन तत्त्वमादिवाक्येन सम्बन्धिनो भवन्तीति सम्बन्धः । कर्मकाण्डे हि भूतवादा न नियतविध्यन्वयं प्रतिपद्यन्ते । किन्तु कश्चित्कयाचिद्वृत्त्या यथा यूपं तक्षति यन्न दुःखेन संभिन्नमित्यादिवाक्यस्थयूपस्वर्गादि-पदानि मुख्यया वृत्त्यैव स्वार्थं बोधयन्ति विधिना संगच्छन्ते । यथादित्यो यूप इत्यादिवाक्यस्थादित्यादिपदानि तेजस्वित्वादि-गुणयोगेन गौण्या वृत्त्याऽर्थं बोधयन्ति विध्यन्वयं भजन्ते । यथा वा वायुर्वै क्षेपिष्ठा देवतेत्यादीनि प्राशस्त्यं लक्षणयावगमयन्ति विध्यन्वयिनो भवन्ति । एवं वेदान्तेपि श्रवणादिवाक्यं मुख्यया वृत्त्या स्वार्थं बोधयद्ब्रह्मप्रतिपत्तिप्रतिबन्धनिवृत्तिद्वारा तत्त्वमादि-वाक्येन संगच्छते । पश्येदित्यादि वाक्यं त्विष्टसाधनत्वगुणयोगेन ज्ञाने प्रवर्त्तमानं तत्साधनश्रवणादिप्रवृत्तिद्वारा ब्रह्मप्रतिपत्तिहेतुतया

तत्त्वमादिवाक्येनान्वीयते तद्विजिज्ञासस्वेत्यादिकं त्वंतर्नतिज्ञान-साधनश्रवणादिलक्षणया महावाक्येनान्वीयत इत्यर्थः ॥ ४८५ ॥

ननु युक्तं कर्मकाण्डे सिद्धवाचिपदेषु लक्षणागुणवृत्त्याश्रयणं तद्विज्ञास्वेत्यादिषु तु तन्न युक्तं विधित्वान्न विधौ पर शब्दार्थ इति न्यायादित्याशङ्क्याह—

सिद्धार्थवादिवचनेषु न गौणतादि-
दोषाय कर्मपरवाक्यगतेषु यद्वत् ।
कार्यार्थवादिवचनेषु न गौणतादि-
दोषस्तथोपनिषदीति समानमेतत् ॥ ४८६ ॥

सिद्धार्थेति । यद्वत्कर्मपरवाक्यगतेषु कर्मकाण्डगतेष्वादित्यादि-सिद्धार्थवदनशीलेषु गौणतादिर्न दोषाय तद्वदुपनिषदि कार्यार्थ-वाचिषु पश्येदित्यादिषु गौणतादिर्न दोषायेति । एतल्लक्षणादिकं कर्मकाण्डे सिद्धवाक्यानामिव ब्रह्मकाण्डे कार्यवाक्यानामपि तुल्यं गुणप्रधानवैपरीत्येन गुणे त्वन्यायकल्पनेति न्यायस्य तुल्यत्वाद्धर्मन्त-र्वेदीत्यादौ विधावपि लक्षणादर्शनाच्चेत्यर्थः ॥ ४८६ ॥

ननु काण्डद्वयस्यापि ब्रह्मवादिनैकवाक्यत्वाभ्युपगमात्कथं भूतभव्यन्यायवैषम्यम् अर्थभेदाभावादित्याशङ्क्य विवक्षितार्थ-भेदाभावेऽप्यर्थभेदसत्त्वात्प्रमाणप्रमेययोरत्यन्तवैलक्षण्यवत्तद्विषयन्याय-वैलक्षण्यमपि न दोषाय भवतीत्यभिप्रेत्य प्रमाणप्रमेयवैलक्षण्यं दर्शयति—

मानेन मेयावगतिश्च युक्ता
धर्मस्य जाड्याद्विधिनिष्ठकाण्डे ।

मेयेन मानावगतिश्च युक्ता
वेदान्तवाक्येष्वजडं हि मेयम् ॥ ४८७ ॥

मानेनेति। विधिवाक्येनेत्यर्थः। इदं च प्रमात्रादेरप्युपलक्षणम्। मेयं धर्मः प्रतिज्ञातार्थे हेतुमाह—धर्मस्येति। मेयेन मेयत्वाभिमतेन ब्रह्मणा मानं तत्त्वमादिवाक्यमुक्तार्थे हेतुः—अजडमिति। हि यतो वेदान्तवाक्येषु तु मेयमजडं स्वप्रकाशं ततो मेयेन मानावगतिर्युक्तेति सम्बन्धः। धर्मो हि जडत्वाच्चोदनाप्रमाणगम्यः। न चोदनादिस्तद्गम्यः। ब्रह्माकारसंपादकतया तस्य प्रमेयत्वेनाभिमतमपि स्वयं प्रकाशतया न वेदान्तप्रमाणगम्यं किन्तु वेदान्ता एव तेनावेद्यन्त इत्यर्थः ॥ ४८७ ॥

नन्वाख्यातप्रधानपदसमूहो वाक्यमिति वाक्यलक्षणं नैरुक्तादिभिरुच्यते आख्यातं च भवद्भिस्तत्त्वमादिषु न विवक्षितमङ्गीक्रियते अतो वेदान्तानां वाक्यत्वमेव न कुतस्तस्य ब्रह्मप्रमाणता कुतस्तरां मानमेयादिवैलक्षण्यमिति चेन्न तल्लक्षणस्य क्रियावाक्यपरत्वाद्ब्रह्मवाक्यं तु नामप्रधानमेव अतो न प्रमाणादिवैलक्षण्यानुपपत्तिरित्यभिप्रेत्याह—

कर्मप्रधानेऽतिगते च काण्डे
वाक्यत्वमाख्यातपदप्रयुक्तम्।
ब्रह्मप्रधाने श्रुतिमस्तकेऽस्मि-
न्नामप्रधानं वचनं समस्तम् ॥ ४८८ ॥

कर्मप्रधान इति। अतिगतेऽतिक्रान्ते पूर्वस्मिन्नित्यर्थः। स्वस्वपदार्थानां परस्परान्वयप्रतिपादकपदसमूहो वाक्यमिति हि तल्लक्षणं तच्चान्वय-

प्रतिपादनं क्रियावाक्ये क्रियाकाङ्क्षावलेनेति क्रियापदान्वयप्रयुक्तमित्याख्यातप्रयुक्तत्वं वाक्यत्वस्योच्यते। न तु तल्लक्षणया । अन्यथार्थवादपदानां परस्परान्वयस्यावाक्यत्वप्रसङ्गात्तेषामपि वाक्यत्वस्य कैश्चिदङ्गीकृतत्वाद्ब्रह्मवाक्यस्थपदानि तु न स्वार्थान्वये क्रियामपेक्षन्ते तत्त्वंपदार्थावबोधस्यैव सकलपुरुषार्थसाधनतया नामपदार्थस्यैव प्रधानत्वान्नामपदप्राधान्यमेवात्र युज्यत इति भावः। यद्वा न केवलं काण्डद्वयस्य भूतभव्यन्यायवैपरीत्यमपि तु मुख्यलक्षणादिमानमेयविभागादिवैलक्षण्यमपि संभवतीत्याह—आदाय मुख्येत्यारभ्य श्लोकचतुष्टयेन ॥ ४८८ ॥

ननु यत्राख्यातपदमर्थवादादिषु न श्रूयते तत्र स्वस्वार्थान्वयबोधजनकपदसमूहत्वेन वाक्यत्वमस्तु यत्र तु तच्छ्रूयते। तत्र तदन्वितत्वस्य वाक्यलक्षणत्वाभावेपि तदधीनमेव वाक्यस्य स्वार्थबोधकत्वं वक्तव्यमन्यथाख्यातपदस्यान्वयप्रसङ्गाऽस्ति च वेदान्तेष्वस्त्यस्म्यसीति क्रियापदमतस्तदनुरोधेनैव वाक्यस्य स्वार्थबोधकत्वं वक्तव्यमिति न क्रियावाक्यवैलक्ष्यण्यमित्याशङ्क्य यत्राख्यातपदं विवक्षितार्थं भवेत्तत्रैव तदनुरोधित्वं वाक्यस्यास्म्यादीनां तु शब्दतः आख्यातत्वेप्यर्थतो नामत्वमेव यथा शब्दतः सुबन्तस्यापि कर्मपदस्यार्थत आख्यातत्वमिति न तत्त्वमादिवाक्यस्य नामप्राधान्यप्रच्युतिरिति वक्तुं पूर्वोक्तमर्थं स्मारयति—

> कार्यप्रधानमखिलं च पदं सुबन्त-
> माख्यातमेव फलतः खलु कर्मकाण्डे ।
> तद्वत्तिङन्तमपि वेदशिरःसु सर्वं
> नामैव तद्धि परिनिष्ठितवस्तुनिष्ठम् ॥ ४८९ ॥

कार्यप्रधानमिति । कार्यं कर्त्तव्यरूपोऽर्थः प्रधानं तात्पर्येण प्रमेयं

यस्य पदस्य तत्तथा। इदं च तस्याख्यातत्वे हेतुः। सुबन्तं शब्दतः सुबन्तम्; फलतोऽर्थतः कर्त्तव्यार्थप्रतीतिजनकस्यैवाख्यातत्वात् कर्त्तव्यार्थबोधकं नामपदमप्याख्यातमेवेत्यर्थः। तद्वन्नामपदवत् तिङन्तं शब्दतस्तिङन्तमपि नामैवार्थतो नामैव तत्र हेतुस्तर्हीति हि यतस्तिङन्तपदं परिनिष्ठितनिष्ठं ततोऽभव्यार्थबोधित्वस्यैव नामत्वादित्यर्थः॥ ४८६॥

अत्रापि पूर्वोक्तमेवोहरणं स्मारयति—

**आग्नेयमाश्विनमथैन्द्रमितीदृशं हि**

**सर्वं सुबन्तमपि भव्यपरं प्रसिद्धम्।**

**साऽस्येति तद्धितसमन्वितसंनिधाने**

**नामैव तद्भवति यद्भवतीति तद्वत्॥ ४९०॥**

आग्नेयमाश्विनमथैन्द्रमिति। आग्नेयोऽष्टकपालः आश्विनं द्विकपालः ऐन्द्रमेककपालमित्यादौ विद्यमानाग्नेयादिपदानां ग्रहणं भव्यपरं प्रसिद्धं कृतिसाध्ययागादिपरमिति प्रसिद्धमित्यर्थः। ननु कथं नाम्नो भव्यार्थोपस्थापकत्वं लिङादेरेव तद्वाचकत्वादित्याशङ्क्य तद्धितप्रत्ययबलादित्याह—साऽस्येति। सास्य देवतेति सूत्रेण देवतासम्बन्धाय विहितो यस्तद्धितस्तत्समन्वितनामबलेन तत्समन्वयबलादित्यर्थः। नामैवार्थत इति शेषः। भवतीति पदमिति शेषः। तद्वद्यथाऽग्नेयादिपदमाख्यातं तथा यद्भवतीति पदं तदर्थतो नामैवेत्यर्थः। आग्नेयोऽष्टाकपाल इत्यादिपदं सुबन्तमपि तद्धितबलेन द्रव्यदेवतासम्बन्धबोधनद्वारा भव्यार्थबोधकत्वादाख्यातमेव तस्य तल्लक्षणत्वात्तथा शब्दत आख्यातमपि भवतीत्यादिपदं भव्यार्थबोधकत्वान्नामैव भवत्यर्थस्य पुरुषप्रयत्नासाध्यत्वादित्यर्थः॥ ४९०॥

ननु तत्रानुपपत्त्या भवत्यादेर्नामत्वेपि नास्त्यादेर्नामत्वं न ह्यनुमानेन नामत्वं साधनीयं गच्छतीत्यादौ व्यभिचारादित्याशङ्क्या-त्राप्यस्त्याद्यर्थस्यात्मसत्तारूपत्वादभव्यार्थनिष्ठतया नामत्वमेव युज्यत इत्याह--

**अस्त्यस्म्यसीति च तिङन्तपदानि सन्ति**
**वेदान्तवाक्यनिलयानि तथाऽपि तानि ।**
**नाऽऽख्यातशब्दनिजशक्तिधुरं वहेयु-**
**रस्तित्वमात्रविषया हि निषक्तिरेषाम् ॥ ४६१ ॥**

अस्त्यस्म्यसीति । आख्यातशब्दनिजशक्तिधुरमाख्यातशब्दस्य निजासाधारणी कार्यार्थविषया शक्तिस्तस्या धुरं भव्यार्थप्रतीति-लक्षणकार्यमाग्नेयादिपदस्य द्रव्यदेवतासम्बन्धमात्रनिष्ठशक्तित्वा-दर्थलभ्यत्वाद्भव्यस्य कार्यविषयिण्याः शक्तेराख्यातपदासाधारणत्वं न विरुध्यत इत्यर्थः । न वहेयुरित्यत्र हेतुमाह—अस्तित्वेति । हि यत एषामस्त्यादिपदानां निषक्तिरन्वयात्मास्तित्वमात्रविषया तत इत्यर्थः ॥ ४६१ ॥

ननु सर्वेषामाख्यातानां यत्नरूपक्रियावाचित्वाद्यत्नस्य च भव्यार्थविषयित्वात्तदगोचरस्यास्त्यादेः कथं शब्दतोप्याख्यातत्व-मर्थाभावादित्याशङ्क्य यथा धात्वर्थव्यतिरिक्तकार्याभावेपि करोती-त्यादौ शब्दसाधुत्वार्थं तिङ्प्रयोगः । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति प्रत्ययविशिष्टप्रकृतिप्रयोगस्य साधुत्वानु-शासनात्तथा प्रकृतेपीत्यस्त्यादेरर्थत आख्यातत्वाभावज्ञापनायाख्या-तार्थकथनपूर्वकमाह—

पूर्वापरीभूतपदार्थनिष्ठ-
माख्यातमाख्यातविदो वदन्ति ।
कूटस्थसत्तावगतिप्रधान-
माख्यातवत्साधु तिङन्तमाहुः ॥ ४६२ ॥

पूर्वापरीभूतेति । पूर्वापरीभूतः पूर्वापरीभावमापन्नः क्रियासमूहरूपो यः पदार्थस्तन्निष्ठं तद्विषयकृतिनिष्ठमित्यर्थः । पदमिति शेषः । आख्यातमिति वदन्तीति सम्बन्धः । कूटस्थसत्तावगतिप्रधानं कूटस्थात्मरूपा या सत्ता तद्विषणी या अवगतिः । सा प्रधानं यस्यास्त्यादितिङन्तस्य तत्तथाख्यातवदाख्यातसदृशं न तु मुख्यमाख्यातमित्यर्थः । साधु साधुशब्दं कूटस्थसत्तावगतिप्रधानं तिङन्तमाख्यातवत्साध्वाहुरिति सम्बन्धः ॥ ४६२ ॥

इदानीं वेदान्तानामस्तित्वमात्रनिष्ठत्वमसहमानः प्राभाकरश्चोदयति ।

अस्तित्ववस्तुविषयोपनिषन्निषक्ति-
राश्रीयते यदि तदा प्रमितं प्रमेयम् ।
तस्यास्तवाऽऽपतति मानमितत्वमेव
ह्यस्तित्वमात्मगतमभ्युपयन्ति धीराः ॥ ४६३ ॥

अस्तित्वेति । यदुपनिषदस्तिविषया सत्तामात्रविषयेत्युच्यते तदा तस्याः प्रमितं मानान्तराधिगतं प्रमेयमित्यापतति । कुतः । हि यतो मानमितत्वं मानविषयत्वमेवात्मगतमस्तित्वं सत्त्वमित्यभ्युपयन्तीति सम्बन्धः । आत्मगतमिति । तत्प्रकरणत्वादुक्तं मानान्तरविषयत्वस्यैव सत्त्वात्तद्गोचरत्वे वेदान्तानामनुवादप्रसङ्ग इत्यर्थः ॥ ४६३ ॥

ननु मानमितत्वस्यास्तित्वेऽज्ञानदशायां वस्तुनोऽसत्त्वप्रसङ्गः। ततः स्थायिपदार्थापलाप इत्याशङ्क्य मानयोग्यत्वस्यैव सत्त्वान्मैवमित्याह—

अथवा मितियोग्यताऽस्तिता
निरवद्याऽस्तु समस्तवस्तुषु
परमात्मनि तत्प्रतीयते
सकलं वेदशिरः प्रवर्त्तताम् ॥ ४६४ ॥

अथवेति। मितियोग्यता मितिविषयत्वयोग्यता मानान्तरविषयत्वात्यन्ताभावानधिकरणत्वमिति यावत्। सा च वस्तुनो यावत्स्वरूपभाविनीति नोक्तदोष इत्याह—निरवद्येति। तत्प्रतीतये मानान्तरयोग्यत्वलक्षणसत्ताप्रतीतये तथा च सापेक्षतालक्षणमप्रामाण्यं स्यादित्यर्थः ॥ ४६४ ॥

परिहरति—

तदसुन्दरमात्मसंविदोरपि सत्ता भवताऽभ्युपेयते।
न तयोर्विषयत्वहीनयोर्मितियोग्यत्वमितित्वसंभवः ४६५

तदसुन्दरमिति। तन्मानयोग्यत्वं सत्त्वमित्येतदसुन्दरमित्यर्थः। तत्र हेतुः—आत्मेति। यदि मानान्तरयोग्यत्वं सत्त्वं तर्ह्यात्मतत्समवेतज्ञानयोः सत्त्वं भवदभ्युपगतं न स्यादित्यर्थः। तत्रापि हेतुमाह—न तयोरिति। प्रभाकरनये ज्ञानस्य स्वयंप्रकाशत्वाभ्युपगमादात्मनश्च तदाश्रयतया भानेन तद्विषयत्वतद्योग्यत्वयोरभावात्तयोरसत्त्वे तन्मूलजगन्मात्रमसत्स्यादित्यर्थः। तथा च स्वरूपमेव सत्त्वमिति न तद्विषयवेदान्तानामप्रमाण्यमित्यर्थः। एतच्च यद्यपि यत्तु प्रमाण-

मित्यत्राशङ्क्य परिजहार तथापि गुरुणोक्तमिति श्रद्धाजडानां तत्रास्था माभूदिति पुनरुक्तिरर्थवतीति द्रष्टव्यम् ॥ ४६५ ॥

एवं वेदान्तानां सिद्धे ब्रह्मण्येव तात्पर्यं न कार्ये तच्च मानान्तरमनपेक्ष्यैव, फलपर्यवसायित्वं च प्रवृत्तिनिवृत्ती विनैवेत्यादि वाक्यार्थविषयं समन्वयसूत्रसूचितन्यायकलापं दर्शयित्वा जन्मादिसूत्रसूचितन्यायकलापं यतो वेत्यादिवाक्यापेक्षितं तत्पदार्थविषयं प्रदर्शयितुमुपक्रमते । तत्रेयमाशङ्का । यत्तत्त्वमादिवाक्यप्रमेयमित्युक्तं तत् किंलक्षणकं तत्र किं ब्रह्मणः स्वरूपलक्षणं पृच्छसि किं वा तटस्थलक्षणं यदि स्वरूपलक्षणं तदा सत्यज्ञानानन्दात्मकमिति वक्ष्यति यदि तटस्थलक्षणं तदा जगत्कारणत्वमिति गृहाण। ननु किं जगत्कारणत्वं वास्तवमुतावास्तवम् । नाद्यः। लक्ष्यलक्षणयोर्व्याहत्या ब्रह्मलक्षणत्वानुपपत्तेः। न द्वितीयः। कल्पितस्य वाष्पधूमस्येव सत्यब्रह्मज्ञापकत्वानुपपत्तेः, किं च जगदेकदेशकारणत्वं लक्षणं किं वा सकलजगत्कारणत्वम् । नाद्यः। परमाण्वादौ कुलालादौ चातिव्याप्तेः। तल्लक्ष्यस्य पूर्णब्रह्मस्वरूपत्वानुपपत्तेश्च । न द्वितीयः। निखिलजगत्कारणत्वस्यात्यन्ताप्रसिद्धत्वेन लक्षणत्वानुपपत्तेः । प्रसिद्धे हि लक्षणे तद्वत्तया तदाश्रयानुवादेन तस्य जिज्ञास्यब्रह्मात्मत्वं बोध्येत । न च निखिलभूतभौतिककारणत्वं केनचिन्मानेन सिद्ध्यति। न च यतो वेत्यादिवाक्यमेव भूतशब्दसमभिव्याहारबलान्निखिलजगत्कारणत्वं लक्षणं तल्लक्ष्यं ब्रह्म च प्रमापयतीति वाच्यम्। अर्थभेदेन वाक्यभेदप्रसङ्गात् । न च निखिलजगत्कारणत्वविशिष्टं ब्रह्मैव वाक्यप्रमेयमिति न वाक्यभेद इति वाच्यम्। जगत्कारणत्वस्यापि वेदप्रमेयत्वे ब्रह्मवद्वास्तवत्वापत्तेः। तत्र च ब्रह्मलक्षणत्वानुपपत्तिः । न च माभूत्तटस्थलक्षणं स्वरूपलक्षणादेव ब्रह्मसिद्धेरिति वाच्यम्। ब्रह्मणो निखिलजगत्कारणत्वापरिज्ञाने तत्स्वरूपभूतानन्त्यस्यैव दुर्विज्ञेयत्वाद्यतो वेत्यादि वाक्यस्य प्रमेयाभावेनानर्थक्यापाताच्च। तस्मा-

ब्रह्मण आनन्त्यसिद्धये जगत्कारणत्वप्रतिपादकवाक्यवैयर्थ्यपरिहाणय च जगतकारणत्वविशिष्टं ब्रह्मैव यतो वेत्यादिवाक्यप्रमेयमिति वक्तव्यम्। तथा च तदुपस्थापितपदार्थमादाय स्वार्थं बोधयतस्तत्त्वमादिवाक्यस्य नाखण्डार्थत्वं सिद्ध्यतीति। तत्र निखिलजगत्कारणत्वस्य मानान्तरासिद्धिविषयतया तदनुवादेन यतोवेत्यादिवाक्यस्याज्ञातब्रह्ममात्रपरत्वात्। न तत्त्वमादिवाक्यस्याखण्डार्थत्वक्षतिर्न वा ब्रह्मस्वरूपानन्त्यासिद्धिः न वा यतो वेत्यादिवाक्यवैयर्थ्यमिति वक्तुमादौ निखिलस्यापि जगतः कार्यत्वं प्रसाधयन् तत्कारणमपि संभावयितुं शक्यत इत्याह—

क्षितिजलदहनानिलाम्बराणां
जनिमनुमाय विभक्ततावलेन।
जगति हि जनिमद्विभज्यमानं
घटघटिकादि समीक्ष्यते समस्तम्॥४६६॥

क्षितिजलेत्यादिना। तर्कयन्तीत्यन्तेन। विभक्ततावलेन विभक्तत्वलिङ्गेन क्षितिजलदहनानिलाम्बराणां जनिमुत्पत्तिमनुमाय तर्कयन्तीत्युत्तरेण सम्बन्धः। अत्रेदमनुमानं विवक्षितम्। उभयवादिसम्प्रतिपन्नं कार्यभावव्यतिरिक्तमज्ञातसत्ताकं जडं क्षित्यादि कार्यमज्ञातत्वे सति धर्मिसत्तासमानसत्ताकभेदवत्वाद्यदुक्तसाधनं तदुक्तसाध्यं यथा घटादि तथा चेदं तस्मात्तथेति। न च विपक्षे बाधकाभावादप्रयोजकः। अनौपाधिकव्याप्तिभङ्गस्यैव बाधकत्वादित्याह - जगति हीति। हि शब्दः प्रसिद्धिद्योतकः। न चानौपाधिकमसिद्धं सावयवत्वस्यैवोपाधेरिति वाच्यम्, रूपादौ साध्याव्यापकत्वात्। न च गगनादेः कार्यत्वे सावयवत्वेन सर्वेषां गतिप्रतिहतिः स्यादिति तदंशे साध्यं बाधितं स्यादिति वाच्यम्। प्रभाद्रव्यस्यैव विरलावयवतयान्धकारस्येवान-

द्भूतस्पर्शतया वा गगनस्य सावयवत्वेपि तदभावोपपत्तेः। न च गगनादेः सावयवत्वे तत्तदवयवानामपि सावयवत्वकल्पनाया-मनवस्था स्यात्। नच वस्त्वनवस्था न दोषायेति वाच्यम्। अनन्ता-वयवारब्धत्वेन मेरुसर्षपयोस्तुलपरिमाणत्वप्रसङ्गेन बाधितत्वात्कचिच्च निरवयवानभ्युपगमे वा तस्य कार्यत्वाभावात्तत्रैव विभक्तहेतुर्व्यभि-चरतीति वाच्यम् तेषामनवयवात्मविवर्त्तत्वेनानवस्थाभावात्। तच्च वक्ष्यते। न च गगनमकार्यं विभुत्वादात्मवदिति वाच्यम्। हेत्वसिद्धेः। न च सकलमूर्त्तद्रव्यसंयोगित्वलक्षणं हि विभुत्वं गगने तदस्तीति वाच्यम्। गगनस्य निरवयवत्वे संयोगित्वस्यैवानुपपत्तेः। सावयवत्वे च तेनैव कार्यत्वानुमानात्। न चात्मा कार्यं प्रतियोगिसमानसत्ता-कभेदाश्रयत्वात् घटादिवदित्याभाससमानयोगक्षेमतेति वाच्यम्। आत्मनः कार्यत्वे कारणनिरूपणादेर्बाधकत्वादत्र बाधकाभावात्। तथा हि किमात्मनः आत्मान्तरं कारणमुत अनात्मा। नाद्यः। कारणीभूत-स्याप्यात्मनः कार्यत्वे तत्कारणानामपि तथात्वेनैकस्मिन् शरीरे स्वस्वकार्यानुस्यूततयानन्तात्मकल्पना पत्त्यायमात्मेति निर्धारणा-नुपपत्तेः शरीरविदारणप्रसङ्गाच्चैकोपि वा न चेतयेत कस्य चिच्चा-नादित्वे तत्रैव भवत्प्रतिज्ञाया बाधा हेतोर्व्यभिचारो वा भवेत्तस्यैव श्रुतिस्मृतिवृद्धसम्मतात्मत्वेन तदन्यस्य कार्यत्वसाधने सिद्धसाधनाच्च। न द्वितीयः। तस्य तज्जन्यतया तद्धेतुत्वानुपपत्तेः। कृतहानाकृता-भ्यागमप्रसङ्गाच्चेत्यर्थः ॥ ४६६ ॥

इदानीं प्रत्येकपक्षकानुमानान्तरमाह—

**क्षितिजलदहनेषु तत्प्रदेशा-**
**जनिसहितानुपलभ्य तद्बलेन।**
**क्षितिजलदहनत्वलिङ्गमार्गा-**
**दपि जनिमेष्वनुमाय तर्कयन्ति ॥ ४६७ ॥**

क्षितिजलदहनेष्विति । वाय्वादेरप्युपलक्षणम् क्षितिजलानिलाम्बरादिषु मध्य इत्यर्थः । अथ चैषु क्षितिजलदहनेष्वित्रति सम्बन्धः । तत्प्रदेशान् क्षित्याद्येकदेशान्घटनिखातपूरितप्रदेशान् चन्द्रकान्तोदकारण्युत्पन्नाग्निव्यजनपवनघटाकाशादिप्रदेशान् जनिसहितानुत्पत्तिमत उपलभ्य तत्र क्षितित्वादेः प्रत्येकहेतोरुत्पत्तिमत्त्वेन व्याप्तिं गृहीत्वा तद्बलेन व्याप्तिबलेन क्षितित्वादिप्रत्येकलिङ्गेनापि क्षित्यादिषु कार्यत्वमनुमाय घटादिव्यतिरिक्ता क्षितिरुत्पत्तिमती क्षितित्वात् घटवत् । जलं कार्यं जलत्वाच्चन्द्रकान्तादुत्पन्नजलवत् । तेजः कार्यं तेजस्त्वादरणिनिर्मथनजन्याग्निवत् । वायुरुत्पत्तिमान्वायुत्वाद्व्यजनचलनजन्यपवनवत् । आकाश उत्पत्तिमान् आकाशत्वाद्भूतत्वाद्वा घटाकाशवत्पृथिव्यादिवत् । काल उत्पत्तिमान् कालत्वान्निमेषादिकालवत् । दिगुत्पत्तिमती गुणाश्रयत्वात् घटादिवदित्यनुमाय तर्कयन्ति । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवदिति जगत्कर्त्तारमनुमिमत इत्यर्थः । अनुमानेपि तर्कशब्दप्रयोगोभिहितानुमानस्यागमप्रमाणनिरपेक्षतया न ब्रह्मसाधकत्वं किन्तु तदुपदर्शितार्थसंभावनाबुद्धिहेतुतया तच्छेषत्वमेवेत्यभिप्रेत्येति द्रष्टव्यम् ॥ ४६७ ॥

तर्कयन्तीत्येतद्विवृणोति —

**जनिमदभवदेतच्चेतनादेव हेतो-**
**र्घटवदिति पुनस्तत्कारणे चेतनत्वम् ।**
**अनुमिमत उदर्के कार्यतालिङ्गतोऽमी**
**जगति हि परिदृष्टं चेतनादेव कार्यम् ॥ ४६८ ॥**

जनिमदिति । चेतनादेव चेतनाधिष्ठितादेव चेतनाद्धेतोर्जनिमदभवदेवेति वा सकर्तृकमित्यर्थः । उदर्के क्षित्यादेः कार्यत्वानुमानानन्तरमित्यर्थः । ननु घटत्वादिकमेव कर्तृजन्यतावच्छेदकं न कार्यत्वमात्रं

अतः क्षित्यादेः कार्यत्वेपि न कर्तृजन्यता तत्राह—जगति होति । कार्ये-कार्यमात्रमित्यर्थः। अनुगतेऽवच्छेदके संभवत्यननुगतस्य घटत्वादेः कर्तृजन्यतावच्छेदकत्वानुपपत्तेः । घटत्वादिविशेषस्य शरीरिकर्तृ जन्यतावच्छेदकत्वेन कार्यत्वमात्रस्य कर्तृजन्यत्वमात्रावच्छेदक-त्वस्योचितत्वाच्चेत्यर्थः। तथा च जगत्कारणत्वस्य प्रसिद्धत्वात्तदनु-वादेन यतो वेत्यादिवाक्यस्य ब्रह्मव्युत्पादकत्वं संभवतीति भावः॥५६८॥

नन्वनुमानाज्जगत्कारणसिद्धौ कृतमागमेनेत्याशङ्क्यानुमानेन कर्तृमात्रसिद्धावपि तस्याशरीरत्वैकत्वसर्वज्ञत्वसर्वशक्तित्वादिकमनु-मानेन सिद्ध्यति । व्याप्त्यादेस्तद्गोचरत्वाद्व्याप्तिपक्षधर्मताबललभ्य-स्यैवानुमानगोचरत्वात्प्रत्युदाहरणस्यापि संभवाच्च। तथा हि कार्य-मात्रे कर्त्तुरिव हस्तादिव्यापारातिरिक्तकार्यमात्रे शरीरस्यापि कारण-त्वं दृश्यते। न च क्षित्यादौ योग्यानुपलब्धिबाधः देवादिशरीर-वत्तत्कारणशरीरस्याप्ययोग्यत्वेनानुपलब्धेरन्यथोपपत्तेः । ज्ञाने जन्यत्वानित्यत्वनियमाभाववच्छरीरेपि तदुपपत्तेः । शरीरकर्तृक-तायां घटत्वमिव ज्ञानेऽदृष्टेन्द्रियजन्यतायां संसारिज्ञानत्वं प्रयोजक मितीश्वरज्ञानस्यानित्यत्वेपि दोषाभावाच्च। मनः संयोगादिलक्षण-कारणान्तरसत्त्वात् । नन्वादृष्टानाकृष्टमनो न सहकारीति वाच्यम्। प्राणिकर्माकृष्टमनस एव तदाकृष्टशरीरस्येश्वरप्रयत्नजन्यसंप्रदाय-प्रवर्त्तनादिक्रियायामिवेश्वरात्मनि ज्ञानजनकत्वोपपत्तेः । न चैवं कल्पने प्रमाणाभावः। ज्ञानमनित्यमेव जन्यमेवेत्यादिव्याप्तेरेव तत्र प्रमाणत्वादत एव न सर्वज्ञत्वमपि सिद्ध्यति। ज्ञानं किञ्चिद्विषयमे-वेति व्याप्तेः। नापि तदेकत्वमनुमानाज्ज्ञानोत्पत्तिविनाशकल्पने गौरव-मित्यजन्यस्य ज्ञानस्य किञ्चिद्विषयत्वे नियामकाभावात्तत्रानेकत्वे च गौरवात् ज्ञाननित्यत्वसर्वविषयत्वकर्त्रैकत्वादिकं सिद्ध्यतीति चेन्न। गौरवादितर्कस्य स्वातन्त्र्येणार्थनिर्णायकत्वाभावात्। ननु तर्कसहकृता-त्प्रकृतानुमानात्तत्सिद्धिरिति चेन्न । यतः प्रकृतानुमानेन क्षितिकर्तृ-

मात्रं सिद्ध्यति ज्ञाननित्यत्वादिकं तु तर्कादिति तयोर्भिन्नविषयत्वा-द्विशेषतस्तद्बोधकप्रमाणं विनापि तर्कादेव तत्सिद्धौ कल्पान्तरीय-घटपक्षकानुमानेन कुलालसिद्धौ तदेकत्वादेः सिद्धिः प्रसङ्गः । विचित्र-प्रासादादिकार्यविशेषेऽनेककर्तृकत्वनियमाच्च । तस्माद्विशेषावगाहि प्रमाणश्रुत्यवगमविरहदशायां व्याप्त्यादिना नित्यज्ञानत्वाद्युपस्थितौ तद्विपरीतोपस्थितौ च किं तत्र तत्त्वमितिसंशय एव स्यात्तदेकत्वा-नेकत्वसन्देहेपि जगत्कर्तृत्वमात्रस्य व्याप्तिबलात्सिद्धत्वानुवादोपि संगच्छते । अतो न वेदान्तवैयर्थ्यमित्यभिप्रेत्याह —

जगदुदयनिमित्तं चेतनं किं तु नाना
किमु भवतु तदेकं सर्ववित्सर्वशक्ति ।
इति भवति तु पश्चात्कारणे चेतनेऽस्मि-
न्ननवगतिनिमित्तः संशयो दुर्निवारः ॥ ४९९ ॥

जगदुदयेति । जगदधिष्ठात्रीत्यर्थः । कस्मिन्सति किं स्यादित्याशं-क्यैकत्वकोटौ फलितमाह—सर्ववित्सर्वशक्तीति । सर्वविषया संविद्यस्य सर्वविषया शक्तिर्यस्य तत्सर्ववित्सर्वशक्तीति चेति ब्रह्मैव भवती-त्यर्थः । इत्येकत्वानेकत्वादिप्रकारेण पश्चाज्जगत्कर्तृसिद्ध्यनन्तरमित्यर्थः । अस्मिन् जगत्कर्त्र्यनवगमनिमित्तो विशेषानवगमनिमित्त इत्यर्थः ॥ ४९९ ॥

नन्वनुमानात्कर्त्रैकत्वादि न सिद्ध्यति चेच्छ्रुतितोपि कथंसिद्येत् व्याप्त्यादिविरोधस्य तत्रापि सत्वादित्याशंक्यानुमाने निरुपाधिव्या-प्तिपक्षधर्मतयोरिव श्रुतेरप्युपक्रमादितात्पर्यलिङ्गसाचिव्यस्य बलव-त्वात्तत्सहितश्रुतिवाक्येन साक्षादेकत्वादिबोधकेन व्याप्तिविरोधेप्या-गमादेव शंखशुद्धित्वमिव कर्त्रैकत्वादिसिद्धिः किमु वक्तव्यं युक्त्य संभावनादशायामागमात्तत्सिद्धेरित्यभिप्रेत्याह—

श्रुतिवचनविशेषाच्चेतने कारणेऽस्मि-
न्यत इति निरवद्यादेकताधीरथाऽऽगात्।
प्रकृतिरिति च तस्मिन्कारणे पञ्चमीयं
जनयति दृढबुद्धिं तद्विधानादिहैव ॥ ५०० ॥

श्रुतिवचनाविशेषादिति। श्रुतिगतवचनविशेषादित्यर्थः। वचनविशेष- मेवाह—यत इति। यतो व इमानि भूतानि जायन्त इत्यादिवाक्यस्य यत- इतिपञ्चम्येकवचनादस्मिन् चेतने कारणे जगत्कर्त्तर्येकताधीरथैकत्व- संभावनानन्तरमागादागच्छेदित्यर्थः। अत्र चानुमानवन्न दोषतुषा- वकाश इत्याह—निरवद्यादिति। यद्यपि यत इत्यनेन तदेकत्वंनिश्चे- तुमशक्यम् तसिल्प्रत्ययस्यानेकार्थसाधारणत्वात्तथापि येन जाता- नीति वचनवाक्यशेषाद्यत इत्यस्याप्येकवचनत्वं निश्चीयत इत्यर्थः। ननु सिध्यतु नाम जगत्कर्तृत्वं नैतावता ब्रह्मलक्षणप्रसिद्धिः। उपादाने- ऽन्यस्मिन्व्यावृत्तधर्मस्य जगत्कर्तृत्वाश्रयस्य परिपूर्णवाचिब्रह्मशब्दार्थ- त्वानुपपत्तेः। नाप्युपादानत्वविशिष्टं जगत्कर्तृत्वं ब्रह्मलक्षणं ब्रह्मणो जगदुपादानत्वे प्रमाणाभावादित्यशंकयानुमानोपोद्बलिता श्रुतिरेव तत्र प्रमाणमित्याह—प्रकृतिरिति चेति। चशब्दः शंकानिवृत्यर्थः। यतो- वेत्यादिवाक्यस्थयत इत्यादिरूपेयं पञ्चमी तस्मिन्कारणे जगदधिष्ठा- तरि प्रकृतिरिति च दृढां युक्तसंभावितां बुद्धिं जनयतीति सम्बन्धः। उक्तार्थे हेतुमाह—तद्विधानादिहैवेति। इह प्रकृत्यर्थे तस्याः पञ्चम्या जनि- कर्त्तुः प्रकृतिरितिसूत्रेण विधानादित्यर्थः। अनुमानमपि-इदं विवादास्पदं पृथिव्यादिकं सोपादानं भावकार्यत्वात् घटादिवत्। विमतं सदुपादानं स्वसत्तादशायां नियमेन सदनुविद्धत्वात् यन्नियमेन यदनु- विद्धं तत्तदुपादानं यथा मृदनुविद्धो घटो मृदुपादानः पृथिव्यादिश्च नियमेन सदनुविद्ध इति सदुपादानः। नन्वेवं द्रव्यत्वादेरपि घटाद्यु- पादानत्वप्रसङ्गः। घटादेर्नियमेन तदनुविद्धत्वादिति चेन्न। गुणाश्र-

याद्यधिष्ठानव्यतिरेकेण द्रव्यत्वादेरनुस्यूतस्याभावादात्मैव हि सकल- कार्यानुस्यूतस्तत्तत्कार्यवृत्तिजातित्वेनोपाधित्वेन च व्यवह्रियते। तच्च कारणमेकमनेकं वेति संदिह्यते। अधिष्ठातृभिन्नमन्योन्यभिन्नं चेति व्याप्त्योपस्थाप्यते। लाघवतर्केण तदेकत्वं संभाव्यते। उभयथापि सदुपादानं सिद्धमेवेति सदुपादानमधिष्ठातारं चानूद्य वचनेन तदेक- त्वं प्रतिपाद्यत इति भावः॥ ५०० ॥

नन्वेतदनुपपन्नं यद्वचनेन प्रकृत्येकत्वं निश्चीयत इति वचनं हि प्रत्ययः प्रकृत्यर्थान्वितस्वार्थमभिदध्यात्तथैव प्रत्ययानां व्युत्पत्तेः। एवं विभक्तिरप्येकपदोपस्थितयोः परस्परवैशिष्ट्यप्रतीत्यनुपपत्तेश्च न वचनस्य विभक्तेर्वा परस्परान्वितस्वार्थबोधकत्वं तथा च यतो जगत्तदुपादानं यतो जगत्तदेकमिति बुद्धिः स्यान्न तूपादानमेकमेकमु- पादानमिति वेति शङ्किते एकत्वमिति द्वाभ्यां तत्रादौ वचनार्थस्य विभक्त्यर्थान्वयं निराकरोति—

**एकत्वमेकवचनादवगम्यमानं**
**यच्छब्दवाच्यनिलयं यत इत्यमुष्मिन्**
**वाक्ये जगत्प्रकृतिगामितया निविष्टां**
**संख्यां विभक्त्यभिहिते वचनं हि नाऽऽह॥५०१॥**

एकत्वमिति। यतो वा इमानि भूतानि जायन्त इति वाक्ये यत इत्ये- कवचनादवगम्यमानं यच्छब्दवाच्यनिलयं यच्छब्दार्थचेतनकारणा- न्वितमेकत्वं जगत्प्रकृतिगामितया न विद्मः। जगदुपादानत्वविशिष्टा- न्वयितया न विद्मः। कुतस्तत्राह—संख्यामिति। यतो वचनं स्वादिवचनं विभक्त्यर्थान्वितां संख्यां नाह तत इत्यर्थः॥ ५०१ ॥

इदानीमुक्तार्थं दृष्टान्तार्थमनूद्य विभक्तिरपि संख्याविशिष्टा- न्वितं स्वार्थं नाभिधत्त इत्याह—

न हि विभक्त्यभिधेयपदार्थगं
वचनमाह निजं विषयं क्वचित् ।
वचनवाच्यगतं न वदन्ति च
स्वमभिधेयमशेषविभक्तयः ॥५०२॥

न हीति । विषयं संख्यारूपमित्यर्थः । वचनवाच्यगतं वचनवाच्यसंख्याविशिष्टकारणान्वितमित्यर्थः । अतो जगत्प्रकृतेरेकत्वं न श्रुतिबलादपि सिद्ध्यतीति भावः ॥ ५५२ ॥

ननु वचनविभक्त्योः साक्षादन्योन्यार्थान्वितस्वार्थाभिधानाभावेपि प्रकृत्यर्थाभिधानानन्तरं तयोरन्वयः परस्परं सिद्ध्यतीत्याशङ्क्यैवमपि वचनात्तत्सिद्धिरित्येतद्गतमित्याह—

प्रातिपदिकार्थगतमेव वचनानि
स्वं स्वमभिधेयमभिधातुमलमर्थम् ।
प्रातिपदिकार्थगतमेव निजमर्थं
वक्ति च विभक्तिरपि नेह वचनार्थे ॥५०३॥

प्रातिपदिकार्थगतामिति । उभयान्वयबोधे विरम्य व्यापारो वाक्यभेदश्चेति भावः ॥ ५०३ ॥

ननु यथा पशुना यजेतेत्यत्र वचनविभक्तिवाच्ययोरेकत्वकरणत्वयोः परस्परवैशिष्ट्यबोधः एकः पशुः करणमिति एवमिहापि परस्परवैशिष्ट्यबोधः ; किं न स्यादित्याशंक्य तत्रापि किमन्विताभिधायिशब्दे नतयोः परस्परान्वयबोध इत्युच्यते किम्वार्थाक्षाद्य इत्याह—

पशुनेति पदे तृतीयया
करणत्वं हि पशोर्निवेद्यते ।

वचनेन पशोरिहैकता

न पुनः सा करणस्य कथ्यते ॥ ५०४ ॥

पशुनेति । पशोरैकत्वानाक्रान्तस्य पशोर्न तु तद्विशिष्टस्य वचनेनैक-वचनेन पशोः करणत्वानाक्रान्तस्य इह पशुना यजेतेति वाक्ये सैकता-करणस्य तृतीयाविभक्त्यर्थकरणत्वविशिष्टस्येत्यर्थः ॥ ५०४ ॥

कथं तर्हि तयोर्वैशिष्ट्यप्रतीतिः परेणाङ्गीक्रियते उपादानप्रमा-णादिति द्वितीयपक्षमादायाह—

अनुपपत्तिबलेन विधेस्तयोः

करणतैकतयोरवगम्यते ।

करणतैकपशोरिति सङ्गति-

र्न घटते हि विधिर्विरहय्य ताम् ॥ ५०५ ॥

अनुपपत्तिबलेनेति । अनुपपत्तिरेवबलं तेन । कस्यानुपपत्तिरित्यत आह—विधेरिति । नियोगस्येत्यर्थः । कारणतैकतयोः संगतिरवगम्यत इति सम्बन्धः । संगतिमेवाभिनीयाह—करणतैकपशोरिति । एकपशोः करणता एकः पशुः करणमित्येवंरूपेणेत्यर्थ । का तर्हि विधेरनुपपत्ति-रित्याकाङ्क्षायामाह-न घटतइति । हि यतः तां करणत्वैकत्वयोः सङ्गतिं विरहय्य विना विधिर्न घटते तत इत्यर्थः । विधिर्हि स्वप्रकरणपठित स्वशेषतावगतसकलपदार्थनिवर्त्यो भवति । सकलपदार्थनिवर्त्यत्वं च तस्य ग्राहकगृहीतैकत्वसंख्यायाः करणत्वसम्बन्धं विना न संभव-तीति नियोगानुपपत्त्यैव तत्सिद्धिरिति भावः ॥ ५०५ ॥

ननु नियोगानुपपत्त्या तयोः सम्बन्धमात्रसिद्धावप्यभिमतस-म्बन्धसिद्धिस्तु केन भवतीत्याकाङ्क्षायां तत्सिद्धिरपि तयैवेत्याह—

**उपादानतः संख्यया संगतिः स्या-**
**दवच्छेदकत्वेन संख्यानिवेशात् ।**
**पशोरेतयोस्तेन मार्गेण कार्ये**
**निवेशोपपत्तेरुपादानमानात् ॥५०६॥**

उपादानत इति । उक्तानुपपत्त्येत्यर्थः । संख्ययैकत्वेन संगतिः करणत्वस्येति शेषः । संख्यया करणत्वस्यान्वये बीजमाह—अवच्छेदकत्वेनेति। व्यावर्तकत्वेन कस्य व्यावर्त्तकमित्याकाङ्क्षायामाह—पशोरिति । करणीभूतपशोः पशुकरणतावच्छेदकत्वेनैकत्वसंख्यानुप्रवेशादित्यर्थः । पशुर्हि करणविभक्तिमत्पदेनाभिहितः नियोगेन ग्राहकेण करणतया-गृहीतो नियोगप्रवेशाय कांचित्संख्यामपेक्षते । कया संख्यया सह नियोगमनुप्रविशामीति । एवं संख्यापि ग्राहकगृहीताऽमूर्ततया साक्षान्नियोगनिवर्त्तनासमर्था कंचिदाश्रयं किमाश्रित्य नियोगं प्रविशामीति ततश्च तयोरवच्छेद्यावच्छेदकभावसम्बन्धोपि नियोगानुपपत्त्यैवेति भावः । ननु पश्ववच्छेदकत्वेपि संख्यायाः किमिति करणतावच्छेदकत्वं कल्प्यते पशुद्वारेण नियोगेनान्वयः किन्न स्यात्तत्राह—एतयोरिति । पश्वेकत्वयोस्तेन मार्गेण करणत्वद्वारेण पशोरपि करणत्वाकारेणैव नियोगान्वयात्तदवच्छेदकसंख्याया अपि तद्द्वारेणैव नियोगप्रवेशो वक्तव्यः नप्रकारान्तरेणेति । संख्यायाः करणत्वात्वय इत्यर्थः । निगमयत्युपादानादिति । संख्यायाः संगतिः स्यादित्यनुषञ्जनीयम् ॥५०६॥

ननु प्रकृतेप्युपादानबलादेव प्रकृतित्वैकत्वयोः परस्परान्वयबोधः किं न स्यात्तत्राह—

**नचैवंविधिः कश्चिदत्रेति न स्या-**
**दुपादानतः संगतिर्यत्पदार्थे ।**

विभक्त्यर्थसंख्यार्थयोर्नेह कश्चि-

द्यतो वा इमानीति वाक्ये विधिर्नः ॥५०७॥

नचैवमिति । यथोपादानबलात्करणत्वविशिष्टपशुना संख्यान्वयः एवं यत्पदार्थे प्रकृतित्वविशिष्टे संख्याविशिष्टे वा तस्मिन्नुपादानतो विभक्त्यर्थसंख्यार्थयोर्न सङ्गतिः स्यादुपादानत्वस्य संख्याविशिष्टे संख्यया वोपादानत्वविशिष्टेऽन्वयो न स्यात्कुतः उपादानाभावादे- वेत्याह—अत्र कश्चिद्विधिर्नेतीति । इतिशब्दो हेतौ । यस्मादत्र यतो वेत्यादिवाक्ये न विधिश्रवणमिति विध्यनुपपत्तिलक्षणोपादानप्रमाणं नास्ति तत इत्यर्थः। नन्वश्रूयमाणोपि विधिरन्वयसिद्ध्यर्थं कल्प्यतां प्रवृत्त्यर्थमिव पूषा प्रपिष्टभाग इत्यत्रेत्याशङ्क्यापसिद्धान्तप्रसङ्गात् । मैवमित्याह—नेह कश्चिदिति । न इति शिष्यवचनमस्माकं वेदान्तिना- मित्यर्थः। अशक्यानुष्ठानत्वेन विधिकल्पनानुपपत्तेश्चेति भावः ॥५०७॥

विध्यभावेऽप्यनुपपत्त्यैव वचनविभक्त्यर्थयोरन्वयोपपत्तौ किंवि- ध्यनुपपत्त्या विना हीयते प्रत्युत विध्यभावश्चास्माकं भूषणमेवान्यथा- विवक्षितार्थासिद्धिप्रसङ्गादित्यभिप्रेत्य विध्यभावमुक्तमङ्गीकरोति—

अवितथमिदमेवमेतदस्मि-

न खलु विधेर्वचनं पठन्ति वाक्ये ।

यत इति घटते तथाऽपि योगो

वचनविभक्तिनिगद्ययोरिहापि ॥५०८॥

अवितथमिति । इदं नियोगानुपपत्त्यैव करणत्वैकत्वयोः सम्बन्ध- इतीदमवितथं सत्यमेतद्यतो वेत्यादिवाक्ये विधिर्नेत्येतच्च एवमवितथं अङ्गीकृतमेवांशमाह—न खल्विति । तर्हि कथं प्रकृतित्वैकत्वयोः परस्परमन्वयस्तत्राह— घटते तथापीति । अपि शब्दोऽवधारणे । इह यत

इति वाक्ये विध्यभावेन नियोगानुपपत्त्यभावेऽपि वचनविभक्तिनिगद्ययोर्योगः सम्बन्धो घटत एवेति सम्बन्धः ॥ ५०८ ॥

ननु विध्यभावे कस्यानुपपत्त्या तयोः परस्परान्वयो भवेदित्याकाङ्क्षायां ब्रह्मपदार्थानुपपत्त्येत्यभिप्रेत्याह—

**एकत्वमेकवचनेन समर्पितं य-**

**च्छब्दवाच्यनिलय यत इत्यमुष्मिन् ।**

**पञ्चम्युपात्तमपि यत्प्रकृतित्वमस्मि-**

**न्संगच्छते तदुभयं पशुवस्तुनीव ॥५०९॥**

एकत्वमिति। यत इत्यमुष्मिन्वाक्ये यत इत्येकवचनेन समर्पितं बोधितं यच्छब्दवाच्यनिलयं यदेकत्वम् अस्मिन्यच्छब्दार्थे पञ्चम्युपात्तं यत्प्रकृतित्वं तदुभयं पशुवस्तुनि करणैकत्ववत्संगच्छत इति सम्बन्धः। यतो वेत्यादि ब्रह्मेत्यन्तं हि वाक्यं ज्ञानमात्रेण सकलपुरुषार्थकाष्ठाभूतमुमुक्षुजिज्ञास्यं यद्ब्रह्म तल्लक्षणपरिज्ञानाय प्रवर्त्तते। लक्षणवाक्यं च वस्तुतोऽलक्ष्यव्यावृत्तलक्ष्यप्रतिपादनाय भवति। अतो लक्ष्यब्रह्मपदार्थशेषभूतं लक्षणवाक्यं प्रधानलक्ष्यार्पकब्रह्मपदानुरोधेन नेतव्यम्। ब्रह्मपदं च लक्ष्यवाच्युत्सर्गसिद्धस्ववाच्यस्य ब्रह्मणोऽनवच्छिन्नमहत्त्वमुपस्थापयति। तत्र यदि प्रकृतित्वविशिष्टस्यैकत्वं न सिद्ध्येत्तदा यत इत्यादिवाक्यलक्ष्यस्य ब्रह्मत्वासिद्धिरिति ब्रह्मपदार्थानुपपत्त्यैव वचनविभक्त्यर्थयोरेकत्वप्रकृतित्वयोः पश्वेकत्वकरणत्ववत्परस्परान्वयः संभवतीति भावः ॥ ५०९ ॥

किं च यदि विभक्त्यर्थोऽपि विधेयः स्यात्तदा वचनविभक्त्यर्थयोः परस्परमन्वयानुपपत्तिर्न त्वेदस्ति तस्याप्यनुमानसिद्धत्वेनानूद्यमानकोटावेव निवेशात्तथा च जगदुपादानाधिष्ठानानुवादेन तदेकत्वं वचनेन विधीयत इति नानुपपत्तिरित्याह—

एका या प्रकृतिः समस्तजननी तद्ब्रह्मजिज्ञास्यता-
मित्यत्रापि हि वस्तुनिष्ठवचने शक्यैव तत्संगतिः ।
विज्ञातुं विधिमन्तरेण च तथानर्थक्यभीत्या न हि
स्वाध्यायाध्ययनैकगोचरविधेरायातमर्थं विना ॥५१०॥

एकेति । प्रकृतिरुपादानमत्रापि वस्तुनिष्ठवचने विधिं विना चेतना समस्तजननी प्रकृतिः सैका तद्ब्रह्मेति जिज्ञास्यतामिति तयोर्वचनविभक्त्यर्थयोः संगतिर्विज्ञातुं शक्यैवेति सम्बन्धः विध्यनुपपत्त्यैव वचनविभक्त्योः परस्परान्वय इत्यभिनिवेशश्चेदध्ययनविध्यनुपपत्त्यैव प्रकृतेपि तयोः परस्परान्वयबोधः संभवतीत्याह—तथेति । यथा ब्रह्मपदार्थान्वयानुपपत्त्योपादानानुवादेन तत्रैकत्वविधानेन तयोरन्वयस्तथा स्वधाध्यायाध्ययनैकगोचरविधेः स्वाध्यायाध्ययनमेकमेव गोचरो विषयो यस्य विधेस्तस्यानर्थक्यभीत्यापि तयोः संगति र्ज्ञातुं शक्येति सम्बन्धः । ननु वचनविभक्त्यर्थयोरन्वयाभावेऽध्ययनविधेः किमिति वैयर्थ्यमित्याशङ्क्याह—नहीति । प्रयोजनपर्यवसायित्वमिति शेषः । आयातं प्राप्तमवगतमिति यावत् । हिः प्रसिद्धौ । अध्ययनविधेः फलवदर्थावबोधं विना प्रयोजनपर्यन्तत्वं न हीति सम्बन्धः । एतदुक्तं भवति । अध्ययनविधेर्हि परंपरया फलवदर्थावबोधः फलमिति प्रसिद्धम् । तथा च—प्रकृतित्वैकत्वयोः परस्परान्वयाभावे यतो वेत्यादिवाक्यं फलवदर्थावबोधं न जनयेदुपादानैकत्वज्ञानस्यैव पुरुषार्थत्वाद्विधेश्चान्यस्याश्रवणान्नानुष्ठानाधीनमपि प्रयोजनमत्र सिद्ध्यति । प्रयोजनाभावे वाध्ययनविधेर्न प्रवर्त्तकत्वमिति विध्यनुपपत्त्या वचनविभक्त्यर्थयोरन्वयः सिद्ध्यतीति ॥ ५१० ॥

तस्मात्सर्वथापि वचनविभक्त्यर्थयोरन्वयः सिद्ध्यतीति प्रतिपादितं सदृष्टान्तमुपसंहरति—

**वचनार्थविभक्तिवाच्ययोरुपपन्नाऽन्वयबुद्धिरर्थतः ।**
**पशुनेति पदे यथा तथा यत इत्यादिपदेऽपि लक्षणे ॥५११॥**

वचनार्थेति । अर्थतोनुपपत्तितः । एतच्च साक्षादन्वयबोधस्याप्युपलक्षणम् । लक्षणे लक्षणविषये ॥ ५११ ॥

एवं च यद्युपादानैकत्वं न स्यादित्युच्येत तर्हि पशुनेत्यत्रापि करणस्य पशोरेकत्वं न स्यादिति ब्रूमः । यदि तत्रानुपपत्त्या तयोरन्वयः कल्प्येत तर्हि प्रकृतेऽपि सा तुल्येति । तदज्ञानादेवास्योपादानैकत्वाक्षेप इति साक्षादन्वयबोधं करेण पिधायाह—

**विधिनिष्ठवाक्यमपि बोधयति-**
**स्वमपेक्षितं विषयमर्थवशात् ।**
**परमात्मनिष्ठमपि तुल्यमिदं**
**वचसोर्द्वयोरपि तु रूपमतः ॥१२॥**

विधिनिष्ठेति । स्वं स्वीयमर्थवशादनुपपत्त्या परमात्मनिष्ठं वाक्यमिति शेषः । फलितमाह— इदं बोधकत्वं द्वयोर्विधिनिष्ठवस्तुनिष्ठवाक्ययोर्यतो विधिनिष्ठं वस्तुनिष्ठमपि वाक्यमपेक्षितं स्वमर्थमर्थवशाद्बोधयति । अतो द्वयोरपि वचसोरिदं रूपं तुल्यमिति सम्बन्धः ॥ ५१२ ॥

तस्मादनुमानसिद्धाधिष्ठातृसदुपादानानुवादेन तदेकत्वानेकत्वसंदेहव्युदासार्थं करणैकत्वं बोधयन्महावाक्यावयवतत्पदार्थब्रह्मस्वरूपं निर्द्धारयतीति प्रकृतविचारफलमाह—

**एकं चेतनमस्य यत्प्रकृतितामापन्नमुत्प्रेक्ष्यते**
**तद्ब्रह्मेति निशामयेति निपुणं ब्रूते परब्रह्मणः ।**

सिद्धं लक्षणमादरेण महता व्यावर्त्तयद् ब्रह्मण-
स्तत्त्वं तत्त्वमसीतिवाक्यनिलयं तच्छब्दलक्ष्यं वचः॥५१३॥

एकमिति। यद्वा चेतने जगदुपादानत्वैकत्ववैशिष्ट्यस्यापि तात्पर्यगोचरत्वे तयोः परमार्थिकत्वेन ब्रह्मपदार्थान्वयप्रसङ्ग इत्याशङ्क्यानुमानसिद्धसदुपादानानुवादेन तस्य ब्रह्मबोधनान्न तात्पर्यगोचरः। एकत्वसंसर्गश्च यद्यपि प्रतिपाद्यस्तथापि स निखिलभेदाभावोपलक्षितस्वरूपमेवेति न दोष इत्यभिप्रेत्याह—एकमिति। यतो वेत्यादिवाक्यमस्य जगतो यच्चेतनं प्रकृतितामापन्नमुत्प्रेक्षते तर्क्यते तदेकं ब्रह्मेति निशामय विचारयेति परब्रह्मणो लक्षणं महता आदरेण ब्रूत इति सम्बन्धः। यद्यपि जगत्प्रकृतित्वावगाह्यनुमानस्य चेतनो न विषयस्तथापि सविषयत्वात्तस्य सतश्च चेतनत्वाच्चेतनमुत्प्रेक्षत इत्युक्तम्। अथवा अस्य यत्सत्प्रकृतितामापन्नमुपादानं यच्च चेतनमधिष्ठातृ उत्प्रेक्षते तदेकं ब्रह्मेति निशामयेति सम्बन्धः। परमिति तु पाठे परं केवलं ब्रूते न तु तत्परमित्यर्थः। तत्र हेतुः। सिद्धमिति। अनुमानसिद्धत्वान्न तत्र तात्पर्यमित्यर्थः। अत एव तस्यापि नाखण्डार्थत्वक्षतिः। तथा चाभिन्ननिमित्तोपादानत्वं ब्रह्मणो लक्षणमितीयं श्रुतिर्दर्शयतीत्यर्थः। लक्षणस्य प्रयोजनमाह—व्यावर्त्तयदिति। तत्त्वमसीतिवाक्यनिलयं प्रतिपाद्यं तच्छब्दलक्ष्यं यद्ब्रह्मणस्तत्त्वं तत्तटस्थेश्वरप्रधानपरमाण्वादेः व्यावर्तयदित्यर्थः॥ ५१३॥

ननु किमेतज्जगत्कारणत्वं मुक्तिदशायामस्ति उत नास्ति अस्ति चेन्मुक्तित्वक्षतिः केवलात्मनावस्थानस्यैव मुक्तित्वात्। न द्वितीयः। लक्ष्येऽविद्यमानत्वेनालक्षणत्वप्रसङ्गादित्यशङ्क्य जगत्कारणत्वस्योपलक्षणत्वात्तद्विरहस्तदा न दोषायेति वक्तुं जगत्कारणत्वस्य तटस्थलक्षणत्वसाधनाय लक्षणान्तरादस्य वैषम्यं वक्तुं लक्षणद्वैविध्यमस्तीत्याह—

लक्ष्यस्य लक्षणमिह त्रिविधं प्रसिद्धं
लोके स्वलक्षणममुष्य विशेषणं वा ।
यद्वोपलक्षणमिमानि च लक्षणेन
व्यावर्णयामि पृथगेव तु तत्प्रतीहि ॥ ५१४ ॥

लक्ष्यस्येति । तदेव त्रैविध्यमाह—स्वलक्षणमित्यादिना । अमुष्य-लक्ष्यस्य स्वलक्षणं स्वरूपमेकं लक्षणममुष्य विशेषणं वाशब्दश्चार्थे लक्ष्यस्य विशेषणं चापरं लक्षणम् । यद्वा वाशब्दस्तथार्थे तथाऽमुष्योपलक्षणं चान्यल्लक्षणमित्यर्थः । ननु व्यावर्त्तकत्वाविशेषात्कथं लक्षणत्रैविध्यमित्याशङ्क्य व्यावर्त्तकत्वे समानेपि तदवान्तरलक्षण-भेदादित्याह-इमानीत्यादिना । लक्षणानीत्यर्थः । लक्षणेन—तत्तल्लक्षणेन ॥ ५१५ ॥

नन्वसाधारणो धर्मो लक्षणं तच्च न स्वरूपस्य तस्य तद्धर्म-त्वाभावान्नोपलक्षणस्याप्येतदस्ति तस्य लक्ष्यसमकालावस्थाना-भावात्काकादेरन्यसाधारणत्वाच्च तत एतेषु लक्षणसामान्यलक्षण-मेव न तत्कथं लक्षणत्रैविध्यमिति चेदुच्यते—असाधारणधर्मपदेन हि लक्ष्येतरावृत्तित्वे सति सकललक्ष्यसम्बन्धित्वं सम्बन्धश्चा-भेदेपि । सकललक्ष्यसम्बन्धित्वं च लक्ष्यपदार्थतावच्छेदकावच्छेदेन लक्ष्यसम्बन्धित्वं ततो नैकव्यक्तिगगनादिस्वरूपलक्षणे छिद्रादाव-व्याप्तिः । काकादिश्च न तटस्थलक्षणं किन्तूपलक्षणमेवाग्रे च तटस्थ-लक्षणस्य तदुदाहरणत्वप्रदर्शनं कादाचित्कतया व्यावृत्तिबोधकत्व-मात्रेण दण्डादिश्च न लक्षणं तत्रोक्तलक्षणाभावादिति पराभिमत-लक्षणे त्रितयानुगते सत्यपि स्वयमनुगतं साधारणलक्षणमाह —

लक्ष्यार्थनिष्ठमुपलब्धमतोऽन्यतोऽर्था-
न्निःशेषतो यदतिरिच्य तदर्थवस्तु ।

लक्ष्यं निवेदयति लक्षणमेतदाहुः
सामान्यलक्षणमिदं त्रिषु लक्षणेषु ॥ ५१५ ॥

लक्ष्यार्थनिष्ठमिति । एतल्लक्षणं त्रिषु लक्षणेषु सामान्यलक्षणमित्याहुरिति सम्बन्धः । एतत्पदार्थमाह— लक्ष्यार्थेति । सकललक्ष्यसम्बन्धयतो लक्ष्यान्निःशेषतः सर्वस्मादतिरिच्य व्यावर्त्य तदर्थं वस्तु लक्ष्यं स एवार्थः तदर्थः स एव वस्तुप्रामाणिकमित्यर्थः । सकललक्ष्यार्थसम्बन्धित्वे सति यदुपलब्धं सदलक्ष्यादन्यस्मात्सर्वस्माद्व्यावृत्य लक्ष्यं बोधयति तल्लक्षणसामान्यलक्षणमिति सम्बन्धः । सकललक्ष्यार्थसम्बन्धित्वे सति व्यावर्त्तकज्ञानविषयो लक्षणमित्यर्थः । व्यावर्त्तकज्ञानविषयो लक्षणमित्युक्ते दण्डादावतिव्याप्तिः । तदर्थं सकललक्ष्यार्थसम्बन्धित्वे सतीतिदण्डस्य पुरुषसम्बन्धेपि पुरुषत्वावच्छेदेन तत्सम्बन्धाभावान्न तत्रातिव्याप्तिः । यदि तत्तत्पुरुषत्वमेव तत्तद्दण्डादिप्रत्याय्यव्यावृत्याश्रयतावच्छेदकमिति तत्तद्दण्डो लक्ष्यतावच्छेदकावच्छिन्नसम्बन्धीति ब्रूयात्तदा तत्तद्दण्डादेरपि लक्षणत्वमिष्टमेवासाधारणधर्मत्वादत्र काकोपि तटस्थलक्षणमेव ततस्तत्र लक्षणगमनं न दोषायेत्यर्थः ॥ ५१५ ॥

तत्र स्वरूपलक्षणलक्षणमाह—

लक्ष्यस्वरूपमपि सद्यदमुष्य साक्षा-
दर्थान्तराद्भवति भेदकमेतदाहुः ।
अस्य स्वलक्षणतयैव तु लक्षणं त्वं
ह्रिदं जलं द्रवमितीदृशमत्र लोके ॥ ५१६ ॥

लक्ष्यस्वरूपमिति । यत्साक्षाल्लक्ष्यस्वरूपं सदमुष्य लक्ष्यस्यार्थान्तराद्भेदकं भवति तल्लक्षणं व्यावर्त्तकमस्य लक्ष्यस्य स्वलक्षणतयैवा-

हुरिति सम्बन्धः । विशेषणलक्षणादावतिव्याप्तिपरिहारायाह-- स्वरूपमिति । तत्र लौकिकप्रसिद्धयनुरोधेनोदाहरणमाह—खंछिद्रमित्यादिना । न चात्र छिद्रत्वादिधर्म एव लक्षणं अर्म्यतिरिक्तच्छिद्रताया लौकिकैरननुभवात् । नचैवं खं छिद्रमिति वाक्यस्यानवयापातः, ज्ञातघटस्याज्ञातकलशशब्दार्थस्य घटः कलश इति पदद्वयान्वयबोधवत्प्रकृतेप्युपपत्तेः । लक्षणत्वं च खं छिद्रमिति ज्ञानानन्तरमच्छिद्रद्रव्याव्यावृत्तिदर्शना द्वस्तुतस्तु सत्यादिकमेवात्रोदाहरणं सत्यादिरूपेण तज्ज्ञानेपि तस्यान्यस्मात्प्रधानादेर्व्यावृत्तिदर्शनेन तत्र सामान्यविशेषोपलक्षणसत्त्वादित्यर्थः ॥ ५१६ ॥

विशेषणलक्षणलक्षणमाह—

स्वानुरक्तमितिजन्मकारणं
यत्पुनर्भजति लक्ष्यवस्तुनि ।
तद्विशेषणतयाऽस्य लक्षणं
केसरादिकमिवाश्ववस्तुनः ॥ ५१७ ॥

स्वानुरक्तेति । स्ववैशिष्ट्यविषयबुद्धिकारणं विषय इत्यर्थः । पुनः शब्दस्त्वर्थः यल्लक्षणवस्तुनि स्वानुरक्तमितिजन्मकारणं भवति । तल्लक्षणं पुनरस्य लक्ष्यस्य विशेषणतया विशेषणलक्षणतयाहुरिति सम्बन्धः । यत्सकललक्ष्यसम्बन्धित्वे सति स्वसम्बन्धकाल एव व्यावृत्तधीजनकविषयः तद्विशेषणलक्षणमित्यर्थः । अव्यावर्त्तकप्रमेयत्वादिव्यावर्त्तनाय व्यावृत्तधीजनकेत्यादि यद्विषयत्वेन धियो व्यावर्त्तकत्वं तदेव तादृशबुद्धिविषयत्वेन विवक्षितं तेन शुक्लो घटः प्रमेयमित्यादिज्ञानविषयप्रमेयत्वे नातिव्याप्तिः । काकादावतिव्याप्तिवारणाय स्वसम्बन्धकाल एवेति । स्वरूपलक्षणेतिव्याप्तिपरिहारार्थं लक्ष्यसम्ब-

न्धीति सम्बन्धश्च भेदगर्भो विवक्षितः । दण्डादावतिव्याप्तिपरिहारार्थं—सकलेति । अस्योदाहरणमाह—केसरादिकमिति ॥ ५१७ ॥

तटस्थलक्षणलक्षणमाह—

स्वानुरक्तमितिजन्महेतुतां
लक्ष्यवस्तुनि निरस्य लक्षणम् ।
अस्वरूपमपि तस्य यद्भवे-
त्काकवत्तदुपलक्षणं विदुः ॥ ५१८ ॥

स्वानुरक्तमिति । जन्महेतुतामिति लक्षणं व्यावर्त्तकमस्वरूपं स्वरूपादन्यत्तस्य लक्ष्यस्य यत्तस्यास्वरूपमपि लक्ष्यवस्तुनि स्वानुरक्तमिति जन्महेतुतान्निरस्य लक्षणं भवेत्तदुपलक्षणं तटस्थलक्षणं विदुरिति सम्बन्धः । यत्सकललक्ष्यसम्बन्धित्वे सति स्वसम्बन्धानाश्रयकालेपि व्यावर्त्तकधीजनकविशिष्टधीविषयस्तत्तटस्थलक्षणमित्यर्थः । विशेषणेऽतिव्याप्तिपरिहारार्थं स्वसम्बन्धानाश्रयेति इतरत्स्पष्टं तत्रोदाहरणं—काकवदिति । यद्यपि काकमात्रं न तटस्थलक्षणं तस्यालक्ष्येपि सत्वात्तथापि काकविशेषो लक्षणमित्यर्थः । वस्तुतस्तु काको न तटस्थलक्षणं किन्तूपलक्षणमेव तत्र चातिव्याप्तोपि दण्डादिवद्व्यावर्त्तक एवातिव्याप्तेर्लक्षणदूषणत्वादत एव चाचार्यैरप्युपलक्षणमित्युक्तं तथा च लक्ष्येतरावृत्तित्वे सति लक्ष्यनियतवृत्तिध्वंसप्रतियोगित्वं तल्लक्षणं द्रष्टव्यम् । केसरादेरश्ववृत्तिध्वंसप्रतियोगित्वेऽपि तद्ध्वंसस्याश्वनियतत्वाभावान्न तत्रातिव्याप्तिः । सामान्यलक्षणमप्यस्माभिरुक्तमेव द्रष्टव्यम् ॥ ५१८ ॥

अस्त्वेवं लक्षणत्रैविध्यं, प्रकृते किमायातमित्याकाङ्क्षायां जगत्कारणत्वस्य मुक्तिकालीनध्वंसप्रतियोगित्वेपि तस्य तटस्थलक्षणत्वं संभवतीत्यभिप्रेत्य तस्य तटस्थलक्षणत्वं साधयति—

विश्वोद्भवस्थितिलयप्रकृतित्वमस्य
चिद्वस्तुनो यदसहायपरिग्रहस्य।
तद्वर्णनीयमुपलक्षणमेव कस्मा-
द्ब्रह्मेति लक्ष्यपदशक्त्यविरोधहेतोः ॥५१६॥

विश्वोद्भवस्थितिलयप्रकृतित्वमिति। असहायपरिग्रहस्य न विद्यते सहायस्य द्वितीयस्य सहकारिणः परिग्रहो यस्य तस्यास्य चिद्वस्तुनः यद्विश्वोद्भवस्थितिलयहेतुत्वं तदुपलक्षणमेव वर्णनीयमिति सम्बन्धः। ननु ब्रह्मणि सर्वदा जगत्कारणत्वसत्त्वात्कथमस्योपलक्षणत्वं वर्ण्यत इत्याक्षिपति—कस्मादिति। कारणत्वस्योपलक्षणत्वाभावे किमेतत्स्वरूपलक्षणमेव किं वा विशेषणलक्षणम्। आद्यो भवद्भवेद्यदि सविशेषब्रह्मलक्षणं न चैतदस्ति तस्य मुमुक्षुजिज्ञास्यत्वेनापुरुषार्थत्वादप्रसक्तत्वाच्च किन्तु ब्रह्मपदसमर्पितं यदनवच्छिन्नमहच्चैतन्यानन्दात्मकं वस्तु तदेव लक्ष्यं तस्यैव मुमुक्षुजिज्ञास्यत्वात्तस्य च निरस्तसमस्तप्रपञ्चस्य कथं प्रपञ्चघटितजगत्कारणत्वं स्वरूपं भवेत्तदिदमुक्तम्—सहायपरिग्रहस्येति। अतो लक्ष्यब्रह्मपदविरोधपरिहाराय तदुपलक्षणत्वमेव वक्तव्यमिति परिहरति—ब्रह्मेति। लक्ष्यपदशक्तिविरोधहेतोरिति—लक्ष्यवाचिपदं लक्ष्यपदं तस्य शक्तिरनवच्छिन्नमहत्प्रतिपादकसामर्थ्यं तद्विरोधाद्धेतोरित्यर्थः ॥ ५१६ ॥

ननु माभूदेतत्स्वरूपलक्षणं विशेषणलक्षणं किं न स्यादित्याशङ्क्य तत्राप्युक्तदोषस्य सत्त्वान्नैवमित्याह—

विश्वोद्भवस्थितिलयप्रकृतित्वरूप-
मेकाकिनो यदिह लक्षणमुच्यमानम्।

तद्ब्रह्मणो यदि विशेषणरूपमिष्टं
ब्रह्मेति लक्ष्यविषयस्य पदस्य भङ्गः ॥ ५२० ॥

विश्वोद्भवस्थितिलयप्रकृतित्वरूपमिति । इहऽ-यतो वेत्यादिवाक्ये एकाकिनोऽद्वितीयस्य ब्रह्मण उच्यमानं लक्षणं यद्विश्वोद्भवस्थितिलयप्रकृतित्वरूपं तद्यदि ब्रह्मणो विशेषणरूपमिष्टं विशेषणलक्षणं स्यात्तदा लक्ष्यविषयस्य ब्रह्मेतिपदस्य भङ्गो बाधः स्यादित्यर्थः । जगत्कारणत्वस्य विशेषणलक्षणत्वे तस्य यावल्लक्ष्यकालीनत्वं वक्तव्यं तस्यैव विशेषणत्वात्तथा च तस्याविद्याकल्पितत्वे तन्न संभवति तस्य विद्यया निवर्त्यत्वात्ततो वास्तवमेव तद्वक्तव्यम् । तथा चानवच्छिन्नार्थविषयब्रह्मपदार्थस्य संकुचितमहत्त्व किं न स्यात्तत्राह—लक्ष्यार्थवाचीति । हि यतो लक्षणार्थे बाधापत्तिरतस्तत्परिहाराय जगत्कारणत्वमुपलक्षणमिति वक्तव्यमित्यर्थः ॥ ५२० ॥

लक्ष्यार्थवाचिपदमत्र हि लक्षणार्थे
वाक्ये प्रधानमितरद्गुणभूतमाहुः ।
ब्रह्मेति लक्ष्यविषयं च पदं समर्थं
भूमानमेव वदितुं न तु मर्त्यमल्पम् ॥५२१॥

ननु लक्षणानुरोधेन लक्ष्यस्य ब्रह्मपदालक्षणप्रमेयके वाक्ये लक्ष्यार्थवाचिपदं प्रधानमितरल्लक्षणविषयं पदं गुणभूतमित्याहुः । ब्रह्मेति पदं च लक्ष्यविषयं ततो ब्रह्मपदं भूमानमनवच्छिन्नं महद्वदितुं समर्थं न तु मर्त्यम्मरणशीलमत एवाल्पमित्यर्थः । लक्षणवाक्ये हि लक्ष्यवाचिपदं प्रतिपाद्यपरत्वाद्बलवल्लक्षणवाचिपदं तु लक्ष्यप्रतिपत्तिशेषलक्षणानुवादत्वाद्गुणभूतमेव । अतो लक्षणानुरोधेन प्रधानब्रह्मपदस्यान्यथानयनमनुचितमिति भावः ॥ ५२१ ॥

उक्तमर्थं हेतूपन्यासपूर्वकमुपसंहरति—

**तस्मात्प्रधानपदभङ्गभयाद् गुणानां**
**युक्तं ग्रहीतुमुपलक्षणगोचरत्वम् ।**
**ब्रह्मेति चैतदुपलक्ष्यसमर्पणार्थ-**
**मेवं समञ्जसमिदं पदजातमस्मिन् ॥ ५२२ ॥**

तस्मादिति । यतो ब्रह्मेतिच्चैतल्लक्ष्यसमर्पणार्थं तस्मात् ब्रह्मपदानुरोधेन ज्ञाननिवर्त्यजगज्जन्मादिगुणविषययतोवेत्यादिवाक्यानामुपलक्षणार्थत्वमेव । एवं सति यतोवेत्यादिवाक्ये पदजातं समञ्जसं स्यान्मुख्यार्थं स्याज्जन्मादिपदानामप्यर्थबाधाभावात्पारमार्थिकत्वस्यातदर्थत्वाद्ब्रह्मपदार्थस्याप्यबाधितत्त्वादित्यर्थः । तस्मादभिन्ननिमित्तोपादानत्वमुपलक्षणमात्मन इति सिद्धम् ॥ ५२२ ॥

एवं लक्षणवाक्यं जगत्कारणत्वोपलक्षिताद्वितीयं ब्रह्म प्रतिपादयतीत्युक्तमत्र केचिल्लक्षणवाक्यं लक्ष्यनिष्ठतया लक्षणं ज्ञापयत्कार्यत्वहेतोः पक्षधर्मत्वं ज्ञापयति सर्वज्ञत्वादिगुणकब्रह्मसिद्धिस्त्वनुमानादेवेति वदन्ति। अन्ये तु लक्षणवाक्येन लक्ष्ये लक्षणे ज्ञापिते लक्षणेन ब्रह्मादिपदस्य ब्रह्मणा वाच्यवाचकभावः सम्बन्धः सिद्ध्यतीति । तदुभयं दूषयन् लक्षणस्य स्वाभिमतं प्रयोजनमाह—

**लक्ष्यस्वरूपकथनाय न लक्षणानि**
**नाप्यस्य वाचकमिदं पदमित्यमुष्मै ।**
**व्यावृत्तमेतदखिलादितरार्थजाता-**
**दित्येतदेव वदितुं ननु लक्षणानि ॥ ५२३ ॥**

लक्ष्यस्वरूपेति । लक्ष्यब्रह्मानुमितय इत्यर्थः । अस्य ब्रह्मणः इदं पदं ब्रह्मेति पदममुष्मै ज्ञानायेति शेषः । किं तर्हि लक्षणप्रयोजनमित्यत्राह—व्यावृत्तमेतदिति । अखिलादितरार्थजातादलक्ष्यादेतद्ब्रह्मव्यावृत्तमित्येतद्धितुं ज्ञापयितुमेव लक्षणानि नन्विति सम्बन्धः ॥ ५२३ ॥

ननु कुतो लक्ष्यानुमितये संज्ञासञ्ज्ञिसम्बन्धपरिच्छित्तये वा लक्षणं न भवतीति चेत्तत्राद्यपक्षनिराकरणे तावद्धेतुं दर्शयन्स्वपक्षस्य ननुशब्दसूचिता प्रगीतवृद्धप्रसिद्ध्युपोद्बलितत्वमाह—

लक्ष्यस्वरूपमुपलभ्य तदेकनिष्ठं
दृष्ट्वा च लक्षणमनेन तदेव लक्ष्यम् ।
व्यावर्त्य बोधयितुमुत्सहते जनोऽयं
तत्त्वान्तरादिति यतः प्रतिपन्नमेतत् ॥ ५२४ ॥

लक्ष्यस्वरूपमुपलभ्येति । ब्रह्मस्वरूपं ब्रह्मादिपदादुपलभ्येत्यर्थः । लक्षणं जगत्कारणत्वादिलक्षणमनेन लक्षणेन तदेव लक्ष्यं पूर्वमवगतमेव लक्ष्यं तत्त्वान्तरात्प्रधानादेः अयं जनो लक्ष्यस्वरूपमुपलभ्य तदेकनिष्ठतया च लक्षणं दृष्ट्वानेन लक्षणेन पूर्वं दृष्टमेव लक्ष्यं तत्त्वान्तराद्व्यावर्त्त्य बोधयितुं ज्ञापयितुमुत्सहते प्रगल्भत इत्येतत्प्रतिपन्नं यतस्तत इतरार्थजातादित्यादिना पूर्वेण सम्बन्धः । अतो लक्षणावगमात्प्रागेव लक्ष्यस्य सिद्धत्वान्न तेनैव तत्सिद्धिरित्यर्थः । शेषं चापेक्षितमत्रोपरिष्टात्प्रपञ्चयिष्यति ॥ ५२४ ॥

अप्रसिद्ध्यैव द्वितीयमपि दूषयति—

संज्ञासंज्ञिसमन्वयावगतये नेष्टं क्वचिल्लक्षणं
व्यावृत्तिप्रतिपत्तिमात्रजनकं लक्ष्ये भवेदन्यतः ।

**लक्ष्यं लक्षणवर्त्मना हि जगति व्यावर्तयन्तोऽन्यत-**
**स्तल्लक्षणमादरेण महता संगृह्णते वादिनः ॥ ५२५ ॥**

संज्ञासंज्ञीति। समन्वयः सम्बन्धः। कचित्क्वचिदपि लक्षणं संज्ञासंज्ञिसमन्वयावगतये नेष्टमिति लक्ष्ये ब्रह्मण्यन्यतो व्यावृत्तिप्रतिपत्तिमात्रजननं भवेदिति सम्बन्धः। किं चेतरव्यावृत्ततया लक्ष्यप्रतिपत्तौ ह्यसाधारणशब्दवाच्यत्वं ज्ञातुं शक्यते ब्रह्मण इतराभेदनिश्चयतत्संशययोरितरावाचकब्रह्मपदवाच्यत्वज्ञानादितरभेदज्ञानं च ब्रह्मणो नानुमानेतरप्रमाणात्प्रत्यक्षतो लक्षणवाक्याद्वा भवति। अनुमानमपि न लक्षणव्यतिरिक्तं किञ्चिदस्तीति लक्षणमनुमानविधया प्रधानादिव्यावृत्तिं बोधयति। अवगते च व्यावृत्ते ब्रह्मणि समभिव्याहारादिना ब्रह्मशब्दस्तत्र व्युत्पाद्यत इति व्यावृत्तिसिद्धिरेव लक्षणप्रयोजनमित्यभिप्रेत्य न केवलं लक्षणस्य वाच्यवाचकसम्बन्धः प्रयोजनमित्यत्र प्रसिद्धयभावः अपि तु व्यावृत्तसिद्धौ प्रसिद्धिरपीति पूर्वोक्तं प्रसिद्धमेवानुवदति—लक्ष्यमिति ॥ ५२५ ॥

पक्षद्वयनिराकरणमुपसंहरति—

**तस्माद् ब्रह्मणि वाच्यवाचकयुजासिद्धयै श्रुतिर्नाभ्यधा-**
**ज्जन्माद्यस्य समीक्षितस्य जगतो यद्ब्रह्मणो लक्षणम्।**
**नापीदं स्वकरूपबोधनपरं संकीर्तितं ब्रह्मणः**
**किंत्वब्रह्मपदार्थतोऽस्य सकलाद्व्यावृत्तता सिद्धये ॥५२६॥**

तस्मादिति। युजा सम्बन्धः संज्ञासंज्ञिसम्बन्धावगतय इत्यर्थः। श्रुतिर्यतो वेत्याद्या समीक्षितस्य परिदृश्यमानस्य ब्रह्मण इति पञ्चमी ब्रह्मणः सकाशाद्यदस्य समीक्षितस्य जगतो जन्मादि ब्रह्मणो जगत्कारणत्वमिति यावत्तस्माद्यतो ब्रह्मणो जगत्कारणत्वलक्षणमिदं वाच्यवाच-

कयुजा सिद्ध्यै श्रुतिर्नाभ्यधादिदं संकीर्तनम्। कर्मणि ल्युट्। संकीर्तितं लक्षणं ब्रह्मणि स्वरूपबोधनपरं ब्रह्मस्वरूपप्रकाशनपरं न किन्त्वस्य ब्रह्मणः सकलादब्रह्मपदार्थतो व्यावृत्ततासिद्धये भवतीति सम्बन्धः ॥ ५२६ ॥

ननु किं तद्व्यावर्त्यमिति तदाह—

**परिच्छिन्नवस्तुव्यवच्छेदसिद्ध्यै**
**जगाद श्रुतिर्लक्षणं ब्रह्मणस्तत्।**
**परिच्छिन्नता प्रापिता पूर्वपक्षे**
**परब्रह्मणस्तन्निषेधार्थमेतत् ॥ ५२७ ॥**

परिच्छिन्नवस्त्विति। परमाण्वादिकं व्यावर्त्यमित्यर्थः। तदभिन्ननिमित्तोपादानत्वमित्यर्थः। नन्वद्वैतब्रह्मवादिमते व्यावर्त्यस्यान्यस्याभावात्कथमभिन्ननिमितोपादानात्वाख्यलक्षणस्य व्यावृत्तिसिद्धिः प्रयोजनमित्युच्यत इत्याशङ्क्य वास्तवव्यावर्त्याभावेपि परमतसिद्धव्यावर्त्यस्य सिद्धत्वान्न व्यावृत्तिसिद्धिप्रयोजनं विहन्यत इत्यभिप्रेत्याह—परिच्छिन्नतेति। पूर्वपक्षे नैयादिकादिपूर्वपक्ष इत्यर्थः। तन्निषेधार्थं तस्य परिच्छेदस्य निषेधार्थमेतदुक्तं लक्षणं निषेधो हि निषेध्यप्रतीतिमेवापेक्षते न तु तस्य क्वचित्सत्त्वमपि तस्य निषेधानुपयोगाच्छुक्तिरजतसंसर्गादेः परेणास्मदभिमतानिर्वचनीयत्वादेश्च निषेधानुपपत्तेश्चान्यतः प्रसिद्धपरिच्छिन्नवस्तुव्यवच्छेदेन लक्षणमर्थवदित्यर्थः ॥ ५२७ ॥

ननु के ते परिच्छिन्नाः पदार्था इत्याकाङ्क्षायामाह—

**कालस्वभावपरमाण्वसुभृत्प्रधान-**
**स्कन्धप्रतीत्यखिलशून्यकथाप्रसङ्गे।**

जन्मादिसूत्रमवतीर्णमियं श्रुतिश्च
तस्मादिदंपरमिदं द्वितयं प्रवृत्तम् ॥ ५२८॥

कालस्वभावेति । कालश्च स्वभावश्च परमाणुश्चासुभृच्च प्रधानं च स्कन्धश्च प्रतीतिश्चाखिलशून्यं च तेषां कथाप्रसङ्गे कथाप्रवृत्तावित्यर्थः। तत्र कालविशेषे सत्येवाङ्कुरादेः फलदर्शनादागमाच्च काल एव कारणमिति पौराणिकाः। स्वभावव्यतिरेकेण कार्यकारणभावनिरूपणायोगात्स्वभावः कारणमिति चार्वाकाः। पृथिव्यादिचतुर्विधाः परमाणवो जगदुपादानमिति नैयायिकवैशेषिकाः। तथा हि—त्र्यणुकस्य सावयवत्वबहिरिन्द्रियप्रत्यक्षद्रव्यत्वाभ्यां कार्यत्वे सिद्धे विमतं स्वन्यूनपरिमाणारब्धं भवति कार्यद्रव्यत्वात् घटवदिति द्व्यणुके सिद्धे तस्यापि महद्द्रव्यारम्भकद्रव्यत्वेन कार्यत्वे सिद्धे स्वन्यूनपरिमाणारब्धत्वे च सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्वानधिकरणद्रव्यत्वादित्यनुमानानन्तरं द्व्यणुकं नित्यद्रव्यसमवेतमनित्यासमवेतत्वे सति समवेतत्वाच्छब्दवदिति द्व्यणुकसमवायिनो नित्यत्वं निरवयवत्वं च सिद्ध्यति निरवयवः परिच्छिन्नश्च परमाणुरिति परमाणुप्रकृतिकं जगदिति। असुभृत्सूत्रात्मा करणमिति हैरण्यगर्भास्त्वागमात्कल्पयन्ति। त्रिगुणात्मकं जगदुपादानमिति सांख्या अनुमिमते। तथा हि सर्वे विकाराः सुखदुःखमोहात्मकप्रकृतिकाः नियमेन सुखदुःखमोहान्वितत्वाद्यन्नियमेन यदन्वितं तत्तत्प्रकृतिकं यथा मृदन्वितो घटादिः तादृशी च प्रकृतिः प्रधानमेव तस्य सत्वरजस्तम आत्मत्वेन सुखदुःखमोहात्मकत्वात् न चासिद्धो हेतुः कामिन्यादिनिरीक्षणे कस्यचित्सुखं कस्यचिद्दुःखं कस्यचिन्मोह इत्येकस्यैव सुखदुःखमोहात्मकत्वानुभवात्। रूपविज्ञानवेदनासंज्ञासंस्कारात्मकाः पञ्च स्कधा एव कारणमिति सौत्रान्तिकवैभाषिकौ तत्र रूप्यते इति रूप्यते ऽनेनेति च कर्मकरणव्युत्पत्तिद्वयेन सविषयाणीन्द्रियाणि रूपस्कन्धः, अहमित्यालयविज्ञानं चक्षुरादिज-

न्यरूपादिविषयं निर्विकल्पकज्ञानं वा विज्ञानस्कन्धः, प्रियादिविषयानुभवजन्या या चित्तस्य सुखदुःखादिविशेषावस्था सा वेदनास्कन्धः, सविकल्पप्रत्ययः संज्ञास्कन्धः, रागादयः संस्कारस्कन्धः, एतैश्च पञ्चभिः स्कन्धैराध्यात्मिकदेहादिसंघातो भवति। खरस्नेहोष्णोणात्मकैश्चतुर्विधैः परमाणुभिः बाह्यघटादिसंघातो भवतीति तन्मतम्। प्रतीतिर्बुद्धिवृत्तिः क्षणिकविज्ञानं कारणमिति विज्ञानवादिनः यत्प्रतीयते तद्विज्ञानाभिन्नं यथाविज्ञानमिति प्रपञ्चस्य विज्ञानकार्यतया तदभेदं वर्णयन्ति। विमतं कार्यं शून्यपुरस्सरमनुपलभ्यमानपूर्वावस्थात्वाज्जागराद्यकार्यवदिति शून्यकार्यत्वं शून्यवादिनो मन्यन्ते। ततस्तेषां पूर्वपक्षेणोपस्थितौ तद्व्यावृत्तये यतो वेत्यादिश्रुतिरिदं जन्मादिसूत्रं चावतीर्णमिति। इदंपरं प्रधानादिव्यावृत्तिपरमेवेदं द्वितयं श्रुतिः सूत्रं च तदुभयदर्शितं लक्षणं युक्तमिति भावः। ननु कथं तेषां व्यावृत्तिरुच्यते तत्र न तावत्काल उपादानकारणं तत्र प्रमाणाभावादन्वयव्यतिरेकयोर्निमित्ततविषयत्वेनार्थान्तरत्वात् नाप्यागमः। तादृश्याः श्रुतेरभावात्पुराणवाक्यानां च श्रुतिविरोधपरिहाराय निमित्तत्वविषयत्वस्यैवोचितत्वात्। नापि स्वभावः कारणं किं स्वस्य भावः स्वभाव इतिपदार्थनिष्ठो धर्मः स्वभावशब्देनाभिधीयते। किं वा स्वश्चासौ भावश्चेतिपदार्थस्वरूपमेव। किं वा डित्थादिशब्दार्थवदवयववृत्तिमनपेक्ष्यरूपानपेक्षत्वमेव। नाद्यः। स्वधर्मेण स्वस्य जन्यत्वानुपपत्तेः। न द्वितीयः। स्वात्मानं प्रति स्वस्य नियतपूर्वोत्तरक्षणभावित्वानुपपत्तेः। न तृतीयः। अन्वयव्यतिरेकाभ्यां कारणापेक्षाया अनुभवाद्विशिष्टदेशकालपदार्थमपेक्ष्य कार्यं जायते। अथ च कारणानपेक्षमिति व्याहतमपेक्ष्यस्यैव कारणत्वात्। नापि परमाणव उपादानं तत्र प्रमाणाभावात्। नचोक्तानुमानं प्रमाणं क्षौमद्वयारब्धरज्जुद्रव्ये स्वन्यूनपरिमाणद्रव्यारब्धत्वनियमाभावेन कार्यत्वहेतोर्व्यभिचारात्। न च तत्कार्यान्तरमेव न भवतीति वाच्यम् तस्य घटादेरिव कार्यान्तरप्रत्ययान्तरयोः

त्त्वात्परमाणोरारम्भकत्वानुपपत्तेश्च । ते हि परस्परं संयुज्यमानाः सन्तो द्व्यणुकादिकमारभन्त इति वक्तव्यम् । न च निरवयवानां तेषां परस्परं संयोगः संभवति । अव्याप्यवृत्तिसंयोगस्य निरवयवे तस्मिन्समवायानुपपत्तेः । ननु निरवयवेपि तस्मिन्नवच्छेदभेदेन प्रदेशवृत्तिसंयोगः संभवतीति चेत्स किमच्छिन्नप्रदेशः पारमार्थिकः उत काल्पनिकः। नाद्यः। वस्तुतो निरवयवे परमाणावच्छेदभेदतोऽपि वास्तवदेशद्वयानुपपत्तेः । न द्वितीयः । परमणुदेशव्यतिरेकेणानिर्वाच्यदेशान्तरस्य त्वयानङ्गीकारादङ्गीकारेपि कल्पितपरिच्छिन्नदेशसंयोगस्यापि कल्पितत्वापत्या वास्तवद्व्यणुकारम्भकत्वानुपपत्तेः। अवच्छेदसंयोगस्यापि संयोगतया निरवयवे वृत्त्यनुपपत्तेश्च । ननु स्वरूपसम्बन्धेन दिगेव तत्रावच्छेदिकेति चेन्न । स्वरूपसम्बन्धस्य सर्वत्र वृत्तित्वेनास्य भेदप्रयोजकत्वानुपपत्तेः । तस्यापि प्रदेशवृत्तावन्य एव प्रदेशभेदप्रयोजकः कल्पनीयः । ननु परमाणुसंयोगस्य व्याप्यवृत्तित्वमेवास्तु । न च तस्याव्याप्यवृत्तित्वनियमभङ्गापत्तिः सावयवसंयोगस्यैव तथात्वादिति चेन्न । तथात्वे सर्वात्मना संयुक्तपरमाणुद्वयस्यैकपरमाणुमात्रत्वेन तदारब्धद्व्यणुकस्य परमाणोरनतिशयापत्तेः । न चैतद्युज्यते । कार्यद्रव्यस्य स्वन्यूनपरिमाणवद्द्रव्यारब्धत्वनियमभङ्गप्रसङ्गादपसिद्धान्तापातादेवं त्र्यणुकस्यापि परमाणुमात्रत्वेन सर्वस्यापि कार्यद्रव्यस्यातीन्द्रियत्वापत्तेश्च । ननु माभूत्परमाणुसंयोगः असंयुक्ता एव परमाणवो द्व्यणुकमारभन्त इति चेन्न । आरम्भकावयवसंयोगस्यासमवायिकारणस्याभावे तत्साध्यद्व्यणुकानुत्पत्तेः । नापि सूत्रात्मा कारणं तस्य परिच्छिन्नज्ञानशक्तेः निखिलजगदुपादानत्वानुपपत्तेः । नापि प्रधानं जगत्कारणं तत्र प्रमाणाभावात् । न चोक्तानुमानं प्रमाणं सुखदुःखमोहानामान्तरत्वेन घटादेश्च बाह्यत्वेनानुभवेन सुखदुःखमोहात्मकत्वस्य पदार्थेष्वसिद्धेः । न च योषित्पिण्डादौ तथात्वं दृष्टमिति वाच्यम् । तत्रापि तज्ज्ञानस्य

रागादिसहकार्यन्तरानुरोधेन पुरुषसमवेतसुखादिजनकत्वादन्यथा प्रतिपुरुषं सुखदुःखमोहानुभवप्रसङ्गाद्वस्तुस्वभावस्य सर्वसाधारणत्वात् । किंच प्रधानं हि सत्त्वरजस्तमसां साम्यावस्था न च तस्यां दशायां तस्य कारणत्वं सम्भवति । गुणवैषम्यं विना गुणानामन्वयानुपपत्तेः । परिणामायोगाद् गुणवैषम्यदशायां प्रधानत्वाभावात्स्कन्धनिराकरणं च द्वितीयाध्याये करिष्यति । नापि क्षणिकविज्ञानं कारणं क्षणिकस्य स्थायिकारणत्वानुपपत्तेः । पदार्थानां स्थायित्वमपि द्वितीये वक्ष्यति । नापि शून्यं कारणम् । तत्र प्रमाणाभावात् । नाप्युक्तानुमानमनुपलभ्यमानपूर्वावस्थात्वस्योपलभ्यमानमृत्पिण्डादिलक्षणपूर्वावस्थेषु घटादिष्वसिद्धेः । निस्तत्त्वस्य तस्य पूर्वक्षणसत्त्वलक्षणकारणत्वानुपपत्तेश्च । नन्वेवमपि श्रुतौ सूत्रे च तद्व्यवर्तकपदाभावात्कथं तद्व्यावृत्तिरिति चेन्न । अनुमानसिद्धचेतनानुवादकयच्छब्दसमभिव्याहृततया यत इति पञ्चम्या अभिन्ननिमित्तत्वस्यावगमात्तत्सूत्रेपि जन्मादीति जन्मस्थितिलयविषयपदमहिम्ना यत इति पञ्चमी महिम्ना चाधिष्ठानाभिन्नोपादानत्वावगमात्तद्व्यावृत्त्युपपत्तेरित्यर्थः ॥ ५२८ ॥

यतो वेत्यादिवाक्ये ब्रह्मपदस्य जगदधिष्ठातुस्ताटस्थ्यनिरासेन प्रत्यगभेदसिद्धिः प्रयोजनमिति वक्तुं परमतमनुवदति—

अधिष्ठात्रधिष्ठेयभावेन योनि-
र्निमित्तं च यत्कारणं जन्मभाजाम् ।
परिच्छिन्नताऽस्यापि संभावितैव
प्रतीचोऽस्य भेदे परैरूच्यमाने ॥ ५२९ ॥

अधिष्ठात्रधिष्ठेयभावेनेति । अधिष्ठाता कृतिमान् अधिष्ठेयः कृतिजन्यव्यापारविषयः कार्यानुकूले कृत्याश्रयत्वतज्जन्यव्यापारविषयत्वेन

यो निरुपादानं निमित्तं कर्त्राधिष्ठेयत्वेन मृदादिवद्यो निरधिष्ठातृत्वेन कुलालादिवत्कर्त्ता चेत्यर्थः। न च हेत्वसिद्धिः। तदात्मानं स्वयमकुरुतेति श्रुतेरित्यर्थः। यत्कार्याणामभिन्ननिमित्तोपादानमित्युच्यते। अस्यापि पराभिमतेश्वरस्येव ताटस्थ्यमेव युज्यते। ब्रह्मणः सकाशात्प्रतीचो ऽकार्यकारणस्वभावस्य भिन्नत्वात्परैस्तथाभ्युपगमाच्चेति ॥५२९॥

दूषयति—

ततस्तन्निषेधार्थमेतद्बभाषे
श्रुतिर्ब्रह्म तद्भिन्नता तस्य कस्मात्।
प्रतीचोऽपि हि ब्रह्मता नित्यसिद्धा
दृशो भेदसिद्धिर्निरालम्बनैव ॥ ५३० ॥

ततइति। यत एवं भूतस्यापि परदृष्ट्या ताटस्थं प्राप्तततस्तन्निराकरणार्थं श्रुतिर्जगत्कारणे ब्रह्मपदं बभाषे। तस्मादस्य जगत्कारणस्य भिन्नता कस्मान्न कस्मादपीत्यर्थः जीवस्यापि प्रतिबिम्बभावेन ब्रह्माभिन्नत्वसंभवादिति भावः। ननु ब्रह्मपदानुगममात्रेण कथं जीवस्य ब्रह्माभिन्नत्वं तस्याप्रमाणत्वादिति चेन्न। तत्त्वमसीत्यादिविशेषतो बोधकश्रुतेः सत्वादित्यर्थः। न केवलं श्रुतितोऽभेदप्रतीतिः किं तर्हि युक्तितोपि भेदनिरासेनाभेदः सिध्यतीत्याह—प्रतीचोऽपीति। दृशः स्वप्रकाशचैतन्यस्वरूपस्य हि यतो दृशः प्रतीचोपि ब्रह्मता नित्यसिद्धेति भेदसिद्धिर्निरालम्बना भ्रान्तिस्ततस्तन्निषेधार्थमिति सम्बन्धः। इदमत्र विवक्षितं प्रत्यगात्मा हि सर्वैरपि वादिभिः स्वप्रकाश इत्येवाभ्युपगन्तव्यः तद्विषयस्य प्रमाणस्यानिरूपणात्तथा हि किं प्रत्यक्षं प्रमाणमुतानुमानाद्येव। नान्त्यः। अहमित्यपरोक्षानुभवात्। आद्येपि तत्र मन एव तत्र प्रमाणं वक्तव्यं नीरूपे निःस्पर्शे च तस्मिन् चक्षुरादेरप्रवृत्तेः तदपि न तत्र प्रमाणम्। स्वसमवेतज्ञानस्य

स्वस्याविषयत्वात्। तज्ज्ञानानाश्रयस्यैव तद्विषत्वात्तदिन्द्रियग्राह्यत्वे तदिन्द्रियवृत्तिजातीयविशेषगुणवत्त्वस्य प्रयोजकत्वात् अन्यस्यानुगतविषयत्वप्रयोजकस्याकर्तृकर्मत्वविरोधप्रसङ्गाच्च । न च विशेषगुणोपहिताकारेण कर्मत्वं केवलाकारेण कर्तृत्वमिति वाच्यम्। उपाधितोऽस्युपहितस्य त्वन्मते भेदाभावात् । ननु द्रव्यबोधस्वरूपात्मा द्रव्याकारेण ग्राह्यः। बोधाकारेण ग्राहक इति चेत्स किं बोधाकारः स्वप्रकाशः नाद्यः जडाजडयोरभेदानुपपत्तेः। भेदाभेदस्य विरुद्धत्वाच्च। अन्त्ये कथं तस्य सिद्धिः। ग्राहकान्तराभावात्। ननु विषयसंविदाश्रयत्वेनात्मा प्रकाशत इति चेन्न विषयसंविदं विनापि केवलमहमिति प्रतीयमानत्वात् । किं च विषयसंविदाश्रयत्वमात्मनः केन सिद्ध्यति किं तेनैव विषयज्ञानेनोतान्येन। नाद्यः। स्वस्य स्वविषयत्वानुपपत्तेः । न हि स्वस्य स्वविषयत्वं विनापि स्वाश्रयत्वमात्मनो विषयीकर्तुं स्वयमलं न द्वितीयः। स्वप्रकाशज्ञानस्य ज्ञानान्तराविषयत्वात्संविदतिरिक्तसंबिदधीनप्रकाशस्य संवित्कर्मत्वनियमाच्च। ततः परिशेषादात्मा स्वयं प्रकाश इत्येवाभ्युपगन्तव्यः ब्रह्मापि स्वयंप्रकाशं प्रकाशत्वे जडत्वेन मिथ्यात्वापातात्ततः कथं स्वयंप्रकाशयोरनयोर्भेदः प्रमाणतो गृह्येत प्रमाणस्य धर्मिप्रतियोगिविषयत्वं विना भेदाविषयत्वाद्धर्मिप्रतियोगिनोश्च स्वयंप्रकाशतया प्रमाणान्तरागोचरत्वात्तस्माज्जीवेश्वरयोर्भेदप्रतीतिर्भ्रान्तिरेवेति। एतच्च सर्वं दृश इत्यनेन सूचयति ॥ ५३० ॥

तस्माद्व्यावर्त्यप्रसिद्धिसम्भवाज्जगत्कारणत्वं श्रुतिसिद्धस्य ब्रह्मणो व्यावृत्तिप्रयोजनमेव न ब्रह्मप्रमितिप्रयोजनमित्युपसंहरति—

जगत्कारणत्वं पुनर्यत्र दृष्टं

न तल्लक्षणं तत्स्वरूपप्रसिद्ध्यै ।

स्वरूपे यतो लक्षणे दृश्यमाने
प्रसिद्धं ततो लक्ष्यवस्तुस्वरूपम् ॥ ५३१ ॥

जगत्कारणत्वमिति । तज्जगत्कारणत्वाख्यं तत्स्वरूपप्रसिद्ध्यै तस्य ब्रह्मणः स्वरूपप्रसिद्ध्यै ततः स्वरूपे ब्रह्मण्यधिकरणे लक्षणे दृश्यमाने सत्येव लक्ष्यं वस्तुस्वरूपं प्रसिद्धं प्रसिद्ध्यति । ततो यत्र जगत्कारणत्वलक्षणं दृष्टं तत्तत्स्वरूपसिद्ध्यैनेति सम्बन्धः । लक्षणाश्रयत्वेन लक्ष्यस्य प्रागेवावगतत्वान्न तदवगतिर्लक्षणप्रयोजनमिति भावः ॥५३१॥

ननु जगन्निमित्तोपादानत्वलक्षणं यतो वेत्यादिवाक्येनानूद्य ब्रह्म प्रतिपाद्यत इत्यनुपपन्नं तस्य लोके कुत्राप्यदर्शनादिति शङ्कते—

निमित्तं च योनिश्च यत्कारणं त-
त्परं ब्रह्म सर्वस्य जन्मादिभाजः ।
इति स्पष्टमाचष्ट एषा श्रुतिर्नः
कथं सिद्धवल्लक्षणं सिद्धिबाह्यम् ॥ ५३२ ॥

निमित्तमिति । एषा यतो वेत्यादिश्रुतिः सर्वस्य कार्यस्य यन्निमित्तं कारणं योनिश्च तद् ब्रह्मेत्यनेन प्रकारेण सिद्धिबाह्यं लोकेऽसिद्धमभिन्ननिमित्तोपादानत्वलक्षणं कथं सिद्धवत्स्पष्टमाचष्टे अनुवदतीति सम्बन्धः । अत्र यद्यपि सदुपादानत्वं प्रसिद्धमेव चेतनस्य सद्रूपस्य निमित्तत्वमपि लोकसिद्धमित्युक्तं तथाप्युभयोरेकप्रमाणविषयत्वाभावात्तत्सिद्ध्याक्षेप इति भावः ॥ ५३२ ॥

ननु माभूल्लोकेऽभिन्ननिमित्तोपादानत्वस्य सिद्धिः श्रुतित एव तत्सिद्धिः किं न स्यादित्याशङ्क्य तस्य यत इति यच्छब्देनानूद्यमानत्वादनुवादस्य च पूर्वसिद्ध्यपेक्षणादथवा वाक्यस्य लक्षण-

प्रमेयत्वेऽखण्डार्थत्वक्षतेस्तदंशेऽनुवाद एव वक्तव्यः । स च पूर्व- प्रसिद्धिं विनानुपपन्न इत्याह—

न खल्वीदृशं कारणं लोकसिद्धं
यतोऽनूद्य तल्लक्षणं तेन लक्ष्यम् ।
व्यवस्थापयन्ती प्रवृत्तैवमेषा
विधत्तेऽनुवक्तीति चैतद्विरुद्धम् ॥ ५३३ ॥

न खल्विति । खलु यतो ईदृशमभिन्ननिमित्तोपादानं लोकसिद्धं मानान्तरसिद्धं न यतश्चैषा श्रुतिस्तल्लक्षणमनूद्यैव लक्ष्यं ब्रह्मैवा- द्वितीयादिरूपेण व्यवस्थापयन्ती प्रवृत्ता तत एतादृशलक्षणस्या- नूद्यमानत्वमेतद्वाक्यप्रमेयत्वं चानुपपन्नमित्यर्थः । ननु श्रुतिरेव माना- न्तराधिगतमप्यर्थं स्वसामर्थ्यसिद्धमनुवदतीति तत्राह— एषेति । विधत्ते अज्ञातं ज्ञापयति । अनुवादविधित्वयोरेकत्र विरोधादिति भावः ॥ ५३३ ॥

अत्रोच्यते जगन्निमित्तोपादानत्वयोः प्रत्येकं तावन्नाप्रसिद्धिः तस्यानुमानसिद्धत्वात् । नचैवमपि विशिष्टाप्रसिद्ध्या तदनुवादा- नुपपत्तिरिति वाच्यम् । मिलिताननुवादेऽपि प्रत्येकप्रसिद्ध्या यज्जग- दधिष्ठातृ यच्च जगदुपादानं तदेकं ब्रह्मेति वाक्यप्रवृत्तावप्यद्वैत- ब्रह्मसिद्धेः । अस्तु वा विशिष्टानुवादस्तथापि नानुपपत्तिः । विमतं जगदभिन्ननिमित्तोपादानं कार्यत्वात्पराभिमतेश्वरात्मसंयोगवदिति तत्सिद्धेः, माभूद्वान्यतः सिद्धिः स्वतः प्रमाणभूतवेदानुवादसामर्थ्यादेव प्रसिद्धिसम्भवादित्यभिप्रेत्य परहरति—

अनुवददिदमेव वाक्यमर्था-
दुपनयतीदृशकारणं प्रसिद्धम् ।

**अनुवदनमशक्यमन्यथा स्या-**

**दवगतगोचरमेव हीदमिष्टम् ॥ ५३४ ॥**

अनुवददिति। इदं वाक्यं यतोवेत्यादिवाक्यमेव। प्रकृत्यर्थविहित-पञ्चमीविभक्तिविशिष्टयच्छब्देनेदृशं कारणमभिन्ननिमित्तोपादानं कारणमनुवददनुवादान्यथानुपपत्त्येदृशं कारणं प्रसिद्धं यथा वदति तथोपनयति। अनुपपत्तिमेवाह—अनुवदनमिति। अन्यथा प्रसिद्ध्यभावेऽनुवदनमशक्यं स्याद्यत इदमनुवदनमवगतगोचरमेवेष्टं तत इत्यर्थः। अनुवादस्य ज्ञातैकगोचरत्वेन पूर्वप्रसिद्धिं विना तदनुपपत्तेरनुवाद एवान्यथानुपपद्यमानोऽधिष्ठात्रुपादानैक्यमाक्षिपति। नचैवं लोकेऽसम्भावितार्थबोधकत्वेनाप्रामाण्यं किन्तु मानान्तरविरुद्धार्थकत्व एव तदन्यथाऽतिप्रसङ्गात्। न च ब्रह्मणो जगन्निमित्तोपादानत्वे मानान्तरविरोधोस्ति। तस्माच्छ्रौतानुवादसामर्थ्यादेवानुवाद्यार्थसिद्धिः। न चान्योऽन्याश्रयः वेदस्यानादित्वादित्यर्थः॥ ५३४॥

उपजीवकप्रतीत्यनुपपत्त्योपजीव्यप्रसिद्धौ दृष्टान्तमाह—

**यथाविशिष्टस्य विधानतोऽर्था-**

**द्विशेषणानां घटते विधानम्।**

**स्थितेऽनुवादेऽपि तथेह योज्य-**

**मनूद्यमानेऽपि जगन्निदाने ॥ ५३५ ॥**

यथेति। यथा सोमेन यजेतेत्यत्र सोमविशिष्टयागविधेरेवार्थाद्विशेषणीभूतसोमस्य विधानं ज्ञापनं घटते तथैवानुवादे स्थिते यत इत्यादेर्यच्छब्दसमभिव्याहारेणानुवादे स्थिते जगन्निदानेनूद्यमाने सत्यनूद्यमानार्थसिद्धिरित्यर्थः। अथवा—विशेषणानामिति। विशेषणसम्बन्धानामित्यर्थः। विशिष्टविधौ हि नियोगो विशिष्टविषयः न त्वविशि-

ष्टयागमात्रविषयः विशेषणविशेष्यवैशिष्ट्यं च न शाब्दं सर्वपदानां नियोगान्वितस्वार्थाभिधायित्वनियमात्ततो विशिष्टविषयनियोगेनैव तद्विषयत्वसिद्धिरित्यर्थः ॥ ५३५ ॥

विषयव्याप्त्यर्थमाह—

अथ वाऽनुवादमुपलभ्य ततोऽ-
नुपपद्यमानवपुषः प्रमितेः ।
अपरं निमित्तमिह कल्प्यमिति
प्रवदन्ति केचिदभियुक्ततराः ॥ ५३६ ॥

अथवेति । अथवा केचिदनुवादमुपलभ्यानुपपद्यमानवपुषः पुरोवादं विनानुपपद्यमानस्वरूपात्ततोनुवादात्प्रमितेः पूर्वप्रमितेरपरं निमित्तं कारणं कल्प्यमिति वदन्तीति सम्बन्धः । अभिन्ननिमित्तोपादानानुवादान्यथानुपपत्त्या जगदभिन्ननिमित्तोपादानमिति किंचिद्वाक्यं कल्पनीयमित्यर्थः ॥ ५३६ ॥

विशिष्टविधावप्येवमेव विशेषणतद्वैशिष्ट्यसिद्धिरित्याह—

अपि विशिष्टविधौ वचनान्तरा-
दनुपपत्तिबलानुमितादिह ।
विधिरशेषविशेषणगोचरो
ननु पुनस्तत एव विधानतः ॥ ५३७ ॥

अपीति । इह विशिष्टविधावप्यनुपपत्तिबलाद्विशिष्टसिद्ध्यनुपपत्तितोऽनुमितात्कल्पिताद्वचनान्तरात्सोमः करणं सोमविशिष्टो याग इत्यादिवचनान्तरादशेषविशेषणगोचरो विधिः करणीभूतसोमादिवि-

शेषणतद्वैशिष्ट्यविषयविधिसिद्धिः । न तु विशिष्टविध्यनुपपत्ते-रित्यर्थः ॥ ५३७ ॥

एवं जन्मादिकारणत्वं तटस्थलक्षणं ब्रह्मण इतरव्यावृत्तिसि-द्ध्यर्थमेव न तु तत्प्रमितये तत्प्रमितिस्तु जगत्कारणानुवादेनाद्वैतं ब्रह्म बोधयता यतो वेत्यादिलक्षणवाक्येन भवतीत्युक्तमेव लक्षण-प्रयोजनं लक्षणवाक्यावगतकार्यलिङ्गादद्वैतसिद्धिर्नेत्युक्तप्रपञ्चनायानु-वदति—

**जन्मादिलक्षणमिदं जगतो यदुक्तं**
**सद्ब्रह्मणस्तदिह चिह्नतयोपदिष्टम् ।**
**नास्मिन्प्रमाणमपरे पुनरेतदेव**
**ब्रह्मप्रमाणमनुमानमुदीरयन्ति ॥ ५३८ ॥**

जन्मादीति । चिह्नतया व्यावर्त्तकतया अनुवादस्य प्रयोजनमाह— अपरे पुनरिति । नैयायिकादयः स्वस्यात्मनो वेदबाह्यतां प्रकटीकुर्वाणा हि यतः शास्त्रं वेदः कार्यलिङ्गोपस्थापनद्वारा ब्रह्म बोधयतीति कार्या-नुमानपरतन्त्रं तदनुमानं तु शास्त्रस्य कथमपि नोपकरणमिति ईक्ष-माणा विचारयन्तः एतदनुमानमेव ब्रह्मणि प्रमाणं न श्रुतिरित्यादि-वदन्तीति सम्बन्धः । न चानुमानात्प्रागेव लक्षणाश्रयलक्ष्यब्रह्म-सिद्धिरिति वाच्यम् । श्रुत्यवगतक्षित्यादिकार्यत्वलिङ्गादेव तत्सिद्धेः । सर्वज्ञत्वादिकं च पक्षधर्मताबलात् सिद्ध्यतीत्यभिमानः ॥ ५३८ ॥

अनुमानखण्डनेन दूषयति—

**कार्यानुमानपरतन्त्रमिदं हि शास्त्रं**
**शास्त्रस्य नोपकरणं तदितीक्षमाणाः ।**

तद्दुर्घटं न खलु कारणमद्वितीयं
चैतन्ययुक्तमिति कार्यवशात्प्रतीमः ॥ ५३९॥

तद्दुर्घटमिति । अनुमानादीश्वरसिद्धिरित्येतद् दुर्घटमनुपपन्नं तत्र हेतुः—न खल्विति । खलु यस्मादनुमानेन कारणमात्रसिद्धावपि तत्कारणमद्वितीयमेकं चैतन्ययुक्तं सर्वज्ञमिति च कार्यवशात्कार्यलिङ्गान्न प्रतीमो न जानीमस्तत इत्यर्थः। तदज्ञाने च बीजं प्रागेव वर्णितं वर्णयिष्यति च ॥ ५३९ ॥

अस्तु वानुमानात्कर्तृकत्वसर्वज्ञत्वादिसिद्धिः । न चैतावता ब्रह्मस्वरूपं निर्धारितं भवति । अभिन्ननिमित्तोपादानस्य सत्यज्ञानानन्दानन्तात्मकस्य यस्मादनन्तानन्दाज्जगज्जन्मादिमत्तद् ब्रह्म यत आत्मनः आकाशादिः समुद्भूतः तत्सत्यं ज्ञानानन्दं ब्रह्मेति प्रतिवाक्यं प्रतिपाद्यस्य ब्रह्मस्वरूपस्यानुमानादसिद्धेः । न चैतादृशब्रह्मणो मानान्तरायोग्यतया तत्र पदानां सम्बन्धग्रहाभावात्तादृग्ब्रह्मश्रुत्या प्रतिपाद्यमेव न भवतीति वाच्यम् । केषां चित्पदानां लोके केषां चिद्वेद एव समभिव्याहारबलाच्छबले व्युत्पत्तिग्रहस्य प्रदर्शितत्वाद्ब्रह्मण औपनिषदत्वप्रतिज्ञानिर्वाहायैतादृग्रूपस्य मानान्तरायोग्यत्वस्य वक्तव्यत्वाच्च न कार्यलिङ्गानुमेयं ब्रह्मेत्याह—

वेदान्तवाक्यमिह येन पथा प्रवृत्तं
लोकप्रसिद्धपदशक्तिमुपाददानम् ।
विश्वोद्भवस्थितिलयप्रकृतौ निमित्ते
सच्चित्सुखात्मनि परात्मनि नैवमन्यत् ॥५४०॥

वेदान्तवाक्यमिति । इह लोके प्रसिद्धपदशक्तिमुपाददानं वेदान्तवाक्यं

येन पथा प्रवृत्तं येन रूपेण ब्रह्म बोधयति । नैवमन्यदनुमानादिकं बोधयतीति सम्बन्धः । येन पथेत्येतदेवविशदयन्निह शब्दार्थमाह— विश्वोद्भवस्थितिलयप्रकृतौ निमित्त इत्यादिना ॥ ५४० ॥

नन्वनन्यथासिद्धव्याप्तिपक्षधर्मताविशिष्टानुमानानुरोधेनान्यथासिद्धश्रुत्यर्थनयनं किं न स्यादतोऽनुमानाप्रसिद्धरूपान्तराभावान्न श्रौतत्वमात्मन इत्याशङ्क्याह—

भङ्क्त्वा कथंचिदनुमानवशेन सिद्धे
सर्वेश्वरे कणभुगादिभिरुच्यमाने ।
वेदान्तवाक्यमपि योज्यमतोऽनुमाने
सापेक्षतोपनिषदां यदि साहसं तत् ॥ ५४१ ॥

भङ्क्त्वेति । अतोऽनुमानात्सिद्धेऽष्टगुणके कणभुगादिसंमते सर्वेश्वरत्वेनाभिमते नरविशेषे कस्मिंश्चिद्भङ्क्त्वोपचारेण दुःखाभावप्राधान्यादिविवक्षया वेदान्तगताद्वितीयानन्दादिवचनं योज्यमिति यतोऽत उपनिषदां यतो वेत्यादिवाक्यानां ब्रह्मप्रतिपादने ऽनुमाने विषये सापेक्षता उपनिषत्प्रतिपाद्यकार्यलिङ्गादेवेश्वरसिद्धिरिति यत्तद्वचनमतिसाहसमित्यर्थः । अत्रेदमभिधीयते । कार्यलिङ्गानुमानं हि जगत्कारणमात्रं साधयति । सर्वज्ञत्वैकत्वविशिष्टकारणसाधनेपि न श्रुतेरनवच्छिन्नानन्त्यं प्रतिपादयन्त्यास्तेन विरोधोऽस्ति येनोपचारवृत्तिः स्यात् । न चानुमानसिद्धे विषये तदविषयधर्मबोधकं वाक्यं तेन विरुद्ध्यते । अनवगतविशेषव्याप्तिकेन धूममात्रेणानुमिते वह्निमात्रे खादिरत्वादिविशेषबोधकवाक्यस्यापि बाधप्रसङ्गात्तस्मादनुमानविरोधाभावान्न श्रुतेरुपचारो युक्तः । ननु माभूच्छ्रुतेरनुमानविरोधेनोपचारः । श्रुतितो भवदभिमतप्रतीतिरेव नास्तीति चेत्किं

साङ्गाध्ययनविरहिणां तन्नास्तीत्युच्यते । उत साङ्गाध्ययनवतामपि । आद्ये का नः क्षतिः न हि प्रतीतिसामग्रीविरहदशायां तदभावेन प्रमेयाभावो निश्चेतुं शक्यते अतिप्रसङ्गात् । न द्वितीयः । अक्षपादशिरः स्पृष्ट्वा शपथेनापि दुष्करः वेदेनाद्वैतसद्ब्रह्मप्रत्ययापह्नवो यतः तस्माद्वेदस्य अनुमानसापेक्षतया ततोऽद्वितीयब्रह्मसिद्धिर्नास्तीत्येतदतिसाहसमिति ॥ ५४१ ॥

ननु माभून्न्यायविरोधः अक्षपादादिवचनविरोधादेव श्रुतेरुपचारः कल्प्यतामित्याशङ्क्य बलवद्बाधकं विनापि पौरुषेयवाक्येन स्वकपोलकल्पितेनापौरुषेयवेदस्योपक्रमादितात्पर्यग्राहकलिङ्गोपेतस्य मुख्यार्थं परित्यजतोऽस्याततायिनः किं दुष्करमित्याह—

निष्कारणं श्रुतिशिरोवचनस्य भङ्गं
ये वर्णयन्ति सहसा स्वमनोरथेन ।
दीप्तस्य दावदहनस्य न ते किमर्थं
ज्वालां पिबन्ति कथनीयमिदं बहुज्ञैः ॥ ५४२ ॥

निष्कारणमिति । तस्माद्यथावदनुमानेन गम्यमेव ब्रह्मेतिविद्वन्मानिनामभिमानमात्रमिति सिद्धमिति ॥ ५४२ ॥

एवं ब्रह्मणः शास्त्रैकगम्यत्वप्रतिपादनेन यथाशास्त्रमभिन्ननिमित्तोपादानं सत्यज्ञानानन्दं ब्रह्मेति सिद्धं तत्र शङ्कते—

ननु सच्चिदादिवपुषो जगतः
प्रकृतित्वबोधनमकारणकम् ।
परमात्मनो न हि पदार्थयुजा
रहितेह संभवति योग्यतया ॥ ५४३ ॥

ननु सच्चिदादीति । सच्चिदादिवपुषः सत्यज्ञानाद्यात्मकस्याकारणकमप्रमाणकमुपादानस्य सत्यज्ञानाद्यात्मता न सिद्ध्यतीत्यर्थः । ननु नः सत्यज्ञानादिश्रुतिरेव प्रमाणं न हि वाक्यं योग्यतां विना स्वार्थं बोधयति न च सत्यज्ञानाद्यात्मकस्य जगत्प्रकृतित्वयोग्यता नास्तीत्याह—परमात्मन इति । इह जगत्कारणवाक्ये योग्यतया रहिता योग्यप्रतियोगिकापदार्थयुजा जगत्प्रकृतिपदस्य योऽर्थः तेन सम्बन्धः परमात्मनो न भवतीति सम्बन्धः । तथा च परमात्मनोऽनुमानगोचररूपान्तराभावात् न तस्य श्रुत्यैकगम्यत्वमिति जगत्कारणवाक्ये सूत्रे चानुमानमेव मानत्वेनोपन्यस्यत इति भावः ॥ ५४३ ॥

ननु किमित्ययोग्यत्वं वाक्यार्थबाधो ह्ययोग्यता न चात्र बाधोऽस्ति तत्राह—

> उपादानता सच्चिदानन्दमूर्ते-
>
> र्विरुद्धा जडेष्वेव सा दृश्यते हि ।
>
> विरुद्धैः पदार्थैर्न वाक्यार्थसिद्धि-
>
> र्न खल्वग्निनोच्चेदितीहान्वयोऽस्ति ॥ ५४४ ॥

उपादानतेति । विमतं ब्रह्मोपादानं न भवत्यजडत्वात् व्यतिरेकेण घटवदित्यनुमानेन ब्रह्मण उपादानता विरुद्धा बाधिता । न चासिद्धो हेतुरित्याह—सच्चिदानन्दमूर्तेरिति । नचाप्रयोजक इत्याह—जडेष्वेवेति । सा उपादानता हि यतो जडेष्वेव दृश्यते तत इति सम्बन्धः । मृदादेरचेतनस्यैव तद्दर्शनादित्यर्थः । आत्मन्युपादानत्वबाधप्रतिपादनफलमाह—विरुद्धैरिति । उक्षेत्सिञ्चेदिह लोकेऽतो लोकानुरोधेन वेदेपि योग्यता स्वीकर्त्तव्येति भावः ॥ ५४४ ॥

तत्र किं द्रव्योपादानस्य चेतनत्वमनुपपन्नमिति ब्रूषे । उतोपा-

दानमात्रस्य । आद्येपि किमिति तदनुपपन्नमदर्शनादिति चेत्तर्हि त्वन्मतेऽपि परमाणव उपादानानि। ननु प्रत्यक्षतो दर्शनेऽप्यनुमानेन तद् दृश्यत इति चेत्किं श्रुतयो न प्रमाणं ततो नूनमनेन सुगतशिष्येण भाव्यं भवतु को दोष इति चेत्किं शब्दमात्रं न प्रमाणम् । उत वेदात्मकः शब्दः । नाद्यः । शब्दमात्रस्याप्रमाणत्वे तव वादानारम्भप्रसङ्गात्परप्रयुक्तशब्दात्परस्यार्थप्रतीत्यनुपपत्तेः । न द्वितीयः । अविशेषात् । ननु नाहं सुगतः किन्त्वनुमानबाधितत्वेन प्रकृतश्रुतेरप्रामाण्यं वदामीति चेत्किं परमाणवो न द्रव्योपादानं निरवयत्वाद्गगनवदित्यनुमानं न पश्यसीति । ननु पश्याम्यहमनुमानं धर्मिग्राहकेणानुमानेन बाधितत्वादिति चेत्तर्हि श्रुतिविरोधेनात्मनोनुपादानत्वानुमानमपि न पश्यतु भवान् ब्रह्मणोपि श्रुतिग्राह्यतया तस्या धर्मिग्राहकमानत्वादेतेन धर्मिग्राहकमानसिद्धं परमाणूनामुपादानत्वमित्ययं विशेषोऽपि प्रत्युक्तः । निखिलश्रुतीनामुपादानब्रह्मप्रतिपादकत्वात् । न च स्वरूपमात्रप्रतिपादकवाक्यादपि ब्रह्मसिद्धेर्न धार्मिकग्राहकमानसिद्धमुपादानत्वमिति वाच्यम् । परमाणुकारणताया अपि धर्मिग्राहकसिद्ध्यभावादणुत्वं निरवयवातीन्द्रियद्रव्याश्रितवृत्तिपरिमाणवृत्त्यतीन्द्रियजातित्वात्परममहत्ववदित्यतोपि तत्सिद्धेः । न च कालवृत्तिवृत्तित्वेनार्थान्तरता कालस्य परममहत्परिमाणाश्रयत्वज्ञानदशायामेवानुमानस्योदयेन बाधितत्वात्तस्माज्जडानामेवोपादानत्वदर्शनमकिञ्चित्करमित्यनुमानमबाधकमेव । ननु स्पर्शवत एव द्रव्यारम्भकत्वं नियतमिति चेन्न । शुक्तिरजताद्यनुभववदारम्भकत्वस्पर्शवत्त्वनियमग्राहकानुभवेपि तत्सम्भवात् । नन्वत्र बाधकाभावादनन्यथासिद्धत्वमिति चेन्न। अद्वैते उपक्रमाद्यनुगृहीतश्रुतेरेव बाधकत्वात् । किं स्पर्शविशिष्टमारम्भकमुत तदुपलक्षितम् । नाद्यः । स्पर्शस्यापि द्रव्यारम्भकत्वप्रसङ्गात् । नान्त्यः अतिप्रसङ्गात् । ननु स्पर्शो द्रव्यारम्भकवृत्तीति चेत्किमेतावता द्रव्यारम्भकपृथिव्यादिवृत्तित्वेन सिद्धसाधनत्वात् ।

ननु द्रव्यारम्भकत्वं स्पर्शवत्त्वव्याप्यमिति चेन्न। श्रुतिविरोधेन व्याप्तेरभावात्। ननु चेतनात्मप्रकृतिकत्वे घटादेरपि चेतनत्वप्रसङ्गः। कार्यस्योपादानकारणसमानधर्मत्वनियमादिति चेन्न। तन्त्वादिजन्यपटादौ रूपादौ च तन्तुत्वादेरभावात्। किं च न केवलात्मन उपादानत्वं ब्रूमः किन्त्वविद्याशबलितस्यैव तदुक्तं "तमःप्रधानक्षेत्राणां चित्प्राधान्यश्चिदात्मनाम्। परः कारणतामेति भावनाज्ञानकर्मभि"रिति घटादौ सन् जडो घटः स्फुरतीति चैतन्याविद्योभयात्मना प्रतीतेर्न कारणसजातीयत्वनियमभङ्गः। अस्तु वा अन्यत्र यथा तथा विवर्त्तवादे तु न कश्चिदप्युक्तो दोष इत्यभिप्रेत्य चैतन्योपादानत्वं सोदाहरणमाह—

**उपादानता चेतनस्यापि दृष्टा**
**यथा स्वप्नसर्गे विचित्रे प्रतीचः।**
**यथा चोर्णनाभस्य सूत्रेषु पुसां**
**यथा केशलोमादिसृष्टौ च दृष्टा॥ ५४५॥**

उपादानतेति। दर्शनमेवास्मद्रीत्याह—यथेति। स्वप्नसर्गस्य कारणान्तरानिरूपणादात्मैव तदाकारेण विवर्त्तत इत्यर्थः। लोकप्रसिद्ध्या श्रौतमुदाहरणद्वयमाह—यथा चेति। उर्णनाभिर्लूताख्यजन्तुविशेषः केशः शिरोरुहं रोमहृदयादिदेशरुहम्। ननु उर्णनाभिपुरुषशरीरजन्यत्वमेव तन्तुकेशयोर्न त्वात्मजन्यत्वमिति चेन्न। कुणपशरीरे तददर्शनाज्जीवशरीरे तद्दर्शनाच्च चेतनस्यापि कारणत्वात्। नन्वेवमपि निमित्तमेव चेतनो न तूपादानमिति चेन्न। छिन्नकेशादौ वृद्ध्यदर्शनेन स्थितिहेतुतद्विशिष्टशरीरस्योपादानत्वेन तस्याप्युपादानत्वादिति भावः॥५४५॥

कार्यमात्रे नात्मोपादानमिति द्वितीयपक्षं तदभ्युपगमेनैव दूषयति—

बुद्ध्यादिकार्येष्वपि चेतनोऽयं
भवेदुपादानमितीष्यते च ।
आत्मा गुणी ते च गुणाः प्रसिद्धा
गुणी गुणानां प्रकृतिश्च सिद्धा ॥ ५४६ ॥

बुद्ध्यादिकार्येष्वपीति । चेतनो बुद्धिसुखदुखेच्छाद्वेषादिकार्येषूपादानं भवेज्जन्यानां तेषामाश्रयत्वात्संमतवद्भवदभ्युपगमोपि तथैवेत्याह— इष्यत चेति । अनुमानेऽनुकूलं तर्कमाह—आत्मा गुणीति । चो हेतौ यतो बुद्ध्यादयः सामान्यवत्त्वे सति स्पन्दासमानाधिकरणकार्यजातीयत्वेन गुणाः आत्मा च गुणी तदाश्रयस्तदाश्रयस्यान्यस्याभावात्तत इत्यर्थः । ननु प्रकृतित्वाभावेप्याप्यपरमाणुतद्गतगुणवद्गुणिगुणभावः किं न स्यात्तत्राह—गुणी गुणानां प्रकृतिः प्रसिद्धेति । जन्यगुणानां यो गुणी समवायवान् स तेषां प्रकृतिरूपादिगुणिघटादौ प्रसिद्धेति बुद्ध्याद्याश्रयोप्यात्मा तथैव स्यादन्यथा निमित्तस्यापि तदाश्रयत्वापत्तेरित्यर्थः ॥ ५४६ ॥

तस्मादात्मनो गुणादाविवान्यत्राप्युपादानत्वसम्भवादाकाङ्क्षायोग्यतादिसत्त्वाच्छ्रुत्यैव ब्रह्मण उपादानत्वमभिन्ननिमित्तोपादानत्वं वा सिद्ध्यतीत्युपसंहरति—

आकाङ्क्षादिर्विद्यते योग्यतान्ता
यस्मादस्मिन्नागमाज्जायमाने ।
सामग्री या वैदिकैरस्य दृष्टा
तस्माद्युक्ता योनिता चेतनस्य ॥ ५४७ ॥

आकाङ्क्षादिरिति । अस्यागमस्य स्वार्थबोधने या सामग्री वैदिकै-

दृष्टा सा यस्मादस्मिन्नागमे सत्यं ज्ञानमनन्तं ब्रह्म यतो वेत्यादिवाक्ये विद्यते तस्मादस्य ब्रह्मणो योनिता युक्तेति सम्बन्धः । सामग्रीमेवाह—आकाङ्क्षादिरिति । आदिपदेनासत्तिर्गृह्यते । ननु तर्हि चेतनोपादानत्वस्यापि बुद्ध्यादिदृष्टान्तेनानुमानेन साधयितुं शक्यत्वात्किमागमनेति चेत्सत्यम् । यद्यपि चेतनोपादानत्वमात्रमनुमानात्सिद्ध्यति । तथापि तस्यानवच्छिन्नानन्दब्रह्मताप्रमित्यर्थमागमस्यैवानुसर्त्तव्यत्वाद् द्रव्यादौ विपरीतव्याप्त्या वैपरीत्यानुमानस्यापि सम्भवाच्च नानुमानमात्रात्तत्सिद्धिरत एव यच्छब्देन चेतनमुपादानमनूद्याद्वितीयं ब्रह्म प्रतिपाद्यत इति तत्त्वविद आहुः ॥ ५४७ ॥

तस्मान्नैतल्लक्षणमनुमानविधया ब्रह्मणि प्रमाणं किन्तु श्रुतिप्रमितस्य व्यावर्त्तकमात्रमित्युपसंहरति—

> तस्मादेतल्लक्षणं चिह्नमाहु-
> र्नैतत्तस्मिन् ब्रह्मणि स्यात्प्रमाणम् ।
> आम्नायस्य स्वप्रधानत्वहेतो
> र्लिङ्गस्यास्मिञ्छेषभावाच्च नित्यम् ॥ ५४८ ॥

तस्मादेतदिति । ब्रह्मणोऽनुमानागम्यत्वं तच्छब्दार्थः । ननु ज्ञानानन्दाद्यभेदबोधनमपि प्रत्यक्षविरुद्धं तद्भेदस्यैवानुभवात् । न चानित्ययोस्तयोर्भेदानुभवेपि न नित्ययोस्तयोर्भेदोनुभूयते । नित्यता च तयोरुपरिष्टात्सेत्स्यतीति वाच्यम् । तत्रापि भेदस्यानुमातुं शक्यत्वादिति तत्राह—आम्नायस्येति । अनुमानस्य स्वतःप्रमाणागमविरोधे दुर्बलत्वादानन्दस्य ज्ञानभेदे दृश्यतयानानन्दत्वप्रसङ्ग इत्यदियुक्तयोपोद्बलितविज्ञानमानन्दं ब्रह्मेत्यादि श्रुत्या तदभेदबोधने न कोपि विरोध इति भावः । अथवा—न यते वेत्यादिवाक्यं कार्यलिङ्गप्रतिपादनेनान्यथासिद्धं भवति । कार्यलिङ्गस्याभिहिते ब्रह्मण्यमानतया धर्मिमात्रोपदर्शक-

तया च तर्कत्वाच्छ्रुतेः स्वतःसिद्धसामर्थ्यायास्तदनुग्राह्यप्रमाणत्वात् प्रमाणस्य च स्वोपकरणप्रतिपादकेनान्यथासिद्ध्ययोगाच्च । तेनैवाद्वितीयब्रह्मसिद्धिरित्याह—आम्नायस्येति ॥ ५४८ ॥

तस्माद्विवर्तमानाविद्याधिष्ठानतया जगदीक्षितृतया च जगन्निमित्तोपादानं सत्यज्ञानानन्दात्मकं ब्रह्म जगत्कारणवाक्यप्रमेयमिति प्रकृतं जगत्कारणवाक्यस्य ब्रह्मणि समन्वयप्रतिपादनमुपसंहरति—

इत्थं जगत्कारणवादिवाक्यं
समन्वितं ब्रह्मणि तत्पदार्थे ।
तल्लक्षणं तस्य तटस्थभूत-
मानन्त्यसिद्ध्यै कथयद्यथोक्तम् ॥ ५४९ ॥

इत्थमिति । जगत्कारणवादि यतो वेत्यादिवाक्यं तस्य ब्रह्मण आनन्त्यसिद्ध्यै यथोक्तं तटस्थभूतं तल्लक्षणं कथयत्तत्पदार्थे ब्रह्मणीत्थं समन्वितमिति सम्बन्धः । तटस्थलक्षणानुवादेन व्याख्यातरूपं ब्रह्म प्रतिपादयतीत्यर्थः ॥ ५४९ ॥

ननु ब्रह्मैवोपादानं निमित्तमिति चोक्तमनुपपन्नं तदतिरिक्तनिमित्ताभावे जगद्वैचित्र्यानुपपत्तेः । अन्यथा ब्रह्मणो वैषम्यनैर्घृण्यापत्तेरित्याशङ्क्याधिष्ठात्रुपादानयोरेवैक्यं तदैक्षत बहुस्यां प्रजायेय सच्च त्यच्चाभवत् तदात्मानं स्वयमकुरुतेत्यादिश्रुतिबलादङ्गीक्रियते न तु निमित्तान्तराभेदोपि कल्पितभेदवतोऽदृष्टादेर्निमित्तस्य रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमित्यादिश्रुतिसिद्धस्य सत्वादित्यभिप्रेत्याह—

स्वात्मानमेव जगतः प्रकृतिं यदेकं
सर्गे विवर्तयति तत्र निमित्तभूतम् ।

कर्माऽऽकालय्य रमणीयकपूयमिश्रं
पश्यन्नृणां परिवृढं तदितीर्यमाणम् ॥ ५५० ॥

स्वात्मानमेवेति । स्वात्मानं विवर्त्तयतीत्यनेनाधिष्ठातृत्वमपि दर्शयति कर्माकलय्येत्यादिपदद्वयं रमणीयेत्यादिना पश्यदित्यन्तेन च विवृणोति । रमणीयमुत्कटपुण्यं कपूयमुत्कटपापं मिश्रं तुल्यं तदुभयं परिवृढमनवच्छिन्नं ब्रह्म तदितीर्यमाणं श्रुत्या तदित्युच्यमानं तत्पदेनेर्यमाणमित्यर्थः । यत्तत्पदलक्ष्यं नित्यशुद्धबुद्धमुक्तस्वभावं तदेव प्राणिनां पुण्यापुण्यसचिवं स्वाध्यस्तानाद्यनिर्वचनीयाविद्यया स्वात्मानं विश्वाकारेण विवर्त्तयतीत्यर्थः ॥ ५५० ॥

ननु समन्वयविचारस्य समन्वयसूत्रमारभ्यैव प्रवृत्तत्वात् किं जन्मादिसूत्रेणापि तन्निरूपेण शास्त्रयोनित्वप्रतिज्ञानन्तरमेव तद्विचारस्योचितत्वाच्च अतोऽवश्यं जन्मादिसूत्रमनुमाननिरूपणायैवेत्याशङ्क्याह —

पदवृत्तिसमन्वयावुभौ
प्रतिपाद्यौ प्रथमे हि लक्षणे ।
तदवान्तरवाक्यवर्त्मना
पदवृत्तिः प्रथमं प्रकीर्तिता ॥ ५५१ ॥

पदवृत्तीति । महावाक्यावयवतत्त्वंपदयोर्वृत्तिः अर्थविशेषाभिधानसामर्थ्यं समन्वय तत्त्वमादिवाक्यस्यार्थविशेषे तात्पर्यं यतो लक्षणे अध्याये तत्तस्मात्समन्वयाध्याये हि वाक्यसमन्वयः पदवृत्तिश्चेत्युभयमपि प्रतिपाद्यं पदार्थज्ञानस्यापि वाक्यार्थधीहेतुत्वात्स च समन्वयः समन्वयसूत्रमारभ्य प्रतिपाद्यते । पदवृत्तिश्चानेन सूत्रेणावान्तरवाक्यार्थपर्यालोचनया प्रतिपाद्यत इति न व्यर्थमतो

नानुमानोपन्यासमात्रं क्रियत इति भावः। ननु पदवृत्तिनिरूपणं चतुर्थपाद एव कृतं किमत्र तन्निरूपणेनेति चेत्सत्यमवान्तरसङ्गत्या-त्रापि तन्निरूपणमुचितमेवात एव समन्वयादस्य पूर्वभावित्वमपि सूत्रे विवक्षितमिति भावः ॥ ५५१ ॥

ननु किमिति तर्हि न त्वंपदवृत्तिर्निरूपिता निरूपितैव प्रथमसूत्र इत्याह—

आद्ये सूत्रे त्वंपदस्योदितत्वा-
द्वृत्तेरस्मिँस्तत्पदस्योच्यमाना।
वृत्तिर्ज्ञेया तत्पदार्थेऽद्वितीये
प्रत्यङ्मात्रे त्वंपदस्योदितैव ॥ ५५२ ॥

आद्ये सूत्र इति। अथातो ब्रह्मजिज्ञासेतिसूत्रे कस्य पदस्य कस्मिन्नर्थे वृत्तिर्निरूपितेति तत्राह—अस्मिन्नित्यादिना। अस्मिन् जन्मादिसूत्रे तत्पदस्योच्यमाना वृत्तिरद्वितीये तत्पदार्थे ब्रह्मणि ज्ञेयत्वंपदस्य प्रथमसूत्रोदिता वृत्तिः प्रत्यङ्मात्रे देहेन्द्रियादिसाक्षिणि चैतन्यमात्रे ज्ञेयेत्यर्थः ॥ ५५२ ॥

ननु प्रथमसूत्रे ब्रह्मविचारकर्त्तव्यता तदपेक्षिताधिकारिनिरूपणं च क्रियते न तु प्रत्यङ्मात्रे त्वंपदस्य वृत्तिर्निरूप्यते। न चाधिकारिनिरूपणेनैव तन्निरूपणमपि कृतमिति वाच्यम्। प्रत्यङ्मात्रस्य साधनचतुष्टयसम्पत्तेरभावेनानधिकारित्वादित्याशङ्क्याह—

अनधिकारिणि शुद्धचिदात्मके
दृगदृशोरितरेतरविभ्रमात्।

**शमदमादिसमन्विततेष्यते**

**भवति तेन चितोऽप्यधिकारिता ॥ ५५३ ॥**

अनधिकारिणीति । वस्तुतोधिकारायोग्य इत्यर्थः । तत्र हेतुः शुद्धचिदात्मक इति । कर्तृत्वभोक्तृत्वादिरहितचिन्मात्रस्वरूप इत्यर्थः । एवंभूतस्य कथमधिकारस्तत्राह—दृगदृशोरिति । अहंकारात्मनोस्तादात्म्याध्यासादहंकारद्वारा चैतन्यस्याधिकारः । तदुक्तं भगवता 'प्राक् च तथाभूतात्मज्ञानात्प्रवर्त्तमानं शास्त्रमविद्यावद्विषयं नातिक्रामति'इति । साधनचतुष्टयसम्पत्तेरप्यहंकारोपहिते संभवात्तस्याधिकारः । शमादेश्चित्तधर्म्मत्वादित्यभिप्रेत्याह—शमदमादिसमन्विततेति । दृगदृशोरितरेतरविभ्रमाच्छुद्धचिदात्मकेऽनधिकारिण्यपि शमादिसमन्विततेष्यते तेन चितोऽप्यधिकारितेति सम्बन्धः । शमादीत्यादिपदेन विवेकादयो गृह्यन्ते । यद्यपि प्रत्यगात्मा स्वतोऽनधिकारी तद्धेतुशमदमादेः तत्राभावात्तथाप्यहंकाराद्यनात्मतादात्म्याध्यासान्नित्याद्यनुष्ठानद्वारा शुद्धिविवेकवैराग्यशान्त्याद्युपपत्तेर्भवत्येवाधिकारी । तथा च प्रथमसूत्रेऽधिकारनिरूपणव्याजेन त्वंपदवृत्तिः प्रत्यङ्मात्रे निरूपितेति भावः ॥ ५५३ ॥

ननु प्रत्यगात्मनः स्वत एव शान्त्यादिसम्पन्याऽधिकारितास्तु तस्यैव मुक्तिभाक्त्वात्किमहंकारतादात्म्याध्यासेनेत्याशङ्क्य स्वतो नित्यशुद्धब्रह्मात्मत्वात्तस्य नानात्माध्यासं विना तत्संभव इत्यभिप्रेत्याह—

**अनधिकारितया दृगवस्थिता**

**स्वरसतः परमेश्वरविग्रहा ।**

**घनतमः पटलावरणान्वया-**

**दुपगता श्रवणाद्यधिकारिताम् ॥ ५५४ ॥**

अनधिकारितयेति । अनधिकारित्वे हेतुः—परमेश्वरविग्रहेति । परमेश्वरा-भिन्नत्वादित्यर्थः ॥ ५५४ ॥

नन्वेवं सत्यज्ञानविशिष्टस्यैवाधिकार इत्यागतं तथा च कथ-मधिकारनिरूपणेन प्रत्यङ्मात्रे त्वंपदवृत्तिनिरूपितेति तत्राह—

अज्ञानतज्जघटना चिदधिक्रियायां
द्वारं परं भवति नाधिकृतत्वमस्याः ।
नाचेतनस्य घटतेऽधिकृतिः कदाचि-
त्कर्तृत्वशक्तिविरहादिति वक्ष्यते हि ॥ ५५५ ॥

अज्ञानतज्जघटनेति । अज्ञानं तज्जन्योऽहंकारादिस्तदुभयघटना तादा-त्म्याध्यासः चिदधिक्रियायां चितो ब्रह्मविद्याधिकारे परे केवलमस्या-ऽज्ञानतज्जघटनायाः अज्ञानसम्बन्धो हि केवलं प्रत्यगात्मनोऽधिकारे द्वारं भवति न तु तदधिकारितायां प्रविशतीत्यर्थः । तत्र हेतुमाह — न चेतनस्येति । अधिकृतिर्ब्रह्मविद्याधिकृतिर्मुक्तिभाज एव ब्रह्मविद्या-धिकाराच्चेतनस्यैव मुक्तिभाक्त्वादित्यर्थः । कर्मण्यप्यन्तः करणं द्वार-मात्रं चेतन एव तत्रापि कर्त्तेत्यभिप्रेत्याह—कर्तृत्वशक्तिविरहादिति—स्वत-न्त्रस्य हि कर्तृत्वं स्वतन्त्रः कर्तेति स्मरणात् । न चाज्ञानादेस्तद्विशिष्टस्य वा स्वातन्त्र्यमस्ति । तस्याध्यस्तत्वात् । न च कर्तृत्वशक्त्यभावे कर्तृत्वं न वाधिकारः । शक्तस्यैव कर्तृत्वात्कर्त्तुरेव फलस्वामित्वेनाधि-कारित्वादधिकारिण एव नियोज्यत्वाच्च । तदुक्तं यः शक्तः स कर्त्ता यः कर्त्ता स कर्मण्यधिकृतः स्वामी योधिकृतः स नियोगं स्वकीय-तया बुध्यमानो नियोज्य इति सूत्रकारोपि तथैवाहस्मेत्याह—वक्ष्यतीति । अनेन प्रकारेण तृतीयाध्याय इत्यर्थः । ततश्च प्रथमसूत्रे त्वंपदवृत्ति-निरूपणमुचितमिति भावः ॥ ५५५ ॥

ननु प्रसिद्धानुवादेनाप्रसिद्धं बोधनीयमिति न्यायेन प्रसिद्ध-जगत्कारणानुवादेनाप्रसिद्धब्रह्मजिज्ञासातदधिकारौ निरूपणीयौ किमिदमुच्यते प्रथमसूत्रे ब्रह्मजिज्ञासाधिकार्युपन्यासमुखेन त्वंपदवृत्तिर्निरूपितेत्याशङ्क्य सत्यमेवमस्ति नियमस्तथापि "भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्म"त्युपसत्तिद्वारा अधिकारिनिरूपणानन्तरमेव यतो वेत्यादिवाक्यप्रवृत्तिरिति श्रौतक्रममभिप्रेत्य ब्रह्मजिज्ञासाप्रतिज्ञानन्तरमेव जिज्ञास्यब्रह्मलक्षणाकाङ्क्षायां जन्मादिसूत्रप्रणयनोपपत्तिश्चेत्यभिप्रेत्य भगवता सूत्रकारेण त्वंपदवृत्तिरादौ निरूपितेत्यभिप्रेत्याह—

**उपसत्तिवाक्यमधिकारिणि य-**
**त्कथितं समन्विततया प्रथमम् ।**
**इदमेव चेतसि निधाय तु त-**
**न्मुनिना प्रकीर्तितमुदारधिया ॥ ५५६ ॥**

उपसत्तीति । प्रथममधिकारिणि समन्वितत याधिकारिविषयतय यदुपसत्तिवाक्यं कथितमधीतमिदमेव प्राथम्यं मनसि कृत्वा तन्मूलं ब्रह्मजिज्ञासासूत्रमुदारधिया मुनिना प्रकीर्त्तितमिति सम्बन्धः ॥ ५५६ ॥

नन्वेवमपि सूत्रकारस्य प्रत्यङ्मात्रे त्वंपदवृत्तिनिरूपणं किं मूलं सूत्रस्य मूलप्रमाणसापेक्षत्वादित्याशङ्क्य कथितोपसत्तिवाक्यमेव तन्मूलमित्याह—

**शिष्योपसत्तिवचनानि समन्वितानि**
**शिष्ये चिदात्मनि परात्मनि नित्यमुक्ते ।**
**इत्येतदत्र कथितं मुनिना त्वमर्थे**
**त्वंशब्दवृत्तिकथनाय परे प्रतीचि ॥५५७॥**

शिष्योपसत्तिवचनानीति । शिष्ये शिष्यरूपेण वर्त्तमाने देहादिव्यावृत्यर्थं प्रपञ्चं विशिनष्टि—चिदात्मनीति । विज्ञानमयो विज्ञानाश्रिततया भवति चिदात्मा तत्राह—परेति । अविद्यातत्कार्यादन्य इत्यर्थः । पराभिमतात्मतत्त्वव्यावर्त्तनार्थमाह—नित्यमुक्त इति । प्रथमसूत्रे त्वमर्थे त्वंपदलक्ष्ये शिष्योपसत्तिवचनानि समन्वितानीत्येतत्त्वंशब्दवृत्तिकथनायात्र कथितमिति सम्बन्धः । त्वमर्थस्य विशेषणमन्यदुपसत्तिवचनानि हि ब्रह्मोपदेशायाधिकारिणं दर्शयन्ति प्रत्यङ्मात्रे त्वंपदवृत्तिरिति सूत्रकृता निरूपितमितिभावः ॥ ५५७ ॥

एवमुपपादितं पदवृत्तिविभागमुपसंहरति—

उपसदनवचोविचारमार्गा-
त्त्वमितिपदस्य परात्मनीह वृत्तिम् ।
कथयति भगवान्द्वितीयसूत्रे
तदितिपदस्य परात्मनीति भेदः ॥ ५५८ ॥

उपसदनवचोविचारमार्गादिति । उपसत्तिविषयवाक्यार्थविचारद्वारेणेत्यर्थः । इह प्रथमसूत्रे द्वितीये जन्माद्यस्य यत इति सूत्रे प्रकृतविचारोपयुक्ततया सूत्रकारं पूजयति—भगवानिति । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इतिस्मृतिप्रतिपन्नषड्गुणैश्वर्यसंपन्न इत्यर्थः । द्वितीयसूत्रे तत्पदस्य वृत्तिर्यतोवेत्यादिवाक्यद्वारेण परमात्मन्यद्वितीयब्रह्मणि कथयतीति भेद इति सम्बन्धः ॥ ५५८ ॥

एवं जन्मादिसूत्रस्य श्रुतिसूचकत्वेन ब्रह्मलक्षणपरत्वमुक्तं संप्रति वाक्यार्थनिर्णयोपयुक्ता युक्तिरप्यनेन सूच्यत इत्याह—

आवृत्त्या वा तन्त्रवृत्त्याऽथवेदं
सूत्रं युक्तिं वेदवाक्योपयुक्ताम्।
अप्याचष्टे बृंहणामन्तरेण
स्वार्थे युक्तिं वेदवाक्यं न पुष्टम्॥ ५५६॥

आवृत्या वेति। ननु सकृदुच्चारितवाक्यस्यैक एवार्थः तत्कथमेकदा प्रयुक्तमेकं सूत्रं श्रुतिं युक्तिं च सूचयेत्तत्राह—आवृत्त्या वेति। आवृत्तिः पुनः पुनरुच्चारणमेवं सति वाक्यभेदः स्यादित्यरुचेराह—तन्त्रवृत्येति। अथवा—तन्त्रवृत्येति सम्बन्धः। अनेकार्थविवक्षया सकृदुच्चारणं तन्त्र मित्यर्थः। अनेकार्थवत्वे च हेतुः सूत्रमिति। सूत्रं हि बह्वर्थसूचकं तस्य विश्वतोमुखत्वात्तदुक्तम् "अल्पाक्षरमसंदिग्धं सारवद्विश्वतो- मुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु"रिति। ननु सूत्रस्य युक्ति- सूचकत्वेऽनुमानसूचकत्वं कथं तस्य निराकारि तत्राह-वेदवाक्योपयुक्तामिति। या वेदार्थनिर्णयोपयुक्ता युक्तिस्तामेव सूचयति। ततः स्वतन्त्रयुक्ति- सूचनमेव पूर्वं निराकृतमिति भावः। अपि शब्दादुदाहृता श्रुतिः समुच्चीयते। ननु धर्मजिज्ञासायामिव ब्रह्मविचारेऽपि शाब्दन्यायैः श्रुत्यादिभिरेवार्थनिर्णयोपपत्तेः किं युक्त्या तत्राह—बृंहणामित्यादिना। वेदवाक्यं स्वार्थे बृंहणीमपोद्बलितां युक्तिमन्तरेण न पुष्टं न फलाय पर्याप्तमित्यर्थः। तत्र हि न ज्ञानायत्तः पुरुषार्थः किं त्वनुष्ठानायत्तः। अनुष्ठानं च निर्णयज्ञानमात्रमपेक्षते नानुभवमिह तु न तथा। अपि त्वर्थानुभवायत्तः। अनुभवश्च भूतवस्तुविषयो यावद्वस्तुविषया संभवनादिर्युक्त्या न निराक्रियते तावन्न स्वयमपरोक्षो भवतीति युक्तिरप्यत्रापेक्षते। श्रुतिश्च स्वमेव तर्कं स्वात्मसहायं दर्शयति श्रोतव्यो मन्तव्य इत्याद्येत्यर्थः॥ ५५६॥

ननु पदद्वयवृत्तेः सूत्रद्वयेन दर्शितत्वाद्वाक्यवृत्तेश्च समन्वयसूत्रेण

दर्शितत्वात्किं शास्त्रयोनित्वसूत्रेणेत्याशङ्क्य वेदनित्यत्वेन ब्रह्मण निखिलजगत्कारणत्वमाक्षिप्य शास्त्रयोनित्वसमर्थनेन जगत्कारणत्व मेव समर्थ्यत इत्यनेनापि पदवृत्तिरेव प्रतिपाद्यत इत्यभिप्रेत्याह—

त्वंपदार्थविषयं समन्वयं
तत्पदार्थविषयं ततः क्रमात्।
तस्य शेषमपरं च वर्णय-
न्नुक्तवानथ महावचोगतम् ॥ ५६० ॥

त्वंपदार्थविषयमिति। सूत्रकारः प्रथमसूत्रेण त्वंपदार्थविषयं समन्वयं वर्णयन् तदनन्तरद्वितीयसूत्रे तत्पदार्थविषयं समन्वयं वर्णयन् तस्य पदार्थसमन्वयस्यापरं शेषमनुकूलं च तृतीयसूत्रेण क्रमाद्वर्णयन्ननन्तरं महावचोगतं महावाक्यविषयं समन्वयमुक्तवानित्यर्थः ॥ ५६० ॥

ननु प्राधान्याद्वाक्यवृत्तिरेव प्रथमं किमिति न निरूपिता तत्राह—

त्वंपदस्य दृशि वृत्तिमद्वये
तत्पदस्य च निवेदयन्मुनिः।
प्रत्यगद्वयपरं समन्वयं
शेषिणं पुनरथाब्रवीत्तयोः ॥ ५६१ ॥

त्वंपदस्येति। दृशि चैतन्यमात्रे प्रत्यगद्वयपरं प्रत्यगद्वयाभेदपरं वाक्यार्थविषयमित्यर्थः। शेषिणं पदार्थप्रतीतिसाध्यवाक्यार्थप्रतीतिविषयतया शेषिणं कयोः शेषीत्यत आह—तयोरिति। पदवृत्त्योरित्यर्थः। वाक्यार्थप्रमितेः प्रधानत्वेपि पदार्थप्रतीतिसाध्यत्वात्तदनन्तरभावित्वं तद्विषयसमन्वयस्योचितमित्यर्थः ॥ ५६१ ॥

तस्मात्सूत्रत्रयेण विगलितविश्वविशेषचैतन्यस्य त्वंपदार्थस्य परोक्षानुभवपरमानन्दपरब्रह्मणस्तत्पदार्थस्य च सिद्धत्वात्तदुभय-पदार्थमादाय जीवब्रह्मैक्यमखण्डैकरसं तत्त्वमस्यादिवाक्यप्रमेय-मिति सिद्धमित्युपसंहारमभिप्रेत्य विस्तरेण प्रतिपादितं समन्वय-सूत्रार्थं संक्षिप्य दर्शयति—

शक्नोति सिद्धमवबोधयितुं च वाक्यं
शक्नोति कार्यरहितं वदितुं च वाक्यम्।
शक्नोत्यखण्डमवबोधयितुं च वाक्यं
शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥५६२॥

शक्नोति सिद्धमिति। सिद्धबोधितया वेदान्तवाक्यस्थमानान्तरसा-पेक्षत्वेन यदप्रामाण्यमापादितं तस्य ब्रह्मणो मानान्तरायोग्यत्वप्रद-र्शनेन निराकृतत्वात्सिद्धमप्यवबोधयितुं समर्थमित्याह-शक्नोति कार्येति। वाक्यस्य संसृष्टार्थपरत्वान्नाखण्डैकरसे ब्रह्मणि प्रामाण्यमिति यदा-पादितं तस्यापि सोऽयमित्यादावखण्डार्थत्वप्रदर्शनेन निराकृतत्वा-देकरसमपि ब्रह्मावबोधयितुं समर्थमित्याह-शक्नोत्यखण्डमिति। वाक्यस्य फलत्वसिद्धये प्रवृत्त्यनुकूलार्थपरतया तद्विरुद्धब्रह्मणि न प्रामाण्यमिति यदापादितं तस्यापि ज्ञानमात्रेणानर्थनिवृत्त्यानन्दावाप्तिलक्षणफलद्वय-सद्भावप्रदर्शनेन निराकृतत्वादत्युत्कृष्टं फलमपि समर्पयितुं समर्थ-मित्याह—शक्नोति मुक्तीति। अर्पयितुं ज्ञानद्वारा संपादयितुमित्यर्थः। तथा च वेदान्तवाक्यं मानान्तरनिरपेक्षमेव स्वप्रधानेऽखण्डैकरसे पर-मानन्दस्वरूपे ब्रह्मणि प्रमाणमिति सिद्धम् ॥ ५६२ ॥

एवमथातो ब्रह्मजिज्ञासेत्यादिसूत्रचतुष्टयार्थं विस्तरेण प्रति-पाद्येक्षत्याद्युत्तराधिकरणसिद्धं समन्वयविषयन्यायं तद्भाष्येण सिद्ध-वत्कृत्येदानीं समन्वयप्रतिपादनफलं दर्शयन्नध्यायार्थमुपसंहरति—

एतत्समन्वयनिरूपणमेवमस्मि-
न्बुद्धिस्थतामुपगते सति वाक्यजन्यम् ।
विज्ञानमद्वयगतं न ततोऽदन्य-
त्पुंसोऽपराधकृतमित्युदियात्प्रतीचि ॥ ५६३ ॥

इति श्रीसुरेश्वराचार्यपूज्यपादशिष्यश्रीसर्वज्ञात्म-
मुनेः कृतौ शारीरकमीमांसाभाष्यप्रकरण-
वार्तिके संक्षेपशारीरके प्रथमोऽध्यायः ।

एतत्समन्वयेति । एतदित्थं समन्वयनिरूपणं कृतमिति शेषः । एव-मनेन प्रकारेणास्मिन् प्रतिपादिते समन्वये बुद्धिस्थे सति अद्वयगत-मद्वयविषयं यद्विज्ञानं तदेव वाक्यजन्यं तत एतस्मात् ज्ञानादन्यद्भे-दादिविषयं ज्ञानं पुंसोपराधकृतं पुरुषापराधप्रयुक्तं शक्तितात्पर्यज्ञाना-त्पुरुषोत्प्रेक्षाकल्पितमिति प्रतीतिर्भवेन्नित्यशुद्धबुद्धमुक्तसच्चिदानन्दपर-ब्रह्मैवाहमित्यविचालिबुद्धिर्भवतीत्यर्थः ॥ ५६३ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगन्नाथाश्रमश्रीचरण-
चरणपरिचरणपरिप्राप्तविद्यनिखिलविद्वज्जनमनोहरश्री-
मन्नृसिंहाश्रमश्रीचरणविरचितायां संक्षेपशारीरक-
व्याख्यायां तत्त्वबोधनीसमाख्यायां सम-
न्वयाख्यः प्रथमोऽध्यायः समाप्तः ॥